॥ श्रीः ॥

काशी-संस्कृत-ग्रन्थमाला

१०८

( वेदविभागे (७) सप्तमं पुष्पम् )

महामहोपाध्याय-

मैथिल पं० श्रीशत्रुघ्नमिश्रविरचिता

# मन्त्रार्थदीपिका

बख्शी म. म. पण्डित श्रीमुकुन्दझा शर्म्मणा

टिप्पणीपुरस्सरं सुसम्पादिता ।

काशीहिन्दूविश्वविद्यालयाध्यापक—

वेदाचार्य पण्डित श्रीमार्तण्डशास्त्रिणा संशोधिता ।

( परिष्कृतं द्वितीयं संस्करणम् )

प्रकाशकः

जयकृष्णदास-हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस ।

वि० सं० २००६ ]　　मूल्य ५)　　[ सन् १९४९

# अत्र किञ्चिद्वक्तव्यम्

अथाऽत्र भारतवर्षे महाभारतसमरख्यातवीर्यस्य सुशर्म्मणो राज्ञः सुप्रसिद्धे वंशे समुद्भूतस्य धर्म्मचन्द्रसिंहस्याज्ञया तदाश्रितेन महामहोपाध्यायशत्रुघ्नशर्म्मणोवटादिभ्यश्चग्रन्थानत्र यथोट्टङ्कितनाम्नः समालोच्य "मन्त्रार्थदीपिका"नाम्ना सुप्रसिद्धोऽयं ग्रन्थो निबद्धः। अस्या उपयोगोऽल्पधियाङ्कृते यथेदानीं न तथा व्याख्यान्तरसाहाय्येन मन्त्रार्थालोचन इति परीक्ष्यग्रन्थेष्वियं समादृतेति विजानद्भिरस्माभिर्म्मुद्रापयित्वा प्रकाशिता। लेखोऽस्याः प्राचीनशैलीपरिशीलितः प्रतिभाति।

अस्याः प्रथमसंस्करणे ग्रन्थद्वयमेतदीयमुपलब्धमपि न नातिविशुद्धं स्खलितबहुलञ्चेति परिशोधने परिश्राम्यद्भिरत्रभवद्भिः स्वनामधन्यैर्विद्वद्भिः कार्यान्तरव्याप्तिप्रचित्तैर्बहुधा संशोधितोऽप्ययं सीसकाक्षरयोजकदोषेण तदीयवार्द्धकदृष्टिदोषेण चोपनता अशुद्धीः द्वितीयसंस्करणेऽस्मिन् काशीहिन्दूविश्वविद्यालयाध्यापकपण्डितप्रवरस्वनामधन्यमार्तण्डशास्त्रिवेदाचार्येण संशोधयित्वा ग्रन्थोऽयं पुनरपि प्रकाश्यते।

प्रत्याशास्ते-विद्वद्वंशवंदः<br>
प्रकाशकोऽस्याः<br>
**श्री जयकृष्णदास-हरिदासगुप्तः।**

# अथ विषयाणां सूचीपत्रम्

* श्रीगणेशाय नमः *

# मन्त्रार्थदीपिका ।

श्रुत्वा तातपणं सुदारुणतरं कामाभिरामाऽऽकृति-
र्जानक्या निभृतातिकातरदृशा साकूतमालोकितः ।
श्रीरामः स पुनातु धूर्जटिधनुर्भङ्गेन यस्याभवत् ।
रोमाञ्चस्य मिषेण गुरुहृदयानन्दादमन्दाङ्कुरः ॥ १ ॥

तरावालोलायां भयचकितगोपालतरुणी-
दृगन्तैरुन्मीलत्कुवलयदलश्रेणिसुभगैः ।
हठादापूर्णायां तपनतनयानीरनिवह-
भ्रमेण प्रक्षेप्तुं कृतकरपुटो रक्षतु हरिः ॥ २ ॥

बभूव राजन्यकुलावतंसः पुरा सुशर्मा किल राजसिंहः ।
निहत्य यो भारतसंयुगेषु चकारभूमीधरभूमिरक्षाम् ॥ ३ ॥
तदन्वये यो महनीयकीर्त्तिः सुवीरचन्द्रः क्षितिपः किलासीत् ।
चकार यः संयुगयज्ञभूमौ पशूनशेषानिव वैरिवीरान् ॥ ४ ॥
तस्मादसीमगुणसिन्धुरशेषबन्धुरासीत्समस्तजनगीतभुजप्रतापः ।
श्रीदेवकीतनयपादरतः प्रयाग-चन्द्रः-प्रजानयनरञ्जनपूर्णचन्द्रः ॥५॥
राजा श्रीरामचन्द्रः क्षितिपतितिलकः क्षोणिचक्रैकभूषा ।
तस्मादासीच्च दोषाकर इव जलधेः शोभमानः कलाभिः ॥ ६ ॥
येन क्षोणीधरेण क्षितिपतिनगरे स्थापिता धर्ममार्गाः ।
विद्याः किं वाऽनवद्या द्विजवरनिवहैः शिक्षिता रक्षिताश्च ॥ ७ ॥
तेन श्रीधर्मचन्द्रः समजनि धरणीपालमूर्द्धन्यरत्नं
यत्नादाराधितश्रीपतिपदकमलध्यानधाराधुरीणः ।
यस्मिन्नायच्छमाने रणशिरसि धनुर्दण्डमुद्दण्डवीर्ये ।
प्रत्यर्थिक्षोणिपालाः क्षणमपि समरे नासितुं सङ्क्षमन्ते ॥ ८ ॥
आदेशादथ राज्ञस्तस्य श्रीधर्मचन्द्रस्य ।
मन्त्रार्थदीपिकेयं क्रियते शत्रुघ्नशर्मणा सम्यक् ॥ ९ ॥
उवटे मन्त्रव्याख्या गुणविष्णौ(१) ब्राह्मणीयसर्वस्वे ।
वेदविलासिन्यामपि कौशलमीक्ष्यं तथापि मे सद्भिः ॥ १० ॥

---

(१) काश्मीर देशस्थवज्रटसुतोवटकृत शुक्लयजुःसंहिताभाष्ये । गुणविष्णुकृतसामवेदीय-मन्त्रार्थे । ब्राह्मणसर्वस्वग्रन्थः प्रसिद्धः । भट्टदेवकृतव्याख्यायां च ।

* श्रीगणेशाय नमः *

# मन्त्रार्थदीपिका ।

श्रुत्वा तातपणं सुदारुणतरं कामाभिरामाऽऽकृति-
र्जानक्या निभृतातिकातरदृशा साकूतमालोकितः ।
श्रीरामः स पुनातु धूर्जटिधनुर्भङ्गेन यस्याभवत् ।
रोमाञ्चस्य मिषेण गुरुहृदयानन्दादमन्दाङ्कुरः ॥ १ ॥

तराबालोलायां भयचकितगोपालतरुणी-
दृगन्तैरुन्मीलत्कुवलयदलश्रेणिसुभगैः ।
हठादापूर्णायां तपनतनयानीरनिवह-
भ्रमेण प्रक्षेप्तुं कृतकरपुटो रक्षतु हरिः ॥ २ ॥

बभूव राजन्यकुलावतंसः पुरा सुशर्मा किल राजसिंहः ।
निहत्य यो भारतसंयुगेषु चकारभूमीधरभूमिरक्षाम् ॥ ३ ॥
तदन्वये यो महनीयकीर्त्तिः सुवीरचन्द्रः क्षितिपः किलासीत् ।
चकार यः संयुगयज्ञभूमौ पशूनशेषानिव वैरिवीरान् ॥ ४ ॥
तस्मादसीमगुणसिन्धुरशेषबन्धुरासीत्समस्तजनगीतभुजप्रतापः ।
श्रीदेवकीतनयपादरतः प्रयाग-चन्द्रः-प्रजानयनरञ्जनपूर्णचन्द्रः ॥५॥
राजा श्रीरामचन्द्रः क्षितिपतितिलकः क्षोणिचक्रैकभूषा ।
तस्मादासीच्च दोषाकर इव जलधेः शोभमानः कलाभिः ॥ ६ ॥
येन क्षोणीधरेण क्षितिपतिनगरे स्थापिता धर्ममार्गाः ।
विद्याः किं चाऽनवद्या द्विजवरनिवहैः शिक्षिता रक्षिताश्च ॥ ७ ॥
तेन श्रीधर्मचन्द्रः समजनि धरणीपालमूर्द्धन्यरत्नं
यस्मादाराधितश्रीपतिपदकमलध्यानधाराधुरीणः ।
यस्मिन्नायच्छमाने रणशिरसि धनुर्दण्डमुद्दण्डवीर्ये ।
प्रत्यर्थिक्षोणिपालाः क्षणमपि समरे नासितुं सङ्कमन्ते ॥ ८ ॥
आदेशादथ राज्ञस्तस्य श्रीधर्मचन्द्रस्य ।
मन्त्रार्थदीपिकेयं क्रियते शत्रुघ्नशर्मणा सम्यक् ॥ ९ ॥
उवटे मन्त्रव्याख्या गुणविष्णौ(१) ब्राह्मणीयसर्वस्वे ।
वेदविलासिन्यामपि कौशलमीक्ष्यं तथापि मे सद्भिः ॥ १० ॥

(१) काश्मीर देशस्थवज्रटसुतोवटकृत शुक्लयजुःसंहिताभाष्ये । गुणविष्णुकृतसामवेदीय-मन्त्रार्थे । ब्राह्मणसर्वस्वग्रन्थः प्रसिद्धः । भट्टदेवकृतव्याख्यायां च ।

## अथ स्नानमन्त्रव्याख्या ।

उ॒रुꣳ हि राजा॒ वरु॑णश्च॒कार॒ सूर्या॑य॒ पन्था॒मन्वे॑त॒वा उ॑ ।
अ॒पदे॒ पादा॒ प्रति॑धातवेऽकरु॒ताप॑व॒क्ता हृ॑दया॒विध॑श्चित् ॥१॥

हि यस्माज्जलस्य राजा वरुणः सूर्याय सूर्यस्य पन्थां पन्थानम् उरु विस्तीर्णं चकार कृतवान्। तस्मान्मयाऽपि तेनैव यथाऽन्वेतवै-अन्वेतव्यम् अनुगन्तव्यमतस्तस्य पन्थानमहमनुगच्छामीत्यर्थः । उ पक्षान्तरे । स एव वरुणस्तमेव पन्थानम् अपदे आकाशे सूर्यस्य पादाः पादानां, प्रतिधातवे प्रतिधातुम् अर्पणाय । अकः कृतवान् ॥ अ विष्णुः तस्य पदैः, अपदे । उत-अपि च, स एव वरुणः हृदयाविधश्चित् हृदयाविधः पिशुनस्यापि अपवक्ता नियामकः । चिदप्यर्थे । तथा जलस्य राजा पिशुनस्यापि नियामको वरुणः आकाशे सूर्यस्य रश्मीनामर्पणाय विस्तीर्णं पन्थानं कृतवान् तं पन्थानमनुगच्छामीति याज्ञा वाक्यार्थः । अत्र सूर्यायेति षष्ठ्यर्थे चतुर्थी। (पा० २।३।६२ वा० ) पन्थामिति । पन्थानमित्यत्र नकारलोपः । छान्दसत्वात् । ( पा० ३।१।८५ ) पादा इत्यत्र षष्ठ्याः प्रथमा। सुपां सुपो भवन्ति, ( पा० ७।१।३९ ) "बहुषु बहुवचनम्" ( पा०१।४।२१ ) इत्येताभ्याम् । अन्वेतवै । इण् गतावित्येतस्मात् अनुपूर्वात् "कृत्यार्थे तवैकेन्केन्यत्वन" ( पा० ३।४।१४ ) इति तवै प्रत्ययः। "कृन्मेजन्त" ( पा० १।१।३९ ) इति अव्ययत्वं (१) ( पादा इति षष्ठीबहुवचनस्थाने छान्दसत्वादाकारः ) प्रतिधातव इति प्रतिपूर्वाद्धातेस्तुमर्थे ( पा० ३।४।९ ) तवे प्रत्यये रूपम् । अक इति करोतेर्लङःस्थाने प्रथमपुरुषैकवचने सिप् प्रत्ययः । "बहुलं छन्दसि" ( पा० २।४।७३ ) इति (२) बहुलवचनादिट् न भवति । धातोर्गुणः रपरत्वं "हल्ङ्याब्दिना" ( पा० ६।१।६८ ) सिप् विभक्तिलोपः । रेफस्य विसर्गः । हृदयाविध इति हृदयंविध्यतीति क्विप् (३) "नहि वृति०" (पा० ६।३।११६) इति दीर्घः ॥१।

नमो॒ वरु॑णाया॒भिष्ठि॑तो॒ वरु॑णस्य॒ पाशः॑ ॥२॥

योऽभिष्ठितो वरुणस्य पाशः । वरुणाय नमः अस्तु । कुतः वरुणस्य जलरूपः पाशः अभिष्ठितः आक्रान्तो गतः । अयं वाक्यार्थः । वरुणस्य

(१) एतद्व्याख्याभागैः "पादा" इति विसर्गरहितपाठमनुसृत्य । किन्तु पुरः सविसर्ग एव पाठ आश्रितोऽनेन । आकारविधानन्तु "व्यत्ययोबहुलम्" ( पा० ३।१।८५ ) इत्यनेन बोध्यम् ॥

(२) अत्र "षष्ठी युक्तश्छन्दसि वा" इति सूत्रं पठ्यते । तत्र वेति योगविभागात्सर्वे विधयश्छन्दसि वैकल्पिकाः । "बहुलंछन्दसी"त्यादिरस्यैव प्रपञ्च इति (सि० कौ०) भट्टोजिदीक्षिताः प्राहुः ॥

(३) कात्यायनकृतप्रातिशाख्यतृतीयाध्यायस्थेन ९७ "अश्वरश्मिसुमती"त्यादिना व्यधौ परे हृदयशब्दस्य दीर्घः ॥ पाणिनीयमते तु "नहिवृतिवृषिव्यधी" ( पा० ६।३।११६ ) त्यादिना दीर्घः।

जलरूपपाशाक्रमणेन या अप्रीतिर्जायते सा वरुणनमस्कारेणापनीयते तेन वरुणनमस्कारपूर्वकं जलावतरणं क्रियते इति ॥ २ ॥

ये ते शतँ्वरुण ये सहस्रँय्यज्ञियाः पाशा वितता महान्तः ॥
तेभिर्न्नोऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः॥३॥

हे वरुण ! ते तव ये यज्ञियाः यज्ञसम्बन्धिनः शतं पाशाः । सहस्रं वा विततः विस्तीर्णाः । पाशाः किं भूताः ? महान्तः उत्कृष्टाः ॥ तेभिस्तेभ्यो-ऽद्य नः अस्मान् सविता मुञ्चतु मोचयतु । उत समुच्चये । विष्णुश्च मोचयतु । विश्वे विश्ववर्त्तिनो (१) मरुतश्च । सुष्ठु यथास्यादेवम् । अर्काश्च 'मुञ्चन्तु' मोचयन्तु (२) ॥ ३ ॥

सुमित्रिया नऽआपऽओषधयः सन्तु
दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि
यं च व्वयं द्विष्मः ॥४॥

आपः ओषधयश्च नः अस्माकं सुमित्रियाः साधु मित्रत्वेनावस्थिताः सन्तु । दुर्मित्रिया इति । ता एव तस्मै दुर्मित्रिया दुष्टमित्रत्वेनावस्थिताः सन्तु । तस्मै-कस्मै ? योऽस्मान् द्वेष्टि । अर्थात् शत्रुः । यं च वयं द्विष्मः। अर्थात् शत्रुमेव ॥ ४ ॥

इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाँसुरे ॥५॥

इदं जगद्विष्णुर्विचक्रमे आक्रान्तवान् । विष्णुत्वात्सर्वप्राणिनोऽपि भूतेन्द्रियमनोऽजीवभावेन विशति इति विष्णुः । यद्वा "विषॢ व्याप्तौ" ( तु०प० ) क्नुः । कित्वाद्गुणाभावः । विष्णुर्व्यापकः । कि च स त्रेधा पदं निदधे । भूम्यन्तरिक्षस्वर्लोकेषु अग्निवायुसूर्यरूपेण त्रिधा पदं निहितवानित्यर्थः । किं च अस्यैव विष्णोरन्यत्पदान्तरं विज्ञानमयानन्दमयमद्वैतमक्षरमित्येवं लक्षणं समूढम् अन्तर्हितम् । अविज्ञातमिति यावत् । अर्थात् अकृतात्मभिः । पांसुर इति लुप्तोपममेतत् । पांसुल इति तु रलयोरेकत्वस्मरणात् । तथा च यथा पांसुले पांसुलमये प्रदेशे पिहितं अन्यद्द्रव्यान्तरं समूढं दर्शनायोग्यं भवतीति तात्पर्यम् । तदुक्तम्—"तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्" इति ( शु०य० अ० ६कं०५ ) ॥ ५ ॥

---

( १ ) वस्तुतोऽत्र विश्वे इत्यनेन विश्वेदेवानां ग्रहणम् । मरुतश्च पृथगेव । तेचैकोनपञ्चाशत्संख्याकाः पुराणेषु पठिताः । "वाताः पञ्चाशदूनकाः" इति । "मरुतौपवनामरौ" इति च कोशे श्रूयते ॥ ( २ ) मुञ्चतिर्मोक्षणे पठितः ( तु० प० ) इहान्तर्भावितण्यर्थः ॥

आपो॑ ऽअस्मान्मा॒तरः॑ शुन्धयन्तु घृतेन॑ नो घृत॒प्व॑ः पुनन्तु । विश्व॑ꣳ हि रि॒प्रं प्रवह॑न्ति दे॒वीः ॥ ६ ॥

आपः उच्यन्ते-या एता आपः जगतो मातरः निर्मात्र्यः । ता अस्मान् (१) शुन्धयन्तु शोधयन्तु । किं च नोऽस्मान् घृतेन पुनन्तु । यज्ञजलवीर्येण पवित्रान् कुर्वन्तु, किं भूताः आपः ? घृतप्वः घृतेन पुनन्ति-पावयन्तीति घृतप्वः । (२)घृतं हि अपां परमं तेजः पवित्रं च । तथा च श्रुतिः-"तद्वै सुपूतं यं घृतेन पुनन्ती"ति, "सुवन्ति प्राणा घृतप्राया"इति (३) च । मेध्यानोति गौतमः । "स्तुतिपूर्वं हि यज्ञ क्रियत"इति स्तौति-विश्वमिति । हि यस्माद्विश्वं सर्वं रिप्रं पापं देवीर्देव्यः भवत्यः प्रवहन्ति मार्जयन्ति "रिपो रिप्रमिति पापनामनी" इत्युवटः (४) । यस्मात् स्वभावत एव सर्वं रिप्रं पापं प्रकर्षेण नाशयन्ति भवत्यः । तस्मादिदमपि पापं नाशयत इत्यर्थः ॥ ६ ॥

उदि॒दा॒भ्य॒ꣳ शु॒चि॒रा॒पू॒तऽए॑मि ॥ ७ ॥

उदित्यनेन व्यवहितेन एमीत्यत्रान्वयः । तथा च आभ्यः अद्भ्यः शुचि सन् आपूतश्च । आसमन्ताद्भावेन पूतश्च । सन् । उदेमि-उद्गच्छामि । इच्छब्दोऽनर्थकः ॥ ७ ॥

मा न॑स्तो॒के तन॑ये॒ मा न॒ ऽआयु॑षि॒ मा नो॒ गोषु॒ मा नो॒ ऽअश्वे॑षु रीरिषः ।
मा नो॑ वी॒रान्रु॑द्र भा॒मिनो॑ वधीर्ह॒विष्म॑न्त॒ꣳ सद॒मित्त्वा॑ हवामहे ॥ ८ ॥

मानस्तोक इत्यस्य व्याख्यानं शतरुद्रियव्याख्याने द्रष्टव्यम् ॥ ८ ॥

इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृडय । त्वाम॑व॒स्युरा च॑के ॥९॥

हे वरुण ! अद्य (५)मे-मम हवम्-आह्वानं (६) श्रुधि शृणु । श्रुधीति संहितायां दीर्घः । अस्मांश्च आमृडय(७) । आसुखय । "मृडसुखने" (तु० पु०) कालान्तरं नापेक्षणीयमित्यर्थः । किं कारणं ? यतस्त्वामहमाचके कामये । आचक इति कान्तिकर्म्म । ( नि०२८।११) कथंभूतः कामये ? अव-

---

( १ ) "शुन्धशौचकर्मणि" ( चु० प० ) णिच् । ( २ ) "पूञ्पवने" ( क्र्या० उ० ) क्विप् । अन्तर्भावितण्यर्थः । ( ३ ) शतपथब्राह्मणे ३ काण्डेऽध्वरे १ प्रपाठके १ अध्यायस्य २ ब्रा० ११ कण्डिका । ( ४ ) अत्र संहिताभाष्यकारेणोवटेन पापार्थे रिपो रिप्रमिति पदद्वयं कथितं परन्तु यास्काचार्यकृतपञ्चाध्यायात्मके निघण्टौ एकविंशतिपृथ्वीनामान्तर्गतत्रयोदशन्नाम । तथापि रिफधातुरत्र हिंसार्थः "रिफकत्थनयुद्धनिन्दाहिंसादानेषु" ( तु० प० )कपि कृते फकारस्य पकारो "व्यत्ययो बहुलम्" ( पा० ३।१।८५ ) इति व्यत्ययेन । रिपपदस्यैवार्थो रिप्रशब्दस्यापि छान्दसत्वात् ॥ केवलमत्ररक् प्रत्ययोविशेषः ॥ ( ५ ) "निपातस्यचे" ( ६।३।१३६ )ति दीर्घः । ( ६ ) "श्रुशृणुपॄकृवृभ्यश्छन्दसि" ( पा० ६।४।१०२ ) इति हेर्धिः "द्व्यचोऽतस्तिङः" ( पा० ६।३।१३५ ) इति दीर्घः ।

( ७ ) आङत्र सर्वतोभावार्थे ॥

स्युरात्मनो धनं रक्षणं वा इच्छन्। अवं रक्षणं धनं च (१) ॥ ६ ॥

तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते

यजमानो हविर्भिः । अहेडमानो वरुणेह

बोध्युरुशꣳस मा न आयुः प्रमोषीः ॥ १० ॥

तदिति यदर्थं ज्ञेयः। अग्रे तच्छ्रवणात्। ऋत्विग्वदति—अहं ब्रह्मणा त्रयीलक्षणेन वन्दमानः स्तुवन् सन् यत्प्रयोजनार्थं त्वा त्वां यामि (२) उपसर्पामि तदेवायं यजमानः आशास्ते उपस्थितैः हविर्भिः। अतः हे वरुण! अहेडमानः अक्रुद्धः। इह कर्मणि वर्त्तमानः। नः अस्माकं प्रयोजनं यज्ञसमाप्तिलक्षणं बोधि बुध्यस्व(३) बुद्ध्वा च हे उरुशंस! बहुसंस्तव! नः अस्माकम्। आयुः। मा प्रमोषीः। मा खण्डय(४) ॥ १० ॥

त्वन्नोऽअग्ने वरुणस्य विद्वान्देवस्य

हेडोऽअवयासिसीष्ठाः। यजिष्ठो

वह्नितमः शोशुचानो विश्वा

द्वेषांꣳसि प्रमुमुग्ध्यस्मत् ॥११॥

हे अग्ने! त्वं नः अस्मान् प्रति। वरुणस्य देवस्य। हेडः क्रोधम्। (निघं२।१३) अवयासिसीष्ठाः। अपगमय अपनय—दूरीकुरु। कथं भूतस्त्वं? विद्वान् जाननः। "क्रोधम्" इति शेषः। अवयासिसीष्ठा इति यसु-प्रयत्ने (दि०प०) (५) इत्यस्य रूपं, तस्यावपूर्वस्य लिङ्(६)। यस्माच्च त्वं-यजिष्ठः यष्टृतमः ( यागातिशयकृत्तमः ) (७)वह्नितमो—बोढृतमः (८) अर्थाद्धविषामतिशयेन वोढा प्रापकोऽसीत्याशंसा वाक्यार्थः। शोशुचानः उत्तरोत्तरं देदीप्यमानश्च(९) भवसि। तस्मात्प्रार्थये अस्मत् अस्मत्तः

---

( १ ) अत्रावनमवः। अवत्यनेन वा। तत इच्छार्थक्यजन्तात् ( पा० ७।१।८ ) "क्याच्छन्दसि" ( पा० ३।२।१७० ) इत्युप्रत्ययः। क्यचि च सुगागमः (पा० ७।१।५१ वा०) लालसायाम् ॥

( २ ) वस्तुतस्तु याचामीत्यत्र मध्यमवर्णलोपः पदव्यत्ययश्चेति नैरुक्तसमयः (नि० २।१।३) तथाच निघण्टौ याच्ञाकर्म्मसुद्वितीयो "यामी"ति पठितः ( ३।१९ )।

( ३ ) अनुजानीहि "हुझल्भ्योर्हेर्धिः ( पा० ६।४।८७ ) "वा छन्दसी" ( पा० ६।४।८८ )ति हेरपित्वाद्गुणः घिलोपश्छान्दसः ( पा० ३।१।८५ ) ( ४ ) मा चोरय। "मुषस्तेये" ( क्र्या०प० ) लुङ् "न माङ्योग" ( पा० ६।४।७४ ) इति अडभावः। पूर्णमायुश्च देहीत्यर्थः।

( ५ ) महीधरेण त्वयमुपक्षये पठितः। सचाऽवेत्युपसर्गयोगाद्बोध्यः।

( ६ ) आशिषि ण्यन्तस्येदं रूपम्। "णिचश्च" ( पा० १।३।७४ ) इत्यात्मनेपदम्।

( ७ ) अत्रातिशयेन यष्टेत्यर्थे "अतिशायने तमबिष्ठनौ" ( पा० ५।३।५५ ) इति इष्ठनि "तुरिष्ठेमेयस्सु" ( पा० ६।४।१५४ ) इति तृचोलोपः ॥ ( ८ ) एतद्व्याख्यानं वह्निर्वोढेति निरुक्तसमयात् ( नि० ३।१।४ )। ( ९ ) शाचतेर्दीप्त्यर्थान्नैरुक्ताद्यङन्ताल्लटः शानच्। पुनःपुनरतिशयेन वा शोचते दीप्यत इत्यर्थः।

विश्वा विश्वानि सर्वाणि (१)द्वेषांसि दौर्भाग्यानि प्रमुमुग्धि प्रमोचय(२)। हे अग्ने ! त्वमस्मान् जनासि अतोऽस्माकमस्मिन् कर्मणि प्रमादजनितवैगुण्यकृतं वारुणं क्रोधमपनय। अस्माकं दौर्भाग्यानि मोचयेति प्रार्थना वाक्यार्थः। हेड इति हिडि गत्यनादरयोः ( भ्वा० आ० ) इत्यस्य प्रयोगः (३) ॥ ११ ॥

सत्त्वन्नोऽअग्नेऽवमो भवोती नेदिष्ठोऽ
अस्याऽउषसोव्युष्टौ ॥ अवयक्ष्व नो व्वरुणꣳ
रराणो वीहि मृडीकꣳ सुहवो नऽएधि ॥ १२ ॥

हे अग्ने ! सत्वमेवं प्रार्थ्यमानो नः अस्माकम् । अवमो भव। अवितृतमो भव। पालयितृतमो भव(४)। ऊती ऊत्या तर्पणेन(५)गत्या वा नेदिष्ठश्च निकटतमश्च भव। कस्मिन्समये प्रभातस्य अस्या उषसो व्युष्टौ समाप्तौ विच्छेदावच्छिन्ने काले। अस्मिन्नेवाह्नीत्यर्थाभिप्रायः। ततः अवयक्ष्व। अवगत्य च नः अस्माकं वरुणं यज (६) रराणः रममाणः (७)सन्। यद्वा रादाने हविर्ददानः। ततो वीहि भक्षय(८)अर्थात्पुरोडाशं, किं भूतं?मृडीकं सुखकरम्। ततो नः अस्माकं सुहवः स्वाह्वानः। एधि भव (९)॥१२॥

माऽपो मौषधीर्हिꣳसीर्धाम्नो धाम्नो राजँस्ततो
व्वरुण नो मुञ्च ॥ यदाहुरघ्न्याऽइति व्वरुणेति
शपामहे ततो व्वरुण नो मुञ्च ॥ १३ ॥

हे वरुण ! ओषधीः मा हिंसीः। आपश्च मा हिंसीः। किं च हे राजन् वरुण ! ततो धाम्नः पापसमन्वितात् स्थानात् (१०)। नः अस्मान्मुञ्च मोचय। यतो यतो बिभिम इत्यभिप्रायः। यदाहुरिति। किं च हे वरुण! तत-

---

(१) "शेश्छन्दसि बहुलम्" (पा० ६।१।७०) इति शिलोपः। (२) मुचेर्मोक्षणार्थाद्व्यत्ययेन शपःश्लु (पा०।२।४।१७६) रिति द्वित्वम् (पा० ६।१।१०) लोटोमध्यमपुरुषैकवचने रूपम् ॥

(३) असुनि औणादिके गुणः। नलोपोऽत्रार्षः। एवं द्वेषांसीत्यत्रापि असुन् गुणाविति बोध्यम् "द्विष् अप्रीतौ" (तु० प०)।

(४) अवतीत्यवोऽतिशयेनाबोऽवतमः। सएवावमः तलोपश्छान्दसः। (५) वस्तुतोऽवनेन (रक्षणेन) "अवने ऊति"रित्यमरात्। निपातितोऽयम् (पा० ३।३।९७)॥ (६) अवपूर्वाद्यजेर्लोटि शपोलुक्। यद्यप्ययं नाशनार्थस्तथापिधात्वन्तरयोगात्स्वार्थमेव वक्तीति–उवटः प्राह। अतएवास्य धात्वन्तरयोगोऽत्र तेन कृतः अवगत्ययज इति बोध्यम् ॥ (७) एतच्च सायणभाष्यमनुसृत्य व्याख्यातम्। निरुक्तेतु "रराणोरातिरभ्यस्त" इत्युक्तन्तेन दानार्थात् (अ० प०) लटश्शानच् (पा० ३।२।१२९) व्यत्ययेन श्लुर्द्वित्वमत्रबोध्यम् ॥ (८) "वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु" (अ० प०) ततो लोटि मध्यमैकवचने रूपम्। (९) अस्तेर्लोटि "ध्वसोरेद्धावभ्यासलोपश्च" (पा० ६।४।११९) इत्येत्वम्। (१०) "धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः" इति मेदिनी ॥

स्तस्मादेनसः नोऽस्मान्मुञ्च मोचय। अर्थाद्गोवधात् । यत् यतः गावः अघ्न्याः (१) अहिंस्या इत्याहुः। अर्थाद्वेदस्मृतिलोकवाक्यानि वयं च। इति अनेन प्रकारेण ताः शपामहे हिंसामः (२) अहिंस्याः पूजनीयाश्च हिंसामेति तद्धिंसाजनितं पापं नाशयेति वाक्यार्थः ॥ १३ ॥

उदु॑त्त॒मँव्व॑रुण॒ पाश॑म॒स्म्मदवा॑ध॒मं

व्वि म॑ध्य॒मᳬं श्र॑थाय ॥ अथा॑ व्व॒यमा॑दित्यव्र॒ते

तवाना॑गसो॒ ऽअदि॑तये स्याम ॥ १४ ॥

उत् इत्ययमुपसर्गः श्रथायेत्यत्र सम्बध्यते(३)हे वरुण! अस्मत् अस्मत्तः। उत्तमम् उद्ध्वस्थितं तावत् । पाशमुच्छ्रथाय श्लथीकृत्योद्ध्वं नय। अधमं च पाशम् अवाचीनं श्लथय। मध्यमं च पाशं विश्लथय। तथैवं कृतेसति हे आदित्य! अदितेः पुत्र! तव व्रते कर्मणि (४) वर्त्तमानाः। अनागसः। अनपराधा (५) वयम्। अदितये-अदीनतायै। स्याम भवेम॥१४॥

मु॒ञ्चन्तु॑ मा शप॒थ्या॒दथो॑ वरु॒ण्या॒दु॒त ॥ अथो॑

य॒मस्य॒ पड्वी॑शा॒त्सर्व्व॑स्माद्देवकिल्वि॒षात् ॥१५॥

आपः मा मां शपथ्यात्-शपथनिमित्तात्। किल्विषात् मुञ्चन्तु मोचयन्तु। अथोऽपि च वरुण्यात् वरुणसम्बन्धिनः पाशात् मुञ्चन्तु। अथो अनन्तरम्। उत अपि च यमस्य यमसम्बन्धिनः। पड्वीशात् बन्धनात् मुञ्चन्तु। सन्दानं बन्धनं सर्व्वन्तं पड्वीशमिति दृश्यत इत्युवटः। किं च सर्वस्माद्देवसम्बन्धिनः किल्विषात् पापात मुञ्चन्तु ॥ १५ ॥

अव॑भृथ निचुम्पुण नि॒चेरु॑रसि निचु॒म्पु॒णः॑ ।

अव॑ दे॒वैर्दे॒वकृ॑त॒मेनो॑ऽयासिष॒मव॒ मर्त्यै॒र्म्मर्त्य॑-

कृतं पुरु॒राव्णो॑ देव रि॒षस्पा॑हि ॥ १६ ॥

हे अवभृथ(६) यज्ञ! हे निचुम्पुण! नीचैः कणन! (७)यस्त्वंनिचेरुरसि

(१) अघ्न्या इति गोनाम (निघं० २।११)। प्रकरणादिहानुबन्ध्याविषये बहुवचनम्। बहुवचनमनूबन्ध्याविषयेऽर्थवत्। एकानुबन्ध्याविषये तु पूजार्थमित्युवटमहीधरौ ॥

(२) शपतिर्हिंसार्थं इत्युवट–महीधरौ। निरुक्ते तु "शेपः शपतेः स्पृशतिकर्म्मणः" (३।४।२१) इत्युक्तम्। पाणिनीये त्वाक्रोशे (भ्वा० उ०) पठ्यते। तदत्र धातूनामनेकार्थत्वमित्युक्तिरेव शरणम् ॥ (३) "तेप्राग्धातोः" "छन्दसि परेऽपि" "व्यवहिताश्च" (पा० ३।४।८०–८१–८२) इति स्मरणात्। ते गत्युपसर्गसंज्ञका इति तदर्थः ॥ (४) तथाच निरुक्ते–"व्रतमिति कर्मनाम–वृणोतीतिसतः"। (२।४।१४) इति। (५) "आगोऽपराधः" इत्यमरः।

(६) अवाचीनानि पात्राणि जलमध्ये भ्रियन्ते भ्रियन्ते यस्मिन्यज्ञविशेषे सोऽयमवभृथस्तत्सम्बोधने ॥ (७) "उपांश्ववभृथेष्टया चरन्ती"तिश्रुतिः। निपूर्वाच्चोपतेः (भ्वा० प०) उणोमुमागमश्चौणादिकः। यद्वा नीचैरल्पशब्दैरस्मिन्कणन्ति कर्म्मकुर्वन्तीति निचुम्पुणोयज्ञः। "चीय-

नीचैश्चरणोऽसि(१) निचुम्पुणः नीचैःक्रणनश्च तं त्वां प्राप्यैव देवकृतम् एनः-पापम् , अवायासिषम्-अपनीतवानहम् । देवविषये कृतं देवकृतं, कैः सह ? देवैः (२)। किं च मर्त्यैर्मनुष्यैः सह । अर्थात् ऋत्विग्भिः सह । मर्त्यकृतं (३)पापम् अवायासिषं, मर्त्यविषये कृतं मर्त्यकृतम् । अतस्त्वं हे अवभृथ ! देवरिषस्पाहि । देवसम्बन्धिनः रिषः वधात्-पापात् पाहि-रक्ष । रिषतिर्हिंसार्थः क्विबन्तः (४)। कथंभूताद्वधात् ? पुरुरावृणः (अ०प०) "रादाने" पुरुशब्दो बह्वर्थः । बहुकामोपभोगसन्तापानां(५) दातुः । अर्थात्संसारलक्षणाद्वधात् । यद्वा रुशब्दे रुवन्ति शब्दं कुर्वन्ति प्राणिनोऽस्मिन् संसार्य्यमाणा इति पुरुरावा तस्मात् पुरुरावृणः संसारादित्यर्थः ॥ १६ ॥

इदमापः प्रवहतावद्यं च मलं च यत् ॥
यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम् । आपो
मा तस्मादेनसः पवमानश्च मुञ्चन्तु ॥१७॥

हे आपः ? इदम् पशुसम्बन्धि पापं,(६)प्रवहत-अपनयत । किं च यत् अवद्यमवदनीयमभिशापादि तत्प्रवहत । यच्च मलं शरीरसंलग्नं तत्प्रवहत । यच्चानृतं मिथ्यैवमिति दुद्रोह-द्रुग्धवानस्मि(७) । अर्थात्परिचरणीयं-सेवनीयं, यच्चाभीरुणमनपराधिनमभिशेपेऽभिशप्तवानस्मि । अपराधी हि बिभेति । अतो भीरुशब्देनापराध्युच्यते । यद्वाऽभिलुनाति छिनत्ति मर्माणि यदुच्चरितं सत्तद्भीरुणं तस्मादेनसः-पापात् आपः मा माम् मुञ्चन्तु-मोचयन्तु पृथक्कुर्वन्तु । लस्य रश्छान्दसः। पवमानश्च सोमो वायुर्वा मुञ्चतु-मोचयतु इति वचनं विपरिणमितव्यम् ॥ १७ ॥

हविष्मतीरिमा ऽआपो हविष्माँ२॥ ऽआ विवासति ॥

---

स्थूणव्रणभ्रूण" इत्यादिना नीचैः शब्दोपपदात् क्वणतेरुणक्प्रत्ययान्तो निपातः । धातोः पुंभावः । उपपदस्य निचुम्भावश्च निपातितः । ( १ ) नीचैश्चरतीति निचेरुः । महीधरस्तु—यद्यपि त्वंनिचेरुरसि । नितरां चरतीति निचेरुः । नितरां गमनशीलोऽसि । तथाप्यत्र निचुम्पुणो मन्दगमनो भव । किम्प्रयोजनमितिचेत्तत्राह । देवैरित्यादि । अत्र "चुपमन्दायाङ्गतौ" इत्यस्यैव निपात उक्तः ।

( २ ) द्योतनात्मकैरस्मदीयैरिन्द्रियैः । देवकृतं—हविःस्वामिषु देवेषु कृतमेनः पापं यदस्ति तदवायासिषमस्मिञ्जलेऽहमवनीतवानस्मि । ( ३ ) मर्त्येषु यज्ञदर्शनार्थमागतेषु कृतं यदवज्ञारूपमेनः पापमस्ति तदहमस्मिञ्जलेऽवायासिषमवनीतवानतोऽस्मत्यक्तमिदं पापं यथा त्वां न व्याप्नोति तथा निचुम्पुण मन्दङ्गच्छेति महीधरव्याख्यानम् ॥ ( ४ ) "पातौ च बहुलम्" ( पा० ८।३।५२ ) ( इति सत्वम् । ( ५ ) पुरु—बहु विरुद्धं फलं राति ददातीति पुरुरावा तस्मात् । "रादाने" ( अ० प० ) "आतोमनिन्क्वनिब्वनिपश्च" ( पा० ३।२।७४ ) इतिवनिप् । पुरु रुवन्त्यत्रेत्यर्थे तु रौतेरधिकरणे वाहुलकादौणादिको बोध्यः । ( ६ ) पशुसंज्ञपननिमित्तम् ।

( ७ ) "द्रुहजिघांसायाम्" ( दि० प० ) लिट् । प्रमादोऽत्र मूलमिति स्वक्रियायां परोक्षत्वमुपपादनीयम् ॥

हविष्मान्देवोऽ अद्ध्वरो
हविष्माँ२॥ऽअस्तु सूर्य्यः ॥ १८ ॥

इमा आपः हविष्मतीः-हविषा संयुक्ताः। हविष्मान्हविषा संयुक्तोऽर्थाद्यजमानः। आविवासति-परिचरति। विवासतिः पारिचर्य्यायां वर्त्तते। (निघं ३।५) देवो अध्वरो यज्ञो(१) हविष्मानस्तु "आभिरद्भिरिति" शेषः। सूर्य्योऽपि हविष्मानस्तु। श्रुतिः-"एतस्मै वै गृह्णाति य एष तपति" इत्यभिप्रायः ॥ १८ ॥

देवी रापोऽअपान्नपाद्यो वंऽऊर्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ॥
तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो
येषां भागस्स्थ स्वाहा ॥ १९ ॥

हे देवीः! देव्यः! आपः! वः-युष्माकम् अपाम् नपात्-अपत्यरूपो य ऊर्मिरन्तर्जलसङ्घातः कल्लोलस्तं शुक्रपेभ्यः दत्त-प्रयच्छत। शुक्रशब्द उपलक्षणार्थः। शुक्रादिग्रह(२)पतिभ्यो देवेभ्य इत्यर्थः। ते के? येषां देवानां यूयं यज्ञाङ्गभागः अंशः स्थ भवथ। कल्लोलः किंभूतः? हविष्यः(३) यज्ञियः। पुनः किंभूतः? इन्द्रियावान्-इन्द्रियशब्देन वीर्यन्तद्वानित्यर्थः। छान्दसत्वाद्दीर्घत्वम्। मदिन्तमः-मादयितृतमः। "नाद्घस्य (पा० ८।२।१७) इति तमपि नुगागमः। पुनः किंभूतः? देवत्रा। देवान्प्रति यायी "देवमनुष्य०" (पा०५।४।५६) इत्यादिना त्राप्रत्ययः ॥

कार्षिरसि समुद्रस्य त्वा क्षित्याऽउन्नयामि ॥
समापोऽअद्भिरग्मत समोषधीभिरोषधीः ॥ २० ॥

हे आपः! (जल!) त्वं कार्षिरसि-आकृष्टमसि(४)। "कृष विलेख

(१) तथा च निरुक्तम्-"देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता" इति। अध्वरस्तु-यज्ञ एव-तथा च निरुक्तम्-"अध्वर इति यज्ञनाम। ध्वरतिर्हिंसाकर्म्मा तत्प्रतिषेधः" इति। हिंसाकर्म्मा हिंसार्थकः। (निघं२।१९) ततो घञर्थे कः (पा० ३।३।५८ वा०) अधिकरणे। न ध्वरोऽध्वरः। अहिंस्रो हि यज्ञः। यत्किञ्चित्पशुबीजादिकमत्र ध्वर्यते (हिंस्यते) साऽभ्युदयहेतुत्वात्तेषां हिंसा न भवति। द्वेषपूर्वको हि प्राणिवधो हिंसा। तथा च देव इति अध्वरस्य विशेषणमुक्तार्थकम्॥ (२) वस्तुतस्तु शुक्रादीन्सोमग्रहान्पिबन्तीति शुक्रपास्तेभ्यः। यद्वा शुक्रं दीप्तं सोमं पिबन्तीति। (३) हविषे हितः। यत् (पा० सू० ५।१।५)॥ (४) यद्वा-कर्षतीत्येवं शीलः कार्षिः। अन्तर्गतशमला-(कलुषा)-पनेताऽसि। तदाह तित्तिरिः-"कार्षिरसीत्याह शमलमेवासामुपप्लावयतीति समुद्रस्य त्वेति तेन गृह्णाति" (का० ९।३।९) मैत्रावरुणचमसेन तद्भागस्था अपो गृह्णन्तीति सूत्रार्थः। लिङ्गवचनव्यत्यय आर्षः।

ने" (स्वा०प०) देवतया भक्षितमित्यर्थः। त्वा-त्वां समुद्रस्य-जलस्य। अक्षित्यै—अनुपक्षीणतायै उन्नयामि-उद्गृह्णामि। "आपो वै समुद्र" इति श्रुतेः। (३।६।३।२७) किं च हे आपः! अद्भिः समग्मत-सङ्गच्छत(१) ओषधीभिर्व्रीहियवादिभिः सह ओषधीरोषधयः(२) मुद्गमसूरादिकाः समग्मत-संगच्छन्ताम्। तेन ताः सम्यगुत्पद्यन्ताम्। अपां कारणत्वादोषधीनामिति भावः॥ २०॥

अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती-
राजस्वश्चितानाः। याभिर्मित्रावरुणाव
भ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः॥ २१॥

या अपः देवा अगृभ्णन्नगृह्णन् (३)। ताः 'गृह्णामी"ति शेषः। किं भूताः आपः? मधुमतीः—स्वादुमतीः। पुनः किं भूताः? ऊर्ज्जस्वतीः-अन्नवतीः। ऊर्ज्जमन्नम् (४)। पुनः किंभूताः? राजस्वः राजानं याः सुवन्ते जनयन्ति ता राजस्वः। पुनः किं भूताः? चितानाः-चेतयमानाः परिदृष्टकारिण्यः। किं च याभिरद्भिर्मित्रावरुणौ अभ्यषिञ्चन्-अभिषिक्तवन्तः देवा इत्यनुवृत्तिः। याभिर्देवा अत्यरातीः अरातीः शत्रुसेनाः(५) अतीत्य इन्द्रम् अनयन्-आनीतवन्तः॥ २॥

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव॥
पूतं पवित्रेणेवाज्यमापः-शुन्धन्तु मैनसः २२॥

सन्ध्याप्रकरणे लेखनीयम्॥ २२॥

शन्नो देवीरभिष्टय ऽआपो भवन्तु पीतये॥ शं योरभिस्रवन्तु नः॥२३॥

आख्ये ऽन्वेष्यम्॥ २३॥

अपां रसमुद्वयसं सूर्ये सन्तं

---

(१) सम्पूर्वाद्गमेर्लङि तङि प्रथमपुरुषबहुवचने शपि लुप्ते "गमहन"—(पा०६।४।९८) इत्युपधालोपे रूपम्। लोडर्थेऽत्र लङ् व्यत्ययेन (पा० ३।१।८५)॥ (२) अत्र "वाच्छन्दसि" (पा० ६।१।१०६) इति वा पूर्वसवर्णदीर्घः॥ (३) "हृग्रहोर्भश्छन्दसि" (पा० ३।१।८४ वा०) इति हस्य भादेशः॥(४) यद्यपि—"ऊर्जस्वत्य" इति नदीनामसु पठ्यते (निघं० १।१३) तथापीह ऊर्गित्यन्ननामसु (निघं० २।७) पाठा—"दूर्जबलप्राणनयोः" (चु० प०) इत्यस्मादसुनि ऊर्जस् शब्दोऽप्यन्नार्थे ऊर्जशब्दश्च श्रुतौ (य० वा० सं० २८।१६) पठ्यते। "इषमूर्जम्" इति। ऊर्जयतीत्यर्थतोऽप्यात्। ततोऽस्त्यर्थे मतुपि (पा० ५।२।९४) ङीपि ऊर्जस्वतीति भवति।

(५) यद्यप्यरातिशब्द आग्नेयकोशे शत्रुपर्याये पठ्यते न तु तत्सेनायाङ्किन्त्विह तत्सम्बन्धितया ता अपि गृह्यन्ते। यथा च श्रुतेऽन्यत्रापि—"या नो दूरे तडितो या अरातयोऽभिसन्ति जम्भया ता अनप्नसः" (ऋ० सं० २।६।१०) इति। अत्रारातीः शत्रुसेना इति सायणादयः॥

समाहितम् । अपाᳬं रसस्य यो रसस्तं वो

गृह्णाम्युत्तमम् ॥ २४ ॥

अपां यो रसः वायुः । श्रुतिश्च-"एष वा अपाᳬंरसो योऽयं पवत" इति, (४।१।२।६) तं गृह्णामि । किंभूतं रसम् ? उद्वयसम्-उद्गतं वयोऽन्नं (निघं० २।७) यस्मात्तत् उद्वयसम् । (१)सूर्ये समाहितं-समारोपितं (स्थापितं) सन्तं, किं च हे आपः !(२) अपां रसस्य वायोर्यो रसः सारः स प्रजापतिस्तमपि वः (३) युष्मदर्थम् गृह्णामि । कथंभूतम् ? उत्तमम्-उत्कृष्टतमम् ॥ २४ ॥

अपो देवीरुपं सृज मधुमतीरयक्ष्माय

प्रजाभ्यः । तासामास्थानादुज्जिहता-

मोषधयः सुपिप्पलाः ॥ २५ ॥

प्रक्रमादग्निरुच्यते-हे अग्ने ! या देवीः-देवताः । अपः-जलानि, उपसृज-उपसृजसि(४)विक्षिपसि अर्थाद्वृष्टिरूपाः । तासां भूमिगतानाम् आस्थानात्समीपात्(५) ओषधयः उज्जिहताम्—उद्गच्छन्तु । किंभूताः ओषधयः ? सुपिप्पलाः-सुफलाः । (६) पिप्पलं फलमुच्यते । आपः किंभूताः ? मधुमतीः-मधुमत्यः (रसवत्यः) । किमर्थं विक्षिपसि ? प्रजाभ्यः-प्रजानाम् । षष्ठ्यर्थे चतुर्थी (पा० २।३।६२ वा०) अयक्ष्माय-अयक्ष्मत्वाय । भावप्रत्ययस्य लोपः । (७)यक्ष्मा-व्याधिः ॥ २५ ॥

पुनन्तु मा पितरः सोम्यासः पुनन्तु

मा पितामहाः पुनन्तु प्रपितामहाः ॥

पवित्रेण शतायुषा ॥

पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः ॥

पवित्रेण शतायुषा विश्वमायुर्व्यश्नवै ॥ २६ ॥

---

(१) वायुनैव हि धान्यानि निष्पद्यन्ते । (२) प्रजापतिर्हिरण्यगर्भः स हि यज्ञ—लोक—काला-ऽग्नि—वायु—सूर्यर्ग्यजुःसामादिवपुः । (३) वःशब्दोऽनर्थको वा वायुं तदभिमानिनं प्रजापतिञ्च गृह्णामि । (४) अत्र लडर्थे व्यत्ययेन (पा० ३।१।८५) लोट् ।

(५) यद्यपि आतिष्ठन्त्यस्मिन्निति-अधिकरणल्युटोपवेशनस्थानं सभा' वाऽऽस्थानपदेनोच्यते तथापीह समीपे लक्षणाऽऽश्रितेति क्लिष्टम् । (६) यद्यपि—पिप्पलमित्युदकनामसु (निघ० १।१२) पठ्यते । तथापीह—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति श्रुतौ पिप्पलपदेन तत्फलाभिधानादिहापि स एवार्थोऽनुसृतः ॥ (७) यक्ष्मशब्दोऽकारान्त एवात्राश्रितो लक्षणा स च भावप्रधानः । "द्व्येकयो०" (पा० ५।४।२२) इति वत् । लोपशब्दोऽदर्शनार्थस्तन्मूलं च यथोक्तमत्र बोध्यम् ।

मा-मां पितरः पुनन्तु-पवित्रं(१) कुर्वन्तु । किं भूताः? सोम्यासः—सोम्याः(२) सोमसम्पादिनः । किं च पितामहाः पुनन्तु । प्रपितामहाश्च । केन? पवित्रेण(३) । किंभूतेन? शतायुषा-शतम् आयुर्यस्मात्तेन । यद्वा कारणे कार्योपचारात्पवित्रमेव शतायुः(४) । पुनन्तु मा पितामहा इत्यस्यार्थः । तथा मा-मां पितामहाः पुनन्तु प्रपितामहाश्च पुनन्तु । आदरार्थोऽयमभ्यासः । विशेषार्थो वा । तथा मां पितृपितामहप्रपितामहाः पुनन्तु यथा विश्वं सर्वम् आयुः अहं व्यश्नवै-व्याप्नुयां(५) प्राप्नुयामित्यर्थः ॥ २६ ॥

अग्न॒ऽआयू॑ᳬषि पवस॒ऽआसु॒वोर्ज्ज॒मिषं॑

च नः ॥ आ॒रे बा॑धस्व दु॒च्छुना॑म् ॥ २७ ॥

अग्ने! यतस्त्वं स्वभावत एव आयूंषि पवसे । आयुः प्रापकानि कर्माणि चेष्टयसे । अतः प्रार्थये । ऊर्ज्जं दध्याद्युपसेचनम् इषं च व्रीह्यादिकम् । नः-अस्माकम् आसुव-अनुजानीहि । एतद्धि जीवनहेतुरित्यभिप्रायः । किं च आरे-दूरे (निघं० ३।२६) एवावस्थितानान्दुच्छुनां(६) दुष्टशुनां बाधस्व-पीडितान् कुरु। शुना चात्र दुर्जनप्रभृतयो लक्ष्यन्ते। तै रहितो हि पुरुषः परमायुः प्राप्नोतीत्यर्थः ॥ २७ ॥

पु॒नन्तु॑ मा देवज॒नाः पु॒नन्तु॒ मन॑सा॒

धियः॑ ॥ पु॒नन्तु॒ विश्वा॑ भू॒तानि॒

जात॑वेदः पु॒नी॒हि मा॑ ॥ २८ ॥

देवजना-देवानुगामिनो जनाः । मा-मां पुनन्तु । मनसा संयुक्ताः धियो बुद्धयः ( निघं० २।१ ) कर्माणि वा पुनन्तु । किं च विश्वा-विश्वानि (७)सर्वाणि भूतानि च पुनन्तु । हे जातवेदः! अग्ने त्वमपि मा-मां पुनीहि ॥ २८ ॥

प॒वित्रे॑ण पुनीहि मा शु॒क्रेण॑ देव॒ दीद्य॑त् ॥

---

( १ ) पावनश्च पापाऽपनोदः इत्युव्वटः । शोधयन्त्विति महीधरः । तत्र शुद्धिः फलग्रहणयोग्यता ॥ ( २ ) अत्र "तस्मै हितम्" ( पा० ५।१।५ ) इति यत्प्रत्ययः । सोमाय हितास्तत्संपादिन इत्यर्थः ॥ ( ३ ) पवित्रमिह—प्रकरणात्कातीयमेव न तु गोऽश्ववालकृतम् । तथा च कात्यायनः—"अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" इति ॥

( ४ ) तथा च येन पूतः शतायुर्भवति—तत्साधनत्वात्तदपि शतायुःपदेनोच्यते । (५) "अशूव्याप्तौ" (स्वा० उ०) लोट् प्रार्थनायाम् ॥ ( ६ ) दुष्टाश्च ते श्वानश्चेति कर्म्मधारयः । कर्म्मणि षष्ठी । ( पा० २।३।६८ ) ।दुष्टान् शुनः सारमेयप्रायान्दुर्जनान्बाधस्व नाशय । तैस्तैरुपायैरित्यर्थः । अत्र "न लोका०" इति ( पा० २।३।६९ ) निषेधाभावश्छान्दसः ।

( ७ ) "शेश्छन्दसि बहुलम्" ( पा० ६।१।७० ) इति शेर्लोपः ।

अग्ने क्रत्वा क्रतूँ१ऽरनु ॥ २९ ॥

हे अग्ने ! देव ! पवित्रेण–कुशमयेन । किंभूतेन ? शुक्रेण–शुद्धेन (१)त्वं मा-मां पुनीहि । किंभूतस्त्वम् ? पुनः पुनः दीव्यतीति दीद्यत्(२) दीप्यमानः । किंच हे देव ! अग्ने ! क्रत्वा–क्रतुना कर्मणा ( निघं० २।१ ) च तांस्तान् क्रतून्-यज्ञान् अनुलक्ष्य(३) क्रतौ क्रतौ सर्वस्मिन्यज्ञे मा-मां पुनीहि (४) ॥ २८ ॥

यत्ते (५)पवित्रमर्च्चिष्यग्ने विततमन्तरा ।

ब्रह्म तेन पुनातु मा ॥ ३० ॥

हे अग्ने ! ते–तव अर्चिर्ज्वाला तस्यामर्चिषि । अन्तरा–मध्ये यद् ब्रह्म त्रयीरूपं परब्रह्मरूपं वा पवित्रं विततं-प्रसारितं वर्त्तते तेन पवित्रेण भवान् मा-मां पुनातु "अभ्यनुज्ञानेन"इति(६) शेषः ॥ ३० ॥

पवमानः सोऽअद्य नः पवित्रेण

विचर्षणिः ॥ यः पोता स पुनातु मा ॥ ३१ ॥

स एव पवमानः सोमः अद्यास्मिन्नहनि पवित्रेण नः–अस्मान् पुनातु । किंभूतः पवमानः ? विचर्षणिर्द्रष्टा (निघं० ३।११) कृताकृतप्रत्यवेक्षक इत्यर्थः । यश्च स्वभावतः पोता–रक्षको(७) वायुः स मा–मां पुनातु

उभाभ्यां देव सवितः पवित्रेण सवेन

च ॥ मां पुनीहि विश्वतः ॥ ३२ ॥

हे सवितर्देव ! उभाभ्यां विश्वतः सर्वतः मां पुनीहि । काभ्यां ? पवित्रेण (८) सवेन अभ्यनुज्ञया च ॥ ३२ ॥

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा

बह्व्यस्तन्वो वीतपृष्ठाः ॥ तया मदन्तः सध-

मादेषु वयꣳ स्याम पतयो रयीणाम् ॥ ३३ ॥

वैश्वदेवी–सुराकुम्भी(९) प्रक्रमात् । पुनती–पावनं कुर्वाणा । आऽगा-

---

( १ ) शोचिष्मता शुक्लेन अशबलेन । ( २ ) दिवेर्यङ्लुगन्तं रूपम् । ( ३ ) यज्ञान् सम्यक्कारयेत्यर्थः । ( ४ ) अत्र "दीर्घादटि समानपादे" ( पा० ८।३।५८ ) इति नस्य रुत्वम् ।

( ५ ) यत्र यत्र यकारस्याधोभागे बिन्दुरस्ति तत्र तत्र चवर्गीयजकारसदृशोच्चारणम्–इत्युक्तं कात्यायनप्रणीतप्रतिज्ञापरिशिष्टाख्यसूत्रभाष्ये, इति सर्वत्र बोध्यम् ॥ ( ६ ) एतच्च पवित्रविशेषणालयोन्वटेन धृतम् ॥ ( ७ ) पुनाति पवते वा पोता । तत्र पवित्रीकरणेन रक्षणमेवात्र फलितमित्याह रक्षक इति । ( ८ ) अजाविलोमनिर्मितेन सवेन अभ्यनुज्ञया च । त्वदाज्ञया यज्ञसिद्धिः इत्यर्थः ।

( ९ ) विश्वेभ्यः सर्वेभ्यो हिता वैश्वदेवी । विश्वेभ्यो देवेभ्य आगता वा ।

त्-आगता । यस्याम् इमा(१)बह्वयो देव्यो धारास्तन्वः शरीरप्रायाः । किंभूता धाराः ? वीतपृष्ठाः । वीतमिष्टं पृष्ठं स्वरूपं यासां ताः कामितशरीराः । काम्यन्ते हि सुराधाराः सुरैः । तथा मदन्तः-मोदमाना वयं सधमादेषु सहमादनेषु(२)रयीणां-धनानां ( निघं० २।६ ) पतयः-स्वामिनः, स्याम-भवेम "सधमादस्थयोश्छन्दसि" ( पा० ६।३।९६ ) इति सहस्य सधादेशः ॥ ३३ ॥

चित्पतिर्म्मा पुनातु व्वाक्पतिर्मा पुनातु देवो

मा सवितापुनात्वच्छिद्रेण पवित्रेण सूर्यस्य

रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य

यत्कामः पुने तच्छकेयम् ॥ ३४ ॥

चित्पतिर्ज्ञानपतिः । आत्मा मनो वा(३) । मा-मां पुनातु पवित्रं करोतु । अथवा चित्पतिः-प्रजापतिः । "प्रजापतिर्वै चित्पतिः" ( ३।१।२।२२ ) इति श्रुतेः । वाक्पतिर्बृहस्पतिश्च मा मां पुनातु । सविता देवश्च मा-मां पुनातु । केन ? अच्छिद्रेण अनुपहतेन, पवित्रेण-कुशेन । न केवलं कुशेन किन्तु सूर्यस्य रश्मिभिश्च । हे पवित्रपते ! पवित्राणां पते देव सवितः ! । तस्य पवित्रपूतस्य मम-यजमानस्य तव प्रसवे अभ्यनुज्ञायां वर्तमानस्य एतद्भवतु-किम्? यत्कामः(४) यदभिलषिता यस्मिन्सोमयागानुष्ठाने कामवान् अहम् आत्मानं पुने-पावयामि ( शोधयामि ) तच्छकेयं तस्मिन् शक्नुयां यज्ञस्यान्तं गच्छामीत्यभिप्रायः ॥ ३४ ॥

आऽयं गौः पृश्निरक्रमीदसदन्मातरं

पुरः ॥ पितरं च प्रयन्त्स्वः ॥ ३५ ॥

अयमग्निः आक्रमीत्-ऐश्वर्य्येणाक्रान्तवान् "जगत"इति शेषः । किंभूतः ? गौः गन्ता "तासु तासु क्रियासु"इति शेषः । पुनः किंभूतः ? पृश्निः नानारूपः । (५)असदन् मातरं पुरः । योऽग्निः पुरः-पुरस्तात् प्राच्यां दिशि प्रातरादित्यरूपेण इमां मातरं पृथिवीम् असदत्-आसीददिति(६)।अर्थात् इमं लोकं अग्निरूपेणानुगृह्य।किं च पितरं च-प्रयन्त्स्वः।

---

( १ ) यस्यां कुम्भ्यामिमाः प्रत्यक्षतो दृश्यमाना बह्वीः बहुसंख्याकाः । ( २ ) यज्ञस्थानेषु । सह माद्यन्ति देवा येषु तेषु ॥ ( ३ ) "मनो वै चित्पतिः" इति तित्तिरिवाक्यात् । ( ४ ) यः कामो यस्य, यस्मिन्वा कामो यस्य, स यत्कामः । यस्मिन्सोमयागानुष्ठाने कामवानहमात्मानं पुने शोधयामि तत्सोमयागानुष्ठाने शक्तो भूयासम् । यज्ञानुष्ठानसामर्थ्यम्मेऽस्त्वित्यर्थः । तदेवाह यज्ञस्येत्यादि ॥

( ५ ) लोहितशुक्लादिबहुविधज्वालोपेतः । ( ६ ) आहवनीयरूपेण प्राप्तवानित्यर्थः । श्रुतिश्च-"द्यौः पिता पृथिवी माता" इति ॥

पितरं द्युलोकं ब्रह्मलोकं वाऽसददासीददित्यनुषज्यते । स्वः प्रयन् गच्छन् स्वः आदित्यः ( निघं० १।४।१) (१) ॥

ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो
रात्र्यजायत, ततः समुद्रोऽअर्णवः । समुद्रा-
दर्णवादधिसँव्वत्सरो अजायत । अहोरात्राणि
विदधद्विश्वस्य मिषतो वशी । सूर्य्याचन्द्रमसौ
धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं
चान्तरिक्षमथो स्वः ॥

ऋतं चेत्यादि । अयमृग्वेदीयो मन्त्रः । अपरश्च तैत्तिरीयः । तत्र रात्रिरजायतेति पाठः । समुद्रोऽर्णव इति च । अकल्पयद्दिवमिति च संहितः । स च मन्त्रो माध्यन्दिनीयैर्न पठनीयः । याज्ञवल्क्योद्गीर्णत्वात् । ऋतं सत्यमिति च ब्रह्मणो नाम । तथा च श्रुतिः-"ऋतमेकाक्षरं ब्रह्म" "सत्यं ज्ञानमनन्तं ब्रह्म" इति च । स्मृतिश्च-"ऋतमेकाक्षरं ब्रह्म"इति । तत्रातिष्ठदित्यध्याहार्य्यन्तेनायमर्थः । ऋतं च सत्यं च "तिष्ठति"इति शेषः । अर्थात्सृष्टिपूर्वकाले । तथा च तदानीं केवलं ब्रह्मैवासीदित्यर्थः । ततस्तदनन्तरं प्रलयावस्थायामेव रात्री(२) अजायत रात्रिरासीत् । रात्रिशब्देनान्धकार उच्यते । तथा च सकलमन्धकारमयमासीदित्यर्थः । तेजोऽभावस्यैवान्धकारत्वात् । रात्रेश्चन्द्राधीनत्वेन, अह्नः सूर्याधीनत्वेन च तयोस्तदानीमसम्भवाच्चेति भावः । तथा च स्मृतिः-"आसीदिदन्तमोभूतमवि (प्र)ज्ञातमलक्षणम्" इति । ततस्तदनन्तरं प्रलयावसानसृष्ट्यारम्भसमये तपसः-अदृष्टात् समुद्रोऽजायत, बभूव । तपसः किंभूतात् ? अभीद्धात् अभिसर्वतो भावेन इद्धात्- दीप्तात् । सर्वतो लब्धवृत्तेरित्यर्थः । समुद्रः किंभूतः ? अर्णवः अर्णः पानीयं तदस्यास्तीति अर्णवः । पानीयमयः समुद्रः सञ्जात इत्यर्थः । प्रथमतः सकलसंसारसृष्टिनिमित्तं जलराशिरुत्पन्न इत्यभिप्रायः । तथा च स्मृतिः-"अतएव ससर्जादौ तासु बीजमवासृजत्" इति(३) । ततस्तदनन्तरम् अर्णवात्समुद्रादधि पश्चात् धाता अजायत । धाता किंभूतः ? मिषतोऽप्रकटीभवतो विश्वस्य वशी महाप्रलये विलुप्तस्यास्य त्रिलोकस्य निर्माणे प्रभुरित्यर्थः । स धाता यथा

---

( १ ) तथा च स्वः प्रयन्नादित्यरूपेण स्वर्गे सञ्चरन् पितरञ्च द्युलोकमपि असदत् प्राप्तवान् ॥ "षद्लृविशरणगत्यवसादनेषु" ( भ्वा० प० ) लुङि लृदित्वादङ् ( पा० ३।१।५५ ) ( २ ) अत्र "रात्रेश्चाजसौ" ( पा० ४।१।३१ ) इति ङीप् ॥ ( ३ ) अत्र 'वीर्यमथाददत्' इति पाठः सन्नपि मनुस्मृतिसम्मत एव पाठ आदृतः ॥

पूर्वं यथाक्रमेण सूर्याचन्द्रमसौ अकल्पयत्-निर्मितवान्। किम्भूतौ सूर्याचन्द्रमसौ ? अहोरात्राणि विदधत् कुर्वाणौ। सूर्य एवाहः करोति चन्द्र एव रात्रिं करोति इत्यभिप्रायः। ततः सूर्यचन्द्रयोरुत्पत्त्यनन्तरं सँवत्सरः अजायत-समुत्पन्नः। सूर्यचन्द्रोत्पत्त्यनन्तरमेव रात्रिदिवसविभागे सति संवत्सरव्यवस्था भवति। संवत्सरस्याहोरात्रघटितत्वादित्यर्थः। अथानन्तरं दिवं च पृथिवीं च अन्तरिक्षं च स्वश्च एतान् लोकान् स एव धाता यथापूर्वम् अकल्पयत्-सृष्टवान्। चराचरात्मकसकललोकानेव धाता पूर्ववत् सृष्टवान् इत्यर्थः। अत्र स्वःशब्देन नक्षत्रलोकोपरि स्वः स्वर्लोक उच्यते। द्युशब्देन तदूर्ध्वस्थमहर्लोकादिलोकचतुष्टयमिति हलायुधः। तदनेन मन्त्रेण सृष्टिस्थितिप्रलयाः प्रतिपादिताः। विदधदिति द्विवचने एकवचनं "सुपां सुपो भवन्ति" इत्यादेः ( पा० ७।१।३९ )। अर्णव इति अर्णस्शब्दात् "अर्णसो लोपश्च" इति वप्रत्ययः(१) सकारलोपश्च। अत्र मत्सम्प्रदाये मार्जनम्। अत्र गायत्रीमन्त्रः अपोहिष्ठेत्यादिमन्त्रा अग्रे व्याख्यातव्याः। प्रथमं गायत्री व्याख्यायते तदन्वयितया पश्चाद्व्याहृतयः।

तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि॥
धियो॒ यो नः॑ प्रचो॒दया॑त्॥ १॥

तत् तस्य भर्गस्तेजः धीमहि-ध्यायेम चिन्तयामः। अत्र यद्यपि तदिति पदं भर्गविशेषणं नास्ति तथाऽपि तच्छब्दप्रयोगादेव यच्छब्दप्रयोगो लभ्यते। तथा च योगियाज्ञवल्क्यः—

तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः।
उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः॥ १॥ इति।
तस्य कस्य ? सवितुः-सर्वभावानां प्रसवितुः।

तथा च याज्ञवल्क्यः—

सविता सर्वभूतानां सर्वभावान् प्रसूयते।
सवनात्पावनाच्चैव सविता तेन चोच्यते॥ २॥ इति।
पुनः किम्भूतस्य ? देवस्य-दीप्तिक्रीडादियुक्तस्य।

तथा च योगियाज्ञवल्क्यः—

दीव्यते क्रीडते यस्मात् द्योतते रोचते दिवि।
तस्माद्देव इति प्रोक्तः स्तूयते सर्वदैवतैः॥ ३॥ इति।

तं कं ? यो भर्गो नोऽस्माकं धियो बुद्धीः प्रचोदयात्-प्रेरयति। धर्मार्थकाममोक्षेषु अस्मदादीनां बुद्धिं योजयति इत्यर्थः।

---

( १ ) मत्वर्थीयः। ( पा० ५।२।१०९ वा० )

तथा च योगियाज्ञवल्क्यः—

चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् ।
धर्मार्थकाममोक्षेषु बुद्धिवृत्तोः पुनः पुनः ॥ ४ ॥ इति ।

तदिह भर्गशब्देन बहुविधमाहात्म्यमुक्तम् । सवितृमण्डलगतादित्य-देवता स्वः पुरुष उच्यते ॥ तथा—

भ्रस्जपाके भवेद्धातुर्यस्मात्पाचयते ह्यसौ ।
भ्राजते दीप्यते यस्माज्जगच्चान्ते हरत्यपि ॥ ५ ॥
कालाग्निरूपमास्थाय सप्तार्चिः सप्तरश्मिभिः ।
भ्राजते तत्स्वरूपेण तस्माद्भर्गः स उच्यते ॥ ६ ॥

तथा,

भेति भीषयते लोकान् रेति रञ्जयते प्रजाः ।
गत्या गच्छत्यजस्रं यो भगवान् भर्गउच्यते ॥ ७ ॥

अत्र "बुधैः" इति शेषः ।

यद्यपि सवितुर्भर्ग इति सवितृभर्गयोर्भिन्नता गायत्रीमन्त्रे प्रतीयते । तथाऽपि परमार्थचिन्तायां सवितृभर्गयोर्भेदो न विद्यते । स एव सविता स एव भर्गः । सवितृभर्गयोरद्वैतमेव । तथा च राहोः शिर इतिवत् षष्ठी न भेदसाधिका । पुनरपि किम्भूतं भर्गं ? वरेण्यं-वरणीयं-प्रार्थनीयं जन्म-मृत्युदुःखनाशाय ध्यानेनोपासनीयमित्यर्थः । तथा च योगियाज्ञवल्क्यः—

वरेण्यं वरणीयं च संसारभयभीरुभिः ।
आदित्यान्तर्गतं यच्च भर्गाख्यं वा मुमुक्षुभिः ॥ ८ ॥
जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ॥
ध्यानेन पुरुषो यस्तु द्रष्टव्यः स सूर्यमण्डले ॥ ९ ॥ इति ।

एवं गायत्र्यास्तस्य च महात्म्यमुपवर्ण्य पुनस्तस्यैव महाप्रभावत्वं सप्तव्याहृतिभिर्विशेषणीभूताभिरभिधीयते—

तद्यथा—किम्भूतं भर्गम् ? भूरादि व्याप्य "तिष्ठत्" इति शेषः । तथा च भूरादि सप्तलोकप्रकाशकं, भूर्भूमिलोकः, एवमुपर्युपरि-भुवः-भुवर्लोकः अन्तरिक्षं, स्वः-स्वर्लोकः, महर्महर्लोकः, जनः-जनोलोकः, तपः-तपोलोकः, सत्यं-सत्यलोकः, एवमुपर्युपरि क्रमेणावस्थितान् सप्तलोकानभिव्याप्याव-तिष्ठमानमदो भर्गः एतान् सप्त लोकानेव प्रदीपवत् प्रकाशयतीत्यर्थः । यद्वा भूरादीनां भर्गादिभेद एव प्रतिपाद्यः सप्त महाव्याहृतय एवेति । पुनः किम्भूतं भर्गम् ? आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । एतद्रू-पमित्यर्थः ॥ १ ॥

सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः

पापेभ्यो रक्षन्ताम् यद्रात्र्या पापमकार्षं मनसा
वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रि-
स्तदवलुम्पतु यत्किञ्च दुरितं मयि इदमहम्मामम्-
तयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ २ ॥

मा-मां सूर्यश्च मन्युश्च मन्युपतयश्च रक्षन्तां, मन्युर्यज्ञः । मन्युपतयः-यज्ञपतयः, इन्द्रादयः । केभ्यः रक्षन्तां ? मन्युकृतेभ्यः पापेभ्यः । असाङ्ग-यज्ञकृतेभ्य इत्यर्थः । यद्वा मन्युः-क्रोधः क्रोधपतयः इन्द्रियाणि क्रोधकृतेभ्यः पापेभ्यो रक्षन्तां क्रोधाऽनुत्पादनेन । तथा च ममैतादृशः क्रोधो मा भवतु येनाहमकार्यं कुर्यामित्यर्थः । किंच यत्पापं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्र्या रात्रौ । ङर्डा ( पा० ७।१।३६ ) अकार्षं कृतवानस्मि तत्पापं रात्रिः (१) अवलुम्पतु । किं च यत्किञ्चिन्मयि मदाश्रितम् अन्यदपि दुरितं पापं तस्माद्रक्षन्तां माम् । किञ्च-हे आपः! तदिदं पापमहं मात्मात्मानं सूर्ये जुहोमि । किम्भूते सूर्ये ? ज्योतिषि हृदयमध्यस्थितप्रकाशरूपे । पुनः किम्भूते ? अमृतयोनौ-मोक्षकारणे । तदिदं स्वाहा सुहुतं भवतु । अत्र "मन्युर्यज्ञे क्रतौ क्रुधि" इत्यमरः । शिश्ना इति शिश्नेनेति प्राप्ते छान्दसत्वादिनादेशो न भवति(२) ॥ २ ॥

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् ।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।
सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳ स्वाहा ॥३॥

आपः पुनन्त्वित्यादि । आपः पृथिवीं पुनन्तु पवित्रीकुर्वन्तु । पृथ्वी अद्भिः पूता सती मां क्षेत्रज्ञं पुनातु । न केवलमापः पृथिवीं पुनन्तु किं तु ब्रह्मणस्पतिः ब्रह्मणस्पतिं(३) ज्ञानस्य पतिं पुनन्तु । यद्वा वेदस्याश्रयं परमात्मानमपि पुनन्तु । ब्रह्म पूता पूतं सन्मां पुनातु । अत्र च पृथिवीशब्देन पार्थिवो देवो विवक्षितः । ततश्च आपः पृथिवीं पुनन्तु । पृथिवी मां मदीयं पार्थिवं देहं पुनातु इत्यर्थः । तथा च देहपावनत्वद्वारा माम् आपः पुनन्तु इति फलितार्थः । कुत्र ? मम यदुच्छिष्टमपावनम् अभोज्यं निन्दितभोज्यम् । यद्वा दुश्चरितम् असदाचरणम् असतामप्रतिग्राह्याणां प्रतिग्रहं च

( १ ) तदभिमानी देवोऽग्निः । तथा च श्रुतिः "आदित्यो वास्तं यन्नग्निमनुप्रविशति"—इति । यन्-गच्छन् । अग्निमिति—अग्नये स्वाधिकारं प्रयच्छतीत्यर्थः ॥ ( २ ) अत्रापि आङो डादेशः ( पा० ७।१।३९ ) बोद्धव्यः ॥ ( ३ ) अत्र "षष्ठ्याः पतिपुत्र"—( पा० ८।३।५३ ) त्यादिना विसर्जनी-

तत्सर्वं तत्र सर्वत्र माम् आपः पुनन्त्वित्यर्थः । इत्थमाशास्य आपः आचम्यन्ते ताः स्वाहा सुहुता भवन्तु । तथा च आपः आचमनेन मदीयदेहपावनपूर्वकमुच्छिष्टत्वादिरूपदोषं मां च पावयन्तु इत्याशंसा वाक्यार्थः । अत्र पतिरिति "सुपां सुपो भवन्ति" (पा० ७।१।३९) इति द्वितीयार्थे प्रथमा । पूता इति पूतमित्यत्रार्थे लिङ्गव्यत्ययेन ( पा० ३।१।८५ ) । सर्वमिति सप्तमीस्थाने द्वितीया(१) ।

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः
पापेभ्यो रक्षन्ताम् यदह्ना पापमकार्षं मनसा
वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्त-
दवलुम्पतु यत्किञ्च दुरितं मयि इदमहम्माममृ-
तयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ ४ ॥

अग्निश्चमेति ॥ सत्ये ब्रह्मणि सूर्ये वा । अन्यत्सर्वं सूर्यश्चमेति मन्त्रवद्बोद्धव्यम् ॥ ४ ॥

आपो हि ष्ठा मयोभुवस्ता नऽऊर्ज्जे
दधातन ॥ महे रणाय चक्षसे ॥ ५ ॥

अत्राग्रे तच्छब्दोपादानात् यच्छब्दोऽध्याहार्य्यः । हे आपः ! या यूयं मयोभुवः स्थ, 'मय इति सुखनाम' ( निघं० ३।६ ) सुखभावयित्र्यः स्थ-भवथ "सर्वप्राणिनाम्" इति शेषः । हिशब्दोऽनर्थकः, ताः-तादृश्यः; यूयम्-अस्मान्, ऊर्ज्जे-अन्नाय ( निघं० २।७ ) दधातन-स्थापयत(२) यथा वयं सर्वस्यान्नादेः भोजका भवेम तथा कुरुतेत्यभिप्रायः । अन्नाधीनमेव सुखमिति भावः । किं च महे-महते, रणाय-रमणीयाय, चक्षसे-दर्शनाय, चक्षिङ्संख्याने असुन् । (३) महद्दर्शनं ब्रह्मदर्शनन्तदर्थं दधातन । यद्वा महते चक्षसे दर्शनाय रणाय रमणीयाय ब्रह्मदर्शं-

यस्य सः । (१) व्यत्ययेनैव (पा० ३।१।८५)॥

(२) अत्र "तप्तनप्तनथनाश्च" ( पा० ७।१।४५ ) इति तस्य तनबादेशः । पित्त्वेनाङित्त्वादालोपाभावे "दधस्तथोश्च" (पा० ८।२।३८) इति न भवति ॥ (३) तथा च निरुक्तम्—"आपो हि स्थ सुखभुवस्तानोऽन्नाय धत्त महते च नो रणाय रमणीयाय च दर्शनाय" इति (९।२६।२) तथा च महद्रमणीयं दर्शनं ब्रह्मसाक्षात्कारलक्षणं तदस्माकं कुरुत । अस्मान्ब्रह्मसाक्षात्कारयोग्यान्कुरुतेति-भावः । ऐहिकपारलौकिकसुखं ददतेत्यृचो भावः । "महपूजायाम्" (भ्वा० प०) क्विप्कर्मणि । मह्यते पूज्यते इतिमट् तस्मै महे महते । "रणशब्दे" ( भ्वा० प० ) रण्यते स्तूयते सर्वैरिति रणं रमणीयन्तस्मै रणाय रमणीयाय । चक्षसे इति चष्टे पश्यति सर्वं येनेतिचक्षः । असुन् ( उ० ४।१८९ ) तस्मै चक्षसे "यस्मिन् ज्ञाते सर्वं विज्ञातं स्यात्" इति छान्दोग्यश्रुतेः । संख्यानमिह दर्शनम् ॥

नायेत्यर्थः। अथ वा हिशब्दो यस्मादर्थे। हे आपः! यस्मान्मयोभुवः स्थ ताः नः तस्मान्नः ऊर्ज्जे दधातनेत्यन्वयः। ताः शब्दः पञ्चम्या अर्थे प्रथमान्तः(१) ॥ ५ ॥

यो वः॒ शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑ ॥

उ॒श॒तीरि॑व मा॒तरः॑ ॥ ६ ॥

हे आपः! यश्च वः-युष्माकं, शिवतमः-कल्याणतमो रसः नः-अस्मान् तस्य भाजयत-भागिनः कुरुत। इह-अस्मिन् कर्मणि लोके वा स्थितान्। उशतीरिव मातरः। उशतीः-उशत्यः अत्र "दीर्घाज्जसि च" "वा छन्दसि" ( पा० ६।१।१०५-६ ) इति वा पूर्वसवर्णदीर्घः। कामयमाना मातर इव, "वशकान्तौ" ( अ० प० ) इति धातोः कृतसंप्रसारणस्यैतद्रूपम् (२)। तथा च यथा पुत्रस्य कल्याणं कामयमाना मातरस्तन्यादिरसैस्तं भाजयेयुः एवं मां भाजयत ॥ ६ ॥

तस्मा॒ऽअरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ ॥

आपो॑ ज॒नय॑था च नः ॥ ७ ॥

हे आपः! तस्मै तस्य रसस्य पूर्वकथितस्य वः युष्मत्सम्बन्धिनः अरम्-अलं पर्याप्तिं सदातृप्तिं गमाम-गच्छाम(३) अलमिति रलयोरेकत्वस्मरणात्। यस्य क्षयाय जिन्वथ। यस्य क्षयस्य-निवासस्य(४) पञ्चाहुतिपरिणामक्रमेण ब्रह्मादिस्तम्बपर्यन्तस्य जगतः एकदेशेन जिन्वथ तर्पयथ। जिन्वतिः प्रीणनकर्मा ( भ्वा० प० ) हे आपः! तत्र नः-अस्मान् जनयथ "भोक्तृत्वेन" इति शेषः ॥ ७ ॥

द्रु॒प॒दादि॑व मुमुचा॒नः स्वि॒न्नः स्ना॒तो मला॑दिव ॥

पू॒तं प॒वित्रे॑णे॒वाज्य॒मापः॑ शुन्धन्तु॒ मैन॑सः ॥ ८ ॥

मा-माम् आपः-जलानि शुन्धन्तु-शोधयन्तु। कुतः? एनसः-पापात्। कथमिव? द्रुपदात् मुमुचानः स्विन्न इव। स्विन्नः-स्वेदवान्। आतपे इत्यर्थः। तथा च द्रुपदात् द्रुमपदात् मुमुचानः बहिर्भवन् आतपः यथा द्रुपदे न स्पृशति तथा मां पापं न स्पृशत्वित्यर्थः। स्नातो मलादिव। यथा

(१) व्यत्ययेन ( पा० ३।१।८५ ) अत्र लिङ्गस्यापि स बोध्यः॥ (२) शतरि शब्लुकि बोध्यम्॥ (३) गम्धातोर्लोटि "बहुलं छन्दसि" ( पा० २।४।७३ ) इति शपो लुक्॥

(४) तथा च श्रूयते—"क्षयो मातुरस्या उपस्थे" ( ऋ० सं ३।१।३।१ ) इति क्षयो निवास इति निरुक्तव्याख्यायान्दुर्गाचार्यः ( ८।१८।३ ) पाणिनिरपि ( ६।१।२।१ ) एवमेव स्मरति। षष्ठ्यर्थे चतुर्थी ( पा० २।३।६२ वा० )।

स्नातो मलात् मुक्तो भवति। पवित्रेण पूतम् आज्यमिव यथा आज्यं पवित्रेण पूतं भवति इत्यर्थः(१) ॥८॥

अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कार आपोज्योतीरसोऽमृतम् ॥९॥

हे आपः ! त्वं भूतेषु अन्तश्चरसि चरथ। गुहायां विश्वतो मुखः। विश्वतः विश्वस्मिन् मुखं संसरणं यासां ता विश्वतोमुखा इत्यर्थः (२)। त्वं यज्ञस्त्वमेव यज्ञः। एवं त्वं वषट्कारः। त्वं ज्योतिः रसः अमृतं च त्वमेवेत्यर्थः (३) ॥ ९ ॥

उद्वयन्तमसस्परिस्वः पश्यन्तऽउत्तरम् ।
देवं देवत्रा सूर्य्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥

उत् इत्युपसर्गः अगन्म इत्यनेन क्रियापदेन सम्बध्यते। वयं सूर्यं देवम् उदगन्म—उद्गच्छाम। वयं किम्भूताः ? स्वः स्वर्लोकं परिपश्यन्तः सर्वतोभावेन पश्यन्तः। स्वः किम्भूतं ? तमसः प्रकाशभूतात् भूर्लोकात् उत्तरम्-ऊर्ध्वसंस्थितमित्यर्थः। वयं किम्भूताः? देवत्रा-देवेन सूर्येण त्राणं येषां ते। सूर्यं किम्भूतं? ज्योतिः ज्योतिःस्वरूपं, पुनः किम्भूतं? उत्तमं-सर्वज्योतिषामग्न्यादीनामुत्कृष्टम्। अयमत्र वाक्यार्थः, वयं सूर्येण रक्षिताः भूर्लोकस्योपरि स्थितं स्वर्लोकं पश्यन्तस्तमतिक्रम्य परं ज्योतिःस्व

---

(१) वस्तुतस्त्वयमस्यार्थः। द्रुममयम्पदन्द्रुपदम्पादुका। तथा च निरुक्तम् "कनीनकेव विद्रधे नवे द्रुपदे" इति (४।२।१५) "पलाशी द्रुद्रुमागमाः" इत्यमरः। तस्मान्मुमुचानः पृथग्भवत् यथ पादुकादोषैरसम्बद्धो भवति। यथा च स्विन्नः स्वेदयुक्तः स्नातः सन्मलात्पृथक् भवति। यथा च पवित्रेण कम्बलमयेन पूतं गालितमाज्यं घृतं कीटेभ्यः पृथग् भवति। एवमापो जलानि एनसः पापात् मा—मां शुन्धन्तु—पुनन्तु। पापात्पृथक्कुर्वन्तु। उव्वटमहीधरावप्येवमेवाहतुः। मुमुचान इति मोक्षणार्थान्मुचेः (तु० उ०) लिटः कानच्। (पा० ३।१।१०६) द्वित्वमभ्यासकार्यं क्ङित्वाद्गुणाभावः।

(२) अत्र जसः स्थाने सुः। (पा० ७।१।३९) एवं पूर्वमपि, बहुत्वे एकवचनमार्षम्।

(३) वस्तुतोऽत्राबधिष्ठातृदेवताऽनेन स्तूयते। हे आपः अबधिष्ठातृदेवते ! त्वं भूतेषु प्राणिषु अन्तः अन्तरात्मरूपेण चरसि विहरसि। "आपोमयः प्राण" इति श्रुतेः। किन्तु—गुहायाम्—असर्वज्ञदुर्विज्ञेयस्थाने हृदयाकाशरूपे विश्वतोमुखः विश्वतः विश्वस्मिन्। सार्वविभक्तिकस्तसिः (पा० ५।४।४४ वा०) मुखं संसरणम् यस्य सः। पुंस्त्वमेकवचनं चार्षम्। (पा० ३।१।८५) त्वं यज्ञः यज्ञरूपोऽसि। यज्ञपदमिह तत्साधनोपलक्षणम्। त्वं वषट्कारः प्रदानोपकरणम्। यत्किञ्चित्प्रदीयते तदद्भिरेव। अत एव ज्योतिः ग्रहनक्षत्रादिरूपोऽग्निरूपश्च। अग्नेरप्प्रभवत्वस्मरणात्। वषट्कार इत्युपलक्षणं स्वाहाकारादेरपि। एतैः प्रदानेन ग्रहादीनामपि स्थितेः। तदित्थं रसोऽपि त्वमेवासि गुणभावेन। अमृतमपि त्वमेव। तथा चाग्नेये—आपःस्त्रीभूम्नि वार्वारि सलिलङ्कमलञ्जलम्। पयः कीलाल-

रूपे सूर्ये संगता भवाम इति सूर्यप्रार्थना । त्रा इत्यत्र विसर्गलोप श्छान्दसः ॥ १० ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः ।

दृशे विश्वाय सूर्यम् ॥ ११ ॥

उत् इत्युपसर्गः वहन्तीत्यत्रान्वेति । उशब्दः शोभार्थः । त्यमिति त्यद्-शब्दस्य प्रयोगः । त्यं-तं सूर्यं देवं केतवः-रश्मयः उद्वहन्ति-ऊर्द्ध्वं नयन्ति । सूर्यं किम्भूतं ? जातवेदसम्-अग्नितेजोमयं, यद्वा जातं वेदः कर्मफलं यस्मात्तं जातवेदसम् । किमर्थमुद्वहन्ति ? विश्वाय-विश्वस्य(१) दृशे-दर्शनाय उद्वहन्ति । अयं वाक्यार्थः, तेजःस्वरूपं सूर्यं देवं विश्वप्रकाशनार्थं रश्मय ऊर्द्ध्वं वहन्ति इति आदित्योत्कीर्त्तनम् ॥ ११ ॥

कीदृशोऽसौ सूर्य इत्याकाङ्क्षायामाह—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य

वरुणस्याग्नेः ॥ आप्रा द्यावापृथिवीऽअन्त-

रिक्षꣳ सूर्यऽआत्मा जगतस्तस्थुषश्च ॥ १२ ॥

असौ सूर्यश्चित्रमाश्चर्यरूपं यथा एवमुदगात्-उदितो बभूव । किम्भूतः सूर्यः ? मित्रस्य वरुणस्याग्नेः त्रयाणां देवानां चक्षुः-अक्षिभूतः । पुनः किम्भूतः ? देवानां मित्रादिव्यतिरिक्तानामन्येषामनीकं-समूहः । द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षं च स्वर्गमर्त्याकाशान् आप्राः-आपूरितवान् । "स्वस्य रश्मिजालेनेति" शेषः । पुनः किम्भूतः ? जगतः-जङ्गमस्य, तस्थुषः स्थावरस्य, चात्मा । स्थावरजङ्गमात्मकसकलसंसारमयोऽयमेव सूर्य इत्यर्थः । आप्रा इति आङ्पूर्वस्य "प्रापूरणे" इत्यस्य लङ्प्रथमैकवचनस्थाने "तिङां तिङो भवन्ती"ति मध्यमपुरुषैकवचनम् ॥ १२ ॥

तच्चक्षुः किम्भूतमित्याकाङ्क्षायां पुनराह—

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम

शरदः शतं जीवेम शरदः शतꣳ शृणुयाम

शरदः शतं प्रब्रवाम शरदः शतमदीनाः

स्याम शरदः शतं भूयश्च शरदः शतात् ॥ १३ ॥

तत्पूर्वं चक्षुः कीदृशं ? देवहितं-देवानां समीहितकर्तृ । पुनः कि-

---

मसृतम्" इति पठ्यते ॥ (१) विश्वायेत्यत्र षष्ठ्यर्थे चतुर्थी (पा० २।३।६२। वा०) ति बोध्यम् ॥

म्भूतं ? शुक्रं-शुक्लं, निर्म्मलम् । पुनः किम्भूतं ? पुरस्तात्-प्राच्यां दिशि, उच्चरत्-उद्गच्छत् उदेत् । वयं तस्योपस्थानं कृत्वा शरदः वर्षस्य शतं पश्येम । एवं शरदः शतं जीवेम । शरदः शतꣳ शृणुयाम । शरदः शतं प्रब्रवाम—प्रकर्षेण ब्रवाम । शरदः शतम् अदीनाः स्याम उद्भवेम । किं च न केवलं शरदः शतं किन्तु शरदः शतादपि भूयः अधिकं पश्येमेत्यादि सर्वत्रान्वेति ॥ १३ ॥

तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि

प्रियं देवानामनाधृष्टं देवयजनमसि ॥ १४ ॥

गायत्रीं स्तौति । हे गायत्रि ! त्वं तेजः असि । शुक्रमसि । अमृतमसि । धाम-गृहमसि । नाम-अभिधानमसि । यत् देवानाम् अनाधृष्टम्-उत्कृष्टं प्रियं तत्त्वमेवासि । देवयजनं देवा इज्यन्ते अनेनेति देवयजनं मन्त्रादि । तत्त्वमेवासि ॥ १४ ॥

गायत्र्यस्येकपदी द्विपदी त्रिपदी

चतुष्पद्यपदसि न हि पद्यसे नमस्ते

तुरीयाय दर्शताय पदाय परो रजसेऽसावदो मा प्रापत्॥१५॥

त्वं गायत्र्यसि गायन्तं त्रायत इति गायत्री । एकपदी, द्विपदी, त्रिपदी, चतुष्पदीति स्वरूपकथनम् । अपदसि-न पद्यते ज्ञायते इत्यपत् । एतदेवाह-नहि पद्यसे । किं च ते तुरीयाय पदाय-स्वरूपाय ब्रह्मविष्णुशिवभिन्नाय ब्रह्मस्वरूपाय "नमः अस्त्विति" शेषः । यद्वा विराट् हिरण्यगर्भादिकारणोपाधित्रयहीनाय ईशपदाय । यद्वा वैखरीरूपाय "नमः अस्त्विति" शेषः । पदाय किम्भूताय ? दर्शताय-दर्शनीयाय । "ध्यानेने"ति शेषः । परोरजसे—रजसः परभूताय शुद्धसत्त्वस्वरूपायेत्यर्थः(१) असौ शत्रुः पाप्मा त्वत्प्राप्तिविघ्नकरः, अदः तत् आत्मनः कार्यं यत् त्वत्प्राप्तिविघ्नकर्तृत्वम् , मा प्रापत् मैव प्राप्नोतु ॥ १५ ॥

अथ तर्पणमन्त्रव्याख्या ॥

उदीरतामवरऽउत्परासऽउन्मध्यमाः

पितरः सोम्यासः ॥ असुँय्यऽईयुरवृकाऽऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥ १ ॥

(१) बृहदारण्यकाण्डस्य शतपथब्राह्मणस्यायमुपस्थानमन्त्रो गायत्र्या इति ॥

उदित्युपसर्गः । अवरे एतल्लोकवर्त्तिनः पितरः उदीरताम्—ऊर्ध्वं क्रमन्तां गच्छन्तु । परा एव परासः । येऽपि पितरः परासः-उत्कृष्टलोकेऽवस्थिताः तेऽपि उदीरताम्, तस्मादपि स्थानात् विशिष्टतरं स्थानं गच्छन्तु । उन्मध्यमाः-मध्ये भवा मध्यमाः । येऽपि मध्यमा-मध्यमलोकस्थाः तेऽपि ततोऽपि उदीरतां विशिष्टतरं स्थानङ्गच्छन्तु । पितरः किम्भूताः ? सोम्यासः-सोमसम्पादिनः । असुंयऽईयुरिति—ये असुं-प्राणं वायुम् अन्वीयुः अनुगताः वातात्मान इत्यर्थः । तेऽपि उदीरताम् । येऽपि अवृकाःअनमित्राः । वृको मित्रम् (१) माध्यस्थ्यमाश्रिता इत्यर्थः । ऋतज्ञाः-सत्यज्ञानाः, स्वाध्यायनिष्ठाः,यज्ञनिष्ठा वा । तेऽपि ततोऽपि विशिष्टमुत्कृष्टस्थानं गच्छन्तु । एवं स्वकीयेन कर्मणा ये अस्मदीयाः पितरः उद्गतिं प्राप्तास्ते नः-अस्मान् हवेषु-आह्वानेषु सत्सु अवन्तु-पालयन्तु ॥ १ ॥

अङ्गिरसो नः पितरो नवग्वाऽअथर्वाणो

भृगवः सोम्यासः ॥ तेषां वयꣳ सुमतौ यज्ञि-

यानामपि भद्रे सौमनसे स्याम ॥ २ ॥

अङ्गिरसो न इति । वयं तेषां पितॄणां सुमतौ-कल्याणमतौ, स्याम-भवेम । मद्विषये तेषां कल्याणी मतिर्भवत्वित्यर्थः । केषाम् ? यज्ञियानां—यज्ञसम्पादिनाम् (२) । अपि च तेषां भद्रे वन्दनीये सौमनसे (३) कल्याणमनसि स्याम भवेम । ते के ? ये नः-अस्माकं पितरः अङ्गिरसः-अङ्गिरा ऋषिस्तस्यापत्यानि बहूनि (४) । ये च नवग्वा-नवगतयः पुनः पुनरागत्यागत्य गच्छन्ति । यद्वा नवग्वा नवा नवनीया स्तोतव्या गतिर्येषां । ये च अथर्वाणः-अथर्वणः अपत्यानि । (५) अथर्वाणः-असञ्चारिण इति वा, अथवा अभिचाराचरणकर्माणः । भृगवः-भृगोरपत्यानि, (६) सोम्यासः (७) सोमसम्पादिनः ॥ २ ॥

---

(१) तेनावृका इत्यस्य न मित्राणि न शत्रव इति, फलितार्थमाह माध्यस्थमाश्रिता इति । निघण्टौ निरुक्ते च नैतद्दृश्यते । स्तेनार्थे तु श्रूयते ( निघं० ३।२४।१४ ) स्तेननाम ( निघं० २।२१।७ ) वज्रनाम । ( निघं० ४।३।३२ ) चन्द्रमाः । एवं श्रुतौ "जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः" (ऋ० सं० ४।२।२८।७) श्रूयते । तथा च अवृको अघातुक इत्यर्थ एव युक्त उत्युत्पश्यामः ।

(२) अत्र "यज्ञर्त्विग्भ्यां घखञौ" ( पा० ५।१।८२ ) इत्यर्हार्थघस्येयादेशः ( पा० ७।१।२ ) ।

(३) स्वार्थेऽत्राण् ( पा० ५।२।११ ) आदिवृद्धिः । ( पा० ७।२।११७ ) ।

(४) थर्वतेर्हिंसार्थस्यौणादिकः प्रयोगः ।

(५) अपत्यार्थेऽण्यादिवृद्ध्यभावश्छान्दसः ।

(६) अत्रापत्यार्थस्याणो "ऽत्रिभृगु" ( पा० २।४।३५ ) इत्यादिना बहुत्वे लुक् ।

(७) सोममर्हन्तीत्यर्थे यत् ( पा० ५।१।६२ ) ततोऽसुक् (पा० ७।१।५) स्वार्थे । एवमग्रेऽपि बोध्यम् ।

आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः
पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया
मन्दन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ३ ॥

नः अस्माकं पितरः आयन्तु—आगच्छन्तु । किम्भूताः ? सोम्यासः सोमसम्पादिनः। पुनः किम्भूताः ? अग्निष्वात्ताः अग्निना सुष्ठु यथा स्यादेवमात्ता भक्षिताः श्रौतस्मार्ताग्निदग्धा इत्यर्थः । यद्वा अग्निना दग्धा एवोच्यन्ते तथा एव श्राद्धयोग्या इत्यभिप्रायः । कैः आयन्तु ? पथिभिर्मार्गैर्देवयानैः । देवस्य यानं गमनं यत्र तैर्देवैः सह गमनैरिति यावत् । देवैः सह यायिनस्ते पितरो येषां पुत्रपौत्रप्रपौत्रैरेतत्कर्म क्रियते । उक्तं च "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्या (१) प्नोति लोकतामि"ति। आगत्य च ते पितरः अस्मिन् यज्ञे श्राद्धे स्वधया अन्नेन मदन्तः परितृप्यन्तः तुष्टाः सन्तः अस्मान् अधिब्रुवन्तु अधिकं ब्रुवन्तु श्लाघयन्त्वित्यर्थः । किं च अवन्तु रक्षन्तु ॥ ३ ॥

ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं
परिस्रुतम् ॥ स्वधास्थ तर्पयत मे पितॄन् ॥ ४ ॥

हे आपः ! यूयं स्वधाः पितॄणामन्नं स्थ भवथ, स्वम् आत्मानं शरीरं दधति पोषयन्तीति स्वधाः । "धापोषणे, (जु०उ० क्विप् । तदपि पितॄणामेव । तथा च श्रुतिः "स्वधा पितॄणामन्नमि"ति । तेन मे मम पितॄन् तर्पयत तृप्तान्कुरुत । यूयम् किम्भूताः ? ऊर्ज्जं वहन्तीः ऊर्ज्जमन्नं वहन्त्यः प्रापयन्त्यः(२)। ऊर्ज्जं किम्भूतम् ? अमृतं घृतं पयः कीलालं परिस्रुतम् । एतद्रूपमित्यर्थः । अमृतं देवानामन्नं, घृतं प्रसिद्धम् । पयो दुग्धं, कीलालं पशुः। कीलं बन्धनयोग्यमलतीति कीलालं, (३) परिस्रुतं स्वधाःस्थ । तथा च यतो नानाविधमन्नं वहन्त्यः स्वधा भवथ तस्मान्मम पितॄन् तर्पयत इति ॥४॥

पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः
स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः ॥ अक्षन्पितरोऽमीमदन्त
पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम् ॥ ५ ॥

---

(१) सूर्यस्य । "भास्कराहस्करब्रध्नप्रभाकरदिवाकराः" इत्यमरः।

(२) अत्र "वाच्छन्दसि", ( पा० ३।२।१ ) इति वा पूर्वसवर्णदीर्घः ।

(३) कर्म्मण्यण् ( पा० ३।२।१ ) उपधावृद्धिः ( पा० ७।२।११६ ) यद्यपि "शोणितेऽम्भसि कीलालम्"इत्याग्नेयकोशे पाठाच्छोणितमेव कीलालम् । तथापीह तत्प्रभवो योग्यत्वात्पशुरत्राऽभिहितः।

स्वधायिभ्यः पितृभ्यः स्वधा नमः स्वधास्तु अन्नमस्त्वित्यर्थः। स्वधां प्रति गमनशीलाः स्वधायिनः "सुप्यजातौ णिनिस्ताच्छील्ये" (पा० ३।२।७८)। (१)पितृभ्यः इति बहुवचनं पितृव्यसापेक्षं पूजार्थं वा। एवं पितामहेभ्यः प्रपितामहेभ्यः स्वधा नमः। अत्रापि बहुवचनं पूर्ववत्। किं च अक्षन्(२) अत्तवन्तः, अद् भक्षणे। तथा च अत्तवन्तः भक्षितवन्तः पितरः अमीमदन्त मदिता भवन्तु। मादिताः पितरः अतीतृपन्त तर्पिता भवन्तु। किं च हे पितरः! शुन्धध्वं पापप्रक्षालनं कुरुध्वम् ॥ ५ ॥

ये चेह पितरो ये च नेह याँश्च विद्म याँ२

उ च न प्रविद्म ॥ त्वं वेत्थ यति ते जातवेदः

स्वधाभिर्यज्ञꣳ सुकृतं जुषस्व ॥ ६ ॥

हे जातवेदः अग्ने! ते(३)तान् पितृन् त्वं वेत्थ जानासि। अत एवमुच्यते स्वधाभिः पितृसम्बन्धिहविर्भिर्यज्ञं पितृयज्ञं सुकृतं साधुकृतं जुषस्व सेवस्व। ते के? ये इह सन्ति(४) अस्मत्समीपे इह लोके वा आसते।(५) ये च इह नासते ऽन्यत्र सन्ति। यान् पितृन् विद्म अवगच्छामः। यांश्च न प्रविद्म न प्रकर्षेण जानीमः, उकारः पादपूरणे। पितृन् किम्भूतान्? यति। अविभक्तिकोऽयं निर्देशः। (६)यतीन् शुचीन् नित्यनैमित्तिककर्मकरणान्निर्दग्धकल्मषान् ॥ ६ ॥

मधु वाताऽऋतायते मधु क्षरन्ति

सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ ७ ॥

मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ॥

मधु द्यौरस्तु नः पिता ॥ ८ ॥

मधुमान्नो वनस्पतिर्मधुमाँऽ२

अस्तु सूर्यः ॥ माध्वीर्गावो भवन्तु नः ॥ ९ ॥

वाताः वायवः मधु मधुमन्तः(७) (रसवन्तः) ऋतायते ऋतायन्ताम्

(१) इति णिनिः। "इण् गतौ" (अ० ५०) स्वधां यन्ति तच्छीलाः 'इणो यण्'॥ (२) "घस्लृ अदने" लुङि बहुवचने रूपम्। "गमहन" (पा० ६।४।९८) इत्युपधालोपो बाहुलकादक्ष्यपि। अत्तेरपि घस्लादेशे तुल्यं रूपमुक्तदिशैवेति तथैवात्र व्याख्यातम्। (३) व्यत्ययेन (पा० ३।१।८५) द्वितीयार्थे प्रथमा। (४) "अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति गम्यते" इति वचनाल्लट्परकास्तेः क्रियानुक्तावध्याहारः। तदत्र भवन्तीति लटः प्राचां संज्ञा इति शब्द आश्चर्यः। (५) आसत इति त्वर्थोऽस्तेरेव लड्बहुवचनान्तस्य उव्वटेनैवकृतोऽत्र धृतः ॥ (६) सुपां सुलुक्" (पा० ७।१।३९) इति जसो लुक्। महीधरस्तु यच्छब्दादपि संख्यापरिमाणे डतिप्रत्यये टिलोपेन यावन्त इति प्रथमाबहुवचनलोपेन (पा० ७।१।२२) व्याचख्यौ।

(७) अत्र मधुशब्दोमधुररसवचनत्वाद् गुणवचनस्ततो विहितस्य मतुपो लुक्। (पा० १।४।१९

उपगच्छन्तु(१)। वायवो मधु "वान्तु" इति शेषः। वहन्त्वित्यर्थः। सिन्धवः स्यन्दमाना नद्यः मधु क्षरन्ति क्षरन्तु। नद्यो मधुमत्यो भवन्तु(२)। ओषधीः ओषध्यः धान्यादयः माध्वीः मधुमत्यः (३)सन्तु। नक्तं रात्रिः मधु मधुमत् "अस्त्व"ति शेषः। मधुमती भवतु(४)। उत समुच्चये। उषसोऽपि प्रातःकाला अपि मधु मधुमत्यो मधुमय्यो भवन्तु(५)। पार्थिवं रजः (६)मधुमदस्तु। द्यौः स्वर्गः मधु मधुमत्यस्तु। द्यौः किम्भूता ? पिता पितेव(७)सर्वस्यानुकूलेत्यर्थः। वनस्पतिः सोमः नः अस्माकं मधुमानस्तु। सूर्यश्च नः अस्माकं मधुमानस्तु। गावश्च माध्वीः मधुमय्यो भवन्तु। ऋतायतेति "ऋ गतिप्रापणयोः" (भ्वा०प०) इति धातोर्लोडर्थेलट्। "तिङां तिङो भवन्तो"ति(८) बहुवचने एकवचनम्। क्षरन्तीत्याशंसायां लोडर्थे लट्। माध्वीरिति "सुपां सुपो भवन्ती"ति ( पा० ७।१।३९ ) प्रथमाया द्वितीया। सर्वमेतन्मधुमयं भवत्वित्याशंसावाक्यार्थः ॥ ९ ॥

नमो॑ वः पितरो॒ रसा॑य॒ नमो॑ वः पित॒रः॒
शोषा॑य॒ नमो॑ वः पितरो जी॒वाय॒ नमो॑ वः
पितरः॒ स्व॒धायै॒ नमो॑ वः पितरो घो॒राय॒
नमो॑ वः पितरो म॒न्यवे॒ नमो॑ वः पित॒रः॒
पित॑रो॒ नमो॑ वो गृ॒हान्नः॑ पितरो द॒त्त
स॒तो वः॑ पितरो देष्म ( ए॒तद्वः॑ पितरो॒ वासः॑ )॥ १० ॥

हे पितरः ! वः युष्माकं सम्बन्धिभूताय रसाय—रसप्रधानाय वसन्ताय नमः। वसन्ते हि मध्वादयो रसा भवन्ति। यद्वा ऋतुरूपतया पितर एव नमस्क्रियन्ते—हे पितरो ! वो युष्मभ्यं रसाय वसन्तरूपेभ्यो

---

वा० ) जलं विशेष्यमिति तत्वम् ॥ एवमग्रेऽपि। (१) ऋतं यज्ञं, तथा च निरुक्तम् "आपिगुऋतंनः" ( ऋ० सं-५-३=५ ) सत्यं वा यज्ञं वा ( ४।३।१९ ) इति। तदिच्छतीति ऋतायन् तस्मै ऋतायते यजमानाय। छान्दसोऽत्र दीर्घः। ( पा० ६।३।१३७ ) इत्युव्वटमहीधरौ। ऋधातोः साधनमत्र भ्रमः। (२) अत्र लोडर्थे व्यत्ययेन (पा० ३।१।८५) लट्। अग्रे लट् इत्युक्तिरर्थाभिप्रायिकेति बोध्यम्। (३) माध्वीरिति पृषोदरादि–( पा० ६।३।१०९ )–त्वात्साधुर्मत्वर्थेऽदन्तः। एवमग्रेऽपि बोध्यम्। (४) अत्र रात्रिर्विशेष्यतयोहिताऽनेन ॥ (५) उषश्शब्दःप्रभाते स्त्रीलिङ्गः। तथा च निरुक्तम् "उषाःकस्मादुच्छतीतिसत्या रात्रेरपरः काल" ( २।४।१८ ) इति ॥ उच्छी विवासे ( भ्वा० प० ) विनासयतीयं तमांसीति ॥ (६) पृथिवी लोकः। तथा च निरुक्तम् "लोका रजांस्युच्यन्ते" ( ४।३।१९ ) इति ॥ (७) तथा च श्रुतिः "द्यौर्मे पिता जनिता" ( ऋ० सं० २।३।२०।३ )। (८) एतच्च व्यत्ययबललभ्यमेव (पा० ३।१।८५) अस्य वार्त्तिकत्वोत्प्रेक्षणं ( पा० ७।१।३९ ) महीधरस्य भ्रम एव। तथा च व्यत्यये पठ्यते–"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति ॥

(१)नमः । एवमग्रेऽपि व्याख्येयम् । शोषाय-शोषप्रधानाय ग्रीष्माय । ग्रीष्मेऽपि ओषधयः शुष्यन्ति । जीवाय जीवनहेतुभूताय वर्षाभ्यः । स्वधायै पितॄणामन्नहेतुभूतायै-शरदे । शरदि प्रायेण व्रीह्यादयो भवन्ति । घोराय हेमन्ताय हेमन्तो हि घोरः । शीतप्राचुर्यात् । मन्यवे शिशिराय । मन्युः क्रोधः । क्रुद्ध एव शिशिरः ओषधीर्दहति । नमो वः पितरः पितर इत्यादरार्थं वीप्सा । हे पितरः ! वः युष्मभ्यं नमः । नः अस्मभ्यं गृहान् दत्त । भार्यापुत्रपौत्रादयो गृहशब्देनोच्यन्ते । किं च युष्मत्प्रसादात्तथा भवतु यथा हे पितरः ! गृहे सतः विद्यमानात् द्रव्यात् वः युष्मभ्यं देष्म दास्यामः । तथा च तादृग्वस्तु मम गृहं मा त्यजत्वित्याशास्महे ॥ १० ॥

अथ तर्पणोत्तरकर्ममन्त्राः—

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः ॥ स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥ १ ॥

ब्रह्म आदित्यरूपं पुरस्तात् प्राच्यां दिशि प्रथमं जज्ञानं जायमानं (२) जायत इत्यर्थः । ततोऽनन्तरं सीमतः मध्यस्थानात् इमान् लोकान् यो वि आ वः—व्यावृणोति विवृतान् करोति । मध्यस्थानात् किम्भूतात् ? सुरुचो बहुरोचमानात् । यद्वा लोकानित्यस्य विशेषणम् । सूर्यः किम्भूतः ? वेनः कान्तो(३)मेधावी वा ( निघं०३।१५।५ ) । स एवादित्यः बुध्न्या दिश इति यावत्, वि इत्यस्य आव इत्यनेनान्वयः । बुध्नमन्तरिक्षं तत्र भवा बुध्न्याः । किम्भूत दिशः ? उपमीयन्त आसु स्थितानि भूतानीत्युपमाः(४) । किं च अस्य जगतः विष्ठाः विविधं स्थानं, सतः विद्यमानस्य घटादेः मूर्त्तस्य, असतः अमूर्त्तस्य आकाशादेश्च योनिः स्थानं च विवः— विवृणोति । तस्मात् आदित्य एव सर्वप्रकाशक इति स्तूयते ॥ १ ॥

"इदं विष्णु"रिति व्याख्यातम् ॥२॥ "नमस्त"इति व्याख्यास्यते ॥३॥ "आकृष्णेने"ति देवपूजायाम् ॥ २ ॥

मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि ॥ द्युम्नं चित्रश्रवस्तमम् ॥ ५ ॥

---

(१) अत्रापि वचनव्यत्ययेन प्रयोगः । यद्वा 'सुपां सुलुक्' (पा० ७।१।३९) इत्यादिना साधनं बोध्यम् ॥ (२) जनैर्दृश्यमानं, जनेः प्रादुर्भावार्था—(दि०आ०) ल्लटः शानचि शपः श्लौ द्वित्वे उपधालोपे (पा० ६।४।९९) रूपम् । श्लुरत्र च्छान्दसः ( पा० २।४।७६ ) ॥ (३) तथा च निरुक्तम् "वेनो वेनतेः कान्तिकर्म्मणः" (१०।४।३८) इति ॥ (४) एतदुव्वटव्याख्यानम् । महीधरस्तु उप—समीपे मान्ति भूतानि यासु ता उपमाः सावकाशा इत्यर्थमाह ॥ तत्रश्च अत एवास्य जगतो विष्ठाः । विविधं

चर्षणीधृतः मनुष्याणां धारणेऽधिकृतस्य (१)मित्रस्य श्रवः रक्षणं "वयं स्तुम" इति वाक्यशेषः (२)। अवः कीदृशं सानसि सनातनम्—पुराणम्। ( निघं० ३।२७।४ ) किं च द्युम्नं यशः अन्नं वा (३) याचेमहीति वा, वयं स्तुम इति वा, वाक्यशेषः। द्युम्नं किम्भूतं? चित्रश्रवस्तमम्-अतिशयेन चाकर्णनीयम्(४)। अथवा यस्य एतादृशम् श्रवः द्युम्नं च स यजमानस्याभिमतं साधयत्वित्यर्थः ॥ ५ ॥

"इमम्म" इति व्याख्यातम् ॥ ६ ॥

अदृश्रमस्य केतवो विरश्मयो जनाँऽ२॥

अनु ॥ भ्राजन्तो अग्नयो यथा ॥ ७ ॥

अदृश्रमस्य केतव इत्यादि। अस्य सूर्यस्य रश्मयः किरणा अदृश्रम् दृश्यन्त इत्यर्थः। छान्दसं रूपम् (५) रश्मयः किम्भूताः ? केतवः—ज्ञानजनकाः। केतुरिति प्रज्ञानामसु ( निघं० ३।९।१२ ) पठितमित्युव्वटः। वि इत्यनर्थकः(६)। पुनः किम्भूताः ? जनान् अनु-अनुगताः। पुनः कीदृशाः ? भ्राजन्तो दीप्यमानाः। कीदृशा दृश्यन्ते ? यथा अग्नयः ॥ ७ ॥

हꣳ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषद-

तिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसद

ब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहत् ॥ ८ ॥

सूर्यं स्तोति-हंसः सूर्यः। हन्ति गच्छतीति हंसः, शुचिषत्। शुचौ वह्निमण्डले सीदतीति शुचिषत्। वसुः तेजोरूपः(७)। अन्तरिक्षे आकाशे सीदतीत्यन्तरिक्षसत्। होता-होममन्त्रेण देवानामावाहनकर्त्ता। वेदिषत्-यज्ञवेद्यां अध्वर्युरूपेण सीदति। अतिथिः क्वचिदपि न स्थायी नित्यंभ्रमणशीलः(८)। दुरोणसत्—दुरोणे गृहे ( निघं० २।४।७) (९) सीदतीति गृहस्थरूप्यध्ययमेवेत्यर्थः। नृषत्—नृषु मनुष्येषु सीदतीति "जीवात्मत्वेने"ति शेषः। वरसत्—वरेषु उत्कृष्टस्थानेषु स्वर्गादिषु सीदतीति "दे-

---

तिष्ठन्ति यासु ताः—विविधस्थानभूताः। "पूर्वपदात्" ( पा० ८।३।१०६ ) इतिषत्वम् ॥ ( १ ) चर्षणिरितिमनुष्यनाम। ( निघं० २।२।७।९ ) मनुष्याणां, धारयितुः। क्विबन्तमेतत्। संहितायां दीर्घः ( पा० ६।३।१५७ )। ( २ ) याचेमहीति वेति उव्वटमहीधरौ। ( ३ ) तथा च निरुक्तम्—"द्युम्नं द्योततेर्यशोवाऽन्नं वेति ( ५।१।५ ) ॥ ( ४ ) चित्रमनेकविधमनेकैः श्रूयत इति चित्रश्रवः। 'श्रुश्रवणे' ( भ्वा० प० ) असुन् कर्मणि। अतिशयेन चित्रश्रवश्चित्रश्रवस्तमम्। अत्यन्तश्रवणीयम्।

( ५ ) दृशेः कर्मणि लुङि प्रथमपुरुषबहुवचने रूपं द्रष्टव्यम्। लङत्र लङर्थे ( पा० ३।४।६ ) ॥

( ६ ) अथ वा व्यदृश्रमिति सम्बन्ध इत्युव्वटमहीधरौ। विशेषाद्दृश्यन्ते। ( ७ ) वसुर्वासयिता, वायुरूपेणान्तरिक्षे सीदतीति–उव्वटः। वासयिता नराणां प्रवर्त्तक इति महीधरः। ( ८ ) तथा च निरुक्तम्। "नित्यमभ्यवितो गृहान्नित्यतिथिः ( ४।१।६ ) इति ॥ ( ९ ) तथा च निरुक्तम्। "दुरोण

वत्वेने"ति शेषः । ऋतसत्—ऋते सत्ये ज्ञाने सीदतीति । परमात्मत्वेनेत्यर्थः । व्योमसत्—व्योम अन्तरिक्षं तत्र सीदतीति ज्योतिःस्वरूपेण । अब्जाः-अप्सु जायते अग्निरूपेण,(१)। गोजाः–गवि पृथिव्यां जायते "जरायुजाण्डजस्वेदजोद्भिज्जरूपेणे"ति शेषः । ऋतजाः-ऋते सत्ये जायते "त्रयीरूपेणेति शेषः ।"अद्रिजाः-अद्रौ पर्वते जायते स्फुलिङ्गरूपेण । ऋतं सूक्ष्मं बृहत्स्थूलं सर्वव्यापितया अनवच्छिन्नपरिमाणमित्यर्थः । तथा चायमेव ब्रह्मरूप इति सूर्यस्तुतिः ॥ ८ ॥

सँव्वर्च्चसा पयसा सन्तनूभिरगन्महि मनसा

सꣳशिवेन ॥ त्वष्टा सुदत्रो विदधातु

रायोऽनुमार्ष्टु तन्न्वो यद्विलिष्टम् ॥ ९ ॥

त्वष्टारं स्तौति-वयं वर्च्चसा ब्रह्मवर्च्चसेन, पयसा दुग्धेन अर्थात् गोभिः । तनूभिः भार्यापुत्रादिभिः । शिवेन कल्याणेन (२)मनसा च समगन्महि(३)सङ्गता भवेम । अर्थात् त्वष्टुः प्रसादात् । किं च सुदत्रः—कल्याणदः त्वष्टा मम रायो धनानि विदधातु । किञ्च तन्वः (४)शरीरस्य यद्विलिष्टं मन्दश्लिष्टं(५) पापादि तत् अनुमार्ष्टु शोधयतु स एव ॥ ६ ॥

"देवा गातुविद" इत्यग्रे व्याख्यास्यते ॥ १० ॥

इति तर्पणान्तकर्ममन्त्रव्याख्या ॥*॥

अथ देवपूजामन्त्राः ।

आकृष्णेन रजसा व्वर्त्तमानो निवेशयन्नमृतं

मर्त्त्यं च ॥ हिरण्ययेन सविता रथेना देवो

याति भुवनानि पश्यन् ॥ १ ॥

सविता आदित्यः आयाति आगच्छति । किम्भूतः सविता ? देवः स्तुतिदीप्तिक्रीडादियुक्तः । केनायाति ? रथेन । किम्भूतेन ? हिरण्ययेन हिरण्मयेन सौवर्णेन । किं कुर्वन् ? भुवनानि भुवनवर्त्तिलोकान् पुण्यपापकर्तॄन् पश्यन् साक्षिवन्निरीक्षमाण इत्यर्थः । न केवलमेवं किं तु अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् । "स्वे स्वे व्यापारे" इति शेषः । मनुष्या हि सूर्यो-

इति गृहनाम दुरवा भवन्ति दुस्तर्पाः" ( ४।१।७ ) इति ॥ (१) अत्र सर्वत्र "जनसनखनक्रमगमो विट्" (पा० ३।२।६७) इति विट्प्रत्यये "विड्वनोरनुनासिकस्यात्" (पा०६।४।४१)।इति नस्यात्वम् ॥

(२) कर्मश्रद्धायुक्तेन। (३) गच्छतेर्लङि अदादित्वाच्छपो लुकि उत्तमबहुवचने 'मोनो धातोरि" ( पा० ८।२।६५ ) ति मस्य नकारः ॥ (४) 'तन्वादीनां बहुलं छन्दसि" ( पा० ६।४।७७ ) इति यणादेशः । षष्ठ्यत्रावयवलक्षणा बोध्या । (५) विशेषेण न्यूनमङ्गन्तदनुमार्ष्टु न्यूनत्वपरिहारोपायानुकूलं कृत्वा शोधयतु । "लिशअल्पीभावे" ( दि० ५० ) निष्ठान्तम् ।

दये यागादिभिर्देवान् प्रीणयन्ति । पुनः किम्भूतः सविता ? आवर्त्तमानः। पुनः पुनस्तमेव देशमागच्छन् । केन सह ? रजसा रात्रिकालेन । प्रायो रात्रौ रजोगुणबाहुल्येन रजःशब्देन रात्रिरुच्यते ( निघं० १।७।१२ ) किम्भूतेन रजसा ? कृष्णेन मलिनेन । प्रायो रात्रिकाले पुण्यकर्मणामनुत्पादनात् रात्रेः कृष्णत्वमुक्तम् । अयं वाक्यार्थः । यः सविता देवो मनुष्यव्यापारस्य स्थापकः यश्च पुण्यपापसाक्षी तस्यार्घादिकमुचितमिति । अत्र आयातीति व्यवहितेनाङा सम्बन्धः, आवर्त्तमान इत्यत्र च "छन्दसि परेऽपि" "व्यवहिताश्चे ( १।४।८१-८२ ) ति पाणिनीयसूत्रात् । हिरण्यय इति हिरण्मयार्थे निपातः ( पा० ६।४।१४७ ) ॥१॥(१)

गणानांन्त्वा गणपतिँ हवामहे प्रियाणांन्त्वा-

प्रियपतिँ हवामहे निधीनान्त्वा निधि-

पतिँ हवामहे व्वसो मम॥आहमजानि

गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥ २ ॥(२)

हे वसो ! मम सर्वस्वभूत ! त्वा त्वां हवामहे—आह्वयामः । त्वां किम्भूतं ? गणानां मध्ये गणपतिं, गणाः कूष्माण्डादयः । प्रियाणां मध्ये प्रियपतिं, निधीनां मध्ये निधिपतिं, निधयः पद्मादयः । तथा च विघ्नोपशमाय भार्यादिप्रियलाभाय च त्वाम् आह्वयाम इति वाक्यार्थः । अश्वं प्रार्थयन्ते स्त्रियः । आहमजानीति । हे अश्व ! त्वां च अहं गर्भधम् अजानि-ज्ञातवती । अतः हे अश्व ! त्वं गर्भधं गर्भधो ममासि वेत्यर्थः (३) ॥ २ ॥

अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन ॥

ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥ ३ ॥

अम्बा अम्बिका अम्बालिका एतानि दुर्गानामानि हे अम्बे ! अम्बिके ! हे अम्बालिके ! मा-मां कश्चन कश्चिदपि न नयति न प्रापयति । "स्वामिसन्निधानमि"ति शेषः । तथा च सति अश्वकः पतिः ससस्ति शेते । अश्वशब्दः पतिवाचकः । कुत्सायां कन् । किं कृत्वा ? सुभद्रिकां परिरभ्ये"—ति शेषः । सुभद्रिकां किम्भूतां ? काम्पीलवासिनीं काम्पीलं नगरं

---

( १ ) स्मार्त्तकर्मणि अनेन मन्त्रेण सूर्यदेवस्य सपर्य्या ज्ञातव्या ॥

अत्र प्रमाणं पाराशरस्मृतिवचनम् "आकृष्णेनेति मन्त्रेण सूर्यमाराधयेत्सुधीरि"ति ॥

( २ ) अनेन सर्वकर्मादौ विघ्नविनायकस्यावाहनादिकं विधेयमिति तत्रैव ( पराशरीये ) उक्तेश्च ॥ ( ३ ) अयमर्थः । हे अश्व ! गर्भधं गर्भधारकं रेतः अहम् आ आकृष्य अजानि क्षिपामि । "अजगतिक्षेपणयोः" ( भ्वा० प० ) लोट् । त्वं च गर्भधं रेतः आ—आकृष्य अजासि क्षिप । लेट् । तस्याडागमः ( पा० ३।४।९४ ) इति ॥ एतद्व्याख्याने च स्वर्थेऽम् ।

तत्र वसतीति तां काम्पीलवासिनीम्। काम्पीले हि सुरूपाः सुभगा विनीताश्च स्त्रियो भवन्ति। अत्रायं वाक्यार्थः-अनेन मन्त्रेण सौभाग्यकामनया स्त्रिया देवी पूज्यते। हे अम्बे इत्यादिना दुर्गां सम्बोध्य कश्चिदपि मां स्वामिसन्निधि न नयति तेन मया विना स मदीयः स्वामी अन्यां गृहीत्वा शेते। अतो मया पूजिता भवती मां स्वामियुक्तां करोत्विति तात्पर्यम्। ससस्तीति 'सस स्वप्ने" इति धातो रूपम्॥ ३॥ (१)

अग्निन्दूतं पुरो दधे हव्यवाहमुप ब्रुवे॥

देवाँ २॥ ऽआसादयादिह॥ ४॥

अहम् अग्निं पुरो दधे अग्रतः स्थापयामि। अग्निं किम्भूतं? दूतं देवाह्वानकर्त्तारम्। पुनः किम्भूतं? हव्यवाहं हविषो वोढारम्। तदनन्तरम् उपब्रुवे उपगत्य ब्रवीमि। किं? इह देवान् आसादयात्। इह यज्ञगृहे इन्द्रादीन्देवानासादयत्वित्यर्थः॥ ४॥ (२)

विष्णो रराटमसि विष्णोऽ श्नप्त्रे स्थो

विष्णोऽ स्यूरसि विष्णोर्ध्रुवोसि॥

वैष्णवमसि विष्णवे त्वा॥ ५॥

यज्ञगृहावयवस्पर्शने विनियोगोऽस्य मन्त्रस्य। तत्र रराट्यां स्पृशति। रराटी वर्त्तिकाबन्धः(३)। हे गृहावयव! त्वं विष्णोः रराटमसि (४)। रराटं ललाटम् (५)। विष्णोः श्नप्त्रे सृक्किणी स्थः। येन सीव्यते तं प्रत्याह-त्वं विष्णोः स्यूरसि। सीव्यते अनेनेति स्यूः (६)। ग्रन्थिं स्पृशति-विष्णोर्ध्रुवोऽसि-ध्रुवः ग्रन्थिर्भवसि। समस्तं गृहं स्पृशति-त्वं वैष्णवं विष्णुदेवताकमसि। अतस्त्वां विष्णवे विष्णुप्रीत्यर्थं स्पृशामीत्यर्थः॥ ५॥ (७)

नमः शम्भवाय च मयोभवाय च नमः

शङ्कराय च मयस्कराय च नमः शिवाय

च शिवतराय च॥ ६॥ (८)

शम्भवाय शिवाय नमः। शम्भवत्यस्मादिति शम्भवः। मयः सुखं भवत्यस्मादिति मयोभवस्तस्मै मयोभवाय शिवाय च। शङ्करोतीति शङ्करस्तस्मै। मयः सुखं करोतीति मयस्करस्तस्मै। शिवाय कल्या-

---

(१) अनेन मन्त्रेण शक्तिमात्रार्चनं पाराशरेणाभिहितम्॥ (२) अनया ऋचाऽग्न्यावाहनादिकं बोध्यम्॥ (३) दर्भमालेतिमहीधरः। (४) विष्णुनामकस्य हविर्द्धानमण्डपस्य। (५) तत उच्छ्राय्यौ रराटीप्रान्तौ स्पृशति। (६) सूचिरसि। (७) अनेन विष्णोः पूजनादिकम्। (८) अनेन शिवार्चनं ज्ञातव्यमिति॥

णाय शिवतराय च। केचित् त्र्यम्बकं यजामहे इति मन्त्रेण पूजयन्ति स च नीलसूक्ते व्याख्यातव्यः ॥ ६ ॥

इति शत्रुघ्नविरचितायां मन्त्रार्थदीपिकायामाह्निकपरिच्छेदः ॥ १ ॥ * ॥

अथ श्राद्धमन्त्रव्याख्यानम्।

विश्वे॑ देवास॒ऽआग॑त शृणु॒ता म॑ऽइ॒मꣳ हव॑म् ॥ एदम्ब॒र्हिर्निषी॑दत ॥ १ ॥

हे विश्वेदेवासः! विश्वेदेवाः! यूयं मे मम इमं हवम् आह्वानं शृणुत। श्रुत्वा च आगत आगच्छत(१)। आगत्य च इदं बर्हिः कुशम्। अत्र आनिषीदत-उपविष्टा भवत। आसनार्थाय कल्पितेषु कुशेषु उपविष्टा भवतेत्यर्थः। अत्र विश्वे देवास इत्यत्र "आज्जसेरसुगि"ति (पा० ७।१।५०) असुगागमः ॥ १ ॥

विश्वे॑ देवाः शृणु॒तेमꣳ हव॑म्मे॒ ये॑ऽअ॒न्तरि॑क्षे॒ यऽउप॒ द्यवि॒ ष्ठ ॥ ये॑ऽअग्निजि॒ह्वाऽउ॒त वा॒ यज॑त्राः आ॒सद्या॒स्मिन् ब॒र्हिषि॑ मादयध्वम् ॥ २ ॥

हे विश्वेदेवाः? यूयं मे मम हवम् आह्वानं शृणुत। ये यूयम् अन्तरिक्षे स्थ तिष्ठथ। ये च उप समीपे पृथिव्याम्। ये च द्यवि स्वर्गे स्थ। ये च अग्निजिह्वाः अग्निर्जिह्वा हविर्भोजनसाधनं येषां ते। उत वा अथ वा ये यजत्राः यजन्तं श्राद्धकारिणं त्रायन्त इति यजत्राः पुरूरवार्द्रवप्रभृतयः। अस्मिन् बर्हिषि आसद्य आसन्ना भूत्वा मादयध्वम् हृष्टा भवतेति। स्वार्थे णिच् ॥ २ ॥

उ॒शन्त॑स्त्वा॒ निधा॑मह्यु॒शन्तः॒ समि॑धीमहि ॥ उ॒शन्नु॑श॒त ऽआव॑ह पि॒तॄन् ह॒विषे॒ ऽअत्त॑वे ॥ ३ ॥

हे अग्ने! त्वा-त्वां निधीमहि मादधीमहि। तवाधीनं कुर्म्म इति यावत्। वयमित्यध्याहार्य्यम्, वयं किम्भूताः? उशन्तः इच्छन्तः। अर्थात्त्वां, यद्वा पित्राह्वानं, किं च उशन्त एव वयं त्वां समिधीमहि ज्वालयामः। तेन त्वं पितॄन् आवह आह्वय। त्वं किम्भूतः? उशन् इच्छन् "हवि"रिति शेषः। पितॄन् किम्भूतान्? उशत इच्छतः। "श्राद्धीयं हवि"रिति" शेषः। आह्वानं किमर्थमित्याह अत्तवे अदनाय, यद्वा हविषे हविषः (२)अत्तवे अदनाय। तथा च हे अग्ने! एवमाराधितस्त्वमस्मत्पितॄनावाहयेति वाक्यार्थः। अत्तवे इति तुमर्थे तवेङ् प्रत्ययः (पा० ३।४।९)॥

(१) अत्र शपो लुक्। (पा० २।४।७३) मलोपः। (पा० ६।४।३७) ॥ (२) अत्र षष्ठ्यर्थे

आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः
पथिभिर्देवयानैः ॥ अस्मिन्यज्ञे स्वधया
मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ४ ॥

नः अस्माकं पितरः आयन्तु आगच्छन्तु। किम्भूताः? सोम्यासः सोम्याः सोमपाः। पुनः किम्भूताः? अग्निष्वात्ताः अग्निना सु-शोभनं यथा स्यादेवं आत्ताः भक्षिताः श्रौतस्मार्त्ताग्निदग्धा इत्यर्थः। यद्वा अग्निना सु-शोभनं यथा स्यादेवं दग्धाः। तादृशा एव हि श्राद्धयोग्या भवन्तीत्यभिप्रायः (१)। कैरागच्छन्तु? पथिभिः। किम्भूतैः? देवयानैः देवानां यानं सञ्चारो यैरित्यर्थः। आगत्य च अस्मिन् यज्ञे श्राद्धयज्ञे अस्मानधिब्रुवन्तु अधिकं ब्रुवन्तु श्लाघयन्त्वित्यर्थः। पितरः किम्भूताः? स्वधया श्राद्धीयान्नेन मदन्तः तृप्यन्तः। किं च न केवलं अधिब्रुवन्तु किन्तु ते अस्मानवन्तु च रक्षन्तु च। सोमपा अग्निष्वात्तादयः पितरः आगत्य मां श्लाघन्तां रक्षन्तु चेति वाक्यार्थः ॥ ४ ॥

शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ॥
शँय्योरभिस्रवन्तु नः ॥ ५ ॥

आपः नोऽस्माकं "पितृणामि"ति शेषः शं भवन्तु कल्याण्यो भवन्तु। किम्भूताः? देवीः देव्यः। स्तुतिक्रीडादियोग्याः। किमर्थम्? अभिष्टये-उपचयार्थं, (२)पीतये पानार्थं च। किं च नः पितृणां शंयोः कल्याणयोगाय अभिस्रवन्तु अभिमुखं स्रवन्तु। शंयोरिति शं शब्दात् मत्वर्थीयो युस्प्रत्ययः। चतुर्थ्यर्थे षष्ठी (पा० २।३।६२)। अभिष्टय इति "स्त्यैष्ट्यै शब्दसङ्घातयोः" (धा० प०) अभिपूर्वः "स्त्यः प्रपूर्वस्य" (पा० ६।१।२३) ति योगविभागात्सम्प्रसारणं, तादर्थ्ये चतुर्थी ॥ ५ ॥

यवोऽसि यवयास्मद्द्वेषो यवयारातीः ॥ ६ ॥

हे यव! त्वं यवोऽसि। पृथक्करणोऽसि यतः अतः अस्मद्द्वेषः द्विषः अस्मदरातीश्च यवय परस्परभिन्नान् संहतिरहितान् कुरु। तथा च यतस्त्वं पृथक्कारी अतोऽस्मच्छत्रूनपि पृथक्कुर्वित्यर्थः। द्विषः कृत्रिमशत्रवः। अरातयः सहजशत्रवः। यव इति "युमिश्रणामिश्रणयोः" (भ० प०) इत्यस्य पचाद्यच्। अस्यैव यव इति रूपम्। अरातिशब्दः स्त्रीलिङ्गोऽपि वेदे(३) ॥ ६ ॥

---

चतुर्थी (पा० २।३।६२ वा०)॥ (१) अत्रार्थे "पूर्वपदात्" (पा० ८।३।६) इति षत्वमार्षं बोध्यम्॥ (२) अभिषेकस्य अभीष्टाय वेत्युवटमहीधरौ॥ (३) तथा च श्रूयते—"यथा पुरन्ति-

तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः ।

प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्-

लोकान् प्रीणाहि नः स्वाहा ॥ ७ ॥

तिलोऽसि । पवित्रत्वेन प्रसिद्धोऽसि । सोमो देवता अस्येति सोमदेवत्यः (१)। गोसवः गां स्वर्गं सूते इति गोसवः। देवनिर्मितः । देवेन विष्णुना स्वयं निर्मितः। अद्भिः पृक्तः जलमिश्रितः। यतस्त्वमेवम्भूतः सर्वोत्कृष्टः। अतः नः अस्माकं पितॄन् लोकान् पितृपितामहप्रपितामहादीन् प्रत्नं चिरकालं स्वधया स्वधाकारेण श्राद्धीयान्नेन वा प्रीणाहि प्रीतान् कुरु, स्वाहा सुहुतो भव (२) ॥ ७ ॥

या दिव्या आप. पयसा सम्बभूवुर्याऽआन्त-

रिक्षाऽउतपार्थिवीर्य्याः । हिरण्यवर्णा यज्ञियास्ता

नऽआपः शिवाः शꣳस्योनाः सुहवा भवन्तु ॥ ८ ॥

ताः आपः नःअस्माकं शिवाः क्षेमा भवन्तु । याः पयसा सम्बभूवुः । पयसा क्षीरेण संयुक्ताः बभूवुः। माधुर्यादिशीतत्वादिना एकीभूता इत्यर्थः। या दिव्या दिवि स्वर्गे भवाः। या आन्तरिक्षाः अन्तरिक्षे भवाः। उत अपि च याः पार्थिवीः। पृथिव्यां भवाः(३)। आपः किम्भूताः ? हिरण्यवर्णाः हिरण्यं रजतं तत्समानवर्णाः। हिरण्यं रजतमित्युव्वटः। पुनः किम्भूताः ? यज्ञियाः यज्ञार्हाः। ताः आपः अस्माकं शिवाः क्षेमा भवन्तु । न केवलं क्षेमाः अपि तु शं कल्याण्यो भवन्तु । स्योनाः सुखदाश्च । सुहवाः सुष्ठु ब्राह्मणहस्ते हुता भवन्तु । स्योनं सुखनाम ( निघं० ३।६।१५ ) तथा च निरुक्तम् "स्योनमिति सुखनाम स्यतेरवस्यन्त्येतत्सेवितव्यं भवतीति वा" इति ( ८।६ ) ॥ ( ४ ) ॥ ८ ॥

पितृभ्यः स्थानमसि ॥

हे पात्र ! त्वं पितृभ्यः पितॄणां स्थानमसि भवसि। यतस्त्वं पितॄणां स्थानं भवसि अतः पितॄणामवस्थानाय न्युब्जीकृतमित्यभिप्रायः। "आगतास्तत्र तिष्ठन्ति पितरः श्राद्धदेवताः" इतिप्रमाणम् ॥ (५)

अग्नये कव्यवाहनाय स्वाहा ॥

अग्नये स्वाहा। अग्नये किम्भूताय ? कव्यवाहनाय । कव्यं पितृणा-

---

रजद्दादरातीः" (ऋ० सं० ३।६।२५।७) इति। ( १ ) अनेनार्थप्रदर्शनमात्रकृतम्। व्युत्पत्तिस्तु सोमदेवताया अयमिति। ततश्च "देवतान्तात्तादर्थ्येयत्" ( पा० ५।४।२४ ) इति यत्प्रत्ययः ॥ ( २ ) अयं मन्त्रः कात्यायनमहर्षिप्रणीतनवकण्डिकाश्राद्धसूत्रमध्ये पठितः॥ ( ३ ) पृथिव्यां भूता इति 'ख' पुस्तकपाठः॥ ( ४ ) अयमपि श्राद्धसूत्रस्थो मन्त्रो ज्ञातव्य इति॥ ( ५ ) अयमपि श्राद्धसूत्रस्थः ॥ अत्रापि

मन्नं, तत्पितृभ्यो वहति प्रापयतीति कव्यवाहनः ॥ ८ ॥

सोमाय पितृमते स्वाहा ॥

किम्भूताय सोमाय? पितृमते-पितरस्तत्र सन्तीति पितृमान् तस्मै। मधु वातेति व्याख्यातं तर्पणे ॥ ६ ॥

पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे
अमृते अमृतं जुहोमि स्वाहा ॥ १० ॥

हे अग्नौकरणशेष अन्न! ते तव पात्रम् आधारः पृथिवी विश्वाधारभूता। द्यौः आकाशम् अपिधानम् आवरणम्, त्वां च ब्राह्मणमुखे ब्राह्मणस्य मुखे जुहोमि। किम्भूतम्? अमृतं(१) हुतावशिष्टम्। किम्भूते ब्राह्मणमुखे? अमृते-अनष्टे अभक्ष्यादिभिरदूषिते। अन्यदपि हविः अदृश्यदर्शनोपहतं भवतीति ते पिधानं क्रियत इत्यर्थः। पृथिवी ते पात्रमित्यनेन भोजनपात्रमभिधीयते। ब्राह्मणमुखस्याग्निसदृशत्वात् जुहोमि इत्युक्तम्(२) ॥ १० ॥

इदं विष्णुर्विचक्रमे त्रेधा निदधे
पदम् ॥ समूढमस्य पाᳪसुरे स्वाहा ॥ ११ ॥

यः विष्णुर्भगवान् इदमन्नं विचक्रमे आक्रान्तवान्। स विष्णुः त्रेधा त्रिप्रकारेण पदं चरणं निदधे निहितवान्। पृथिव्यामाकाशे स्वर्गे च। तेन च समूढमस्य पांसुरे। अस्य विष्णोः पदं पांसुरे पांसुले धूलिमये प्रदेशे अर्थात् पृथिव्यां समूढं सम्यक् निविष्टम्, तथा च विष्णुः पृथिव्यां पदं निहितवान् अतस्तदुत्पन्नत्वेनान्नमप्याक्रान्तवानतो राक्षसास्तस्मादपसरन्त्विति वाक्यार्थः। स्वाहा सुहुतमस्तु ॥ ११ ॥

अपहताऽअसुरा रक्षाᳪसि वेदिषदः ॥ १२ ॥

असुराः अपहताः अपसारिताः "सन्त्वि"ति वाक्यशेषः। किम्भूताः? वेदिषदः वेदिः श्राद्धार्थं परिष्कृता भूमिः तत्र सीदन्ति इति वेदिषदः। न केवलमसुराः किन्तु रक्षांसि राक्षसाश्च अपसारिताः सन्तु। तथा च तिलप्रक्षेपेणासुरादयः श्राद्धस्थानादस्माद‌पसरन्त्विति वाक्यार्थः। गायत्री मधु वातेति च व्याख्यातौ ॥ १२ ॥

ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः
स्वधया चरन्ति ॥ परापुरो निपुरो ये
भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ॥ १३ ॥

---

षष्ठ्यर्थे चतुर्थी ॥ (१) "अमृतं विघसो यज्ञशेषभोजनशेषयोः" इत्यमरः। (२) इयमृक् श्राद्धसूत्रीया।

उल्मुकं परस्तात्करोति । ( का० सू० ४।१। ) ये असुराः पितृरूपाणि आत्मनि प्रतिमुञ्चमाना बध्नन्तः धारयन्तः असुराः सन्तः भवन्तः स्वधया पित्र्येणान्नेन हेतुभूतेन अस्माभिरेतत् खादितव्यमिति चरन्ति-सञ्चरन्ति । किं च परापुरः पराक्रान्ताः पुरः शरीराणि महान्ति इति । निपुरः निकृष्टा पुरः सूक्ष्माणि शरीराणि च ये भरन्ति-बिभ्रति-धारयन्ति । अग्निस्तानसुरान् अस्मात् लोकात् स्थानात् प्रणुदाति प्रणुदतु प्रेरयतु अस्मात्-पितृलोकात् । प्रतिपूर्वो मुचिर्बन्धनार्थः ॥ १३ ॥

अनग्निदग्धा ये जीवा येऽप्यदग्धाः

कुले मम ॥ भूमौ दत्तेन तृप्यन्तु

तृप्ता यान्तु परां गतिम् ॥ १४ ॥

अग्निदग्धाश्चेति पौराणिकः स्त्रीशूद्रकर्तृकश्राद्धे, येऽप्रदग्धेति विशेषस्तत्र अतः । अनग्निदग्धेति, निगदव्याख्यातम् ॥ १४ ॥

अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् ॥

हे पितरः ! अत्र मादयध्वम् । अत्र पिण्डे मद्युक्ता हर्षयुक्ता भवत । किं च यथाभागं प्राप्य आवृषायध्वम्(१)-वृषा इव बलिनो भूत्वा स्वेच्छया महद्भिर्ग्रासैरेतान् पिण्डानश्नीत । पिण्डोपभोगार्थं पितॄणामभ्यर्थना वाक्यार्थः ॥ १४ ॥

अमीमदन्त पितरो यथाभागमावृषायिषत ॥ १५ ॥

ते (२)पितरः अमीमदन्त "मद्दत्तेन पिण्डेने"ति शेषः । तथा च मद्दत्तपिण्डेन हर्षयुक्ता भूत्वा यथाभागम् आवृषायिषत सर्वतोभावेन वृषवत्स्वो चक्रुः । मद्दत्ते पिण्डे स्वं स्वं भागं, प्राप्य वृषा इव बलिनो जाताः । पूर्वमन्त्रे अभ्यर्थना । अस्मिन्मन्त्रे सिद्धार्थकथनमिति भेदः । नमो व इति तर्पणे व्याख्यातम् ॥ १५ ॥

एतद्वः पितरो वासः ॥ १६ ॥

हे पितरः ! वः युष्मभ्यमेतद्वास आच्छादनं "दीयत" इति शेषः । ऊर्ज्जं वहन्तीरिति व्याख्यातम् ॥ १६ ॥

वाजेवाजेऽवत वाजिनो नो धनेषु विप्राऽ

अमृताऽऋतज्ञाः ॥ अस्य मद्ध्वः पिबत

मादयद्ध्वं तृप्ता यात पथिभिर्द्देवयानैः ॥ १७ ॥

---

(१) आङ् पूर्वाद्वृषशब्दा—"स्कर्तुः क्यङ्सलोपश्च" ( पा० ३।१।११ ) इति क्यङ् । ततो लोण्मध्यमपुरुषबहुवचने रूपम् ॥ (२) यान्प्रति मादयध्वमित्युक्तम् ।

वाजिनः वाजमन्नं ( निघं० २।७।२ ) येषां अस्तीति वाजिनः। तथा च श्राद्धदत्तमन्नं पितॄणामस्ति इति पितर एव वाजिन उच्यन्ते। हे वाजिनः! पितरः! यूयम् अवत रक्षत। कुत्र? नः अस्माकं वाजे वाजे-अन्ने अन्ने। तथा च मत्कृतमकृतं चान्नं यत् श्राद्धार्थमुपकल्पितं तत्र सर्वत्र। न केवलं तत्र किं तु धनेष्वपि द्रव्येष्वपि। यूयं किम्भूताः? विप्रा विप्रमूर्त्तयः। पुनः किम्भूताः? अमृता अमरणधर्माणः। पुनः किम्भूताः? ऋतज्ञाः सत्यज्ञानशालिनः। रक्षित्वा च अस्यान्नस्य मध्वः मधूनि(१) रसान् पिबत। यद्वा एतत्सम्बन्धिनो मध्वः मधुनः रसं पिबत। पीत्वा च मादयध्वं तृप्यध्वं, तृप्ताः सन्तः पथिभिर्वर्त्मभिर्यात गच्छत। कैः? देवयानैः-देवानां यानानि तैरधिष्ठितैरित्यर्थः। अत्र तृप्ताः सन्तः स्वर्गं गच्छतेति वाक्यार्थः ॥१७॥

आ मा वाजस्य प्रसवो जगम्यादेमे द्यावा-

पृथिवी विश्वरूपे ॥ आ मा गन्तां पितरा

मातरा चामा सोमोऽअमृतत्वेन गम्यात् ॥ १८ ॥

वाजस्यान्नस्य ( निघं० २।७।२ ) प्रसवः-फलं, मा-माम् प्रति। आजगम्यात्-आगच्छेत् (२)। अस्मिन् श्राद्धे कृतस्यान्नदानस्य फलं मां पुनः पुनरागच्छत्वित्यर्थः। किं च इमे द्यावापृथिवी-द्यावापृथिव्यौ (३)मा-माम्प्रति आजगम्याताम्। द्यावापृथिवी किम्भूते? विश्वरूपे-विश्वं सर्वं रूपं ययोस्ते विश्वरूपे। एतेन पृथिवीस्वर्गसम्बन्धिकल्याणं मामागच्छत्वित्याशास्ते। किं च हे पितरा मातरा च हे पितः मातश्च(४) मा-मां प्रति युवाम् आगन्ताम् आगच्छताम्। तथा च यदा यदा अहं श्राद्धं करोमि तदा तदा मातापितरौ आगच्छतमिति प्रार्थना। किं च पितॄणां राजा सोमः मा माम् आगम्यात्-आगच्छतु। किमर्थम्? अमृतत्वेन अमृतत्वाय(५) मोक्षाय। तथा चानेनानुव्रजनेन मम श्राद्धफलं पार्थिवसुखं स्वर्गश्च भवतु। श्राद्धसमये मातापितरौ मामागच्छेतां मोक्षश्च भवत्वित्याशंसावाक्यार्थः ॥ १८ ॥

अथ सपिण्डनमन्त्रव्याख्यानम् ॥

ये समानाः समनसः पितरो

(१) विभक्त्यादिव्यत्यय आर्षः। (पा० ३।१।८५)॥ (२) आङ् पूर्वाद्गच्छतेर्व्यत्ययेन (पा० ३।१।८५) श्लादित्वे लिङि श्लौ द्वित्वे रूपम् ॥ (३) "दीर्घाज्जसि च" "वाच्छन्दसि" (पा० ६।१।१३५-१३६) इति वा पूर्वसवर्णदीर्घः। (४) निपाताविमौ (पा० ६।३।३३)। द्वन्द्वे "मातरपितरावुदीचाम्" (पा० ६।३।३२) इत्युपक्रम्य। तथा च व्यस्तपदेन सम्बोधनमत्र। किन्त्वस्मदीयः पिता माता चेत्येवमर्थः कार्यः। सोऽयमनेनापि दर्शितोऽनुपदम्प्रार्थनावाक्यार्थे। (५) चतुर्थ्यर्थे व्यत्ययेन (पा० ३।१।८५) तृतीया ॥

यमराज्ये ॥ तेषाँल्लोकः स्वधा
नमो यज्ञो देवेषु कल्पताम् ॥ १ ॥

तेषां पितॄणां लोकः स्थानम् । एतस्मै प्रेताय पित्रे स्वधा(१) भवतु । किं च नमो यज्ञः नमस्कारकृतो यज्ञः देवेषु पुरूरवार्द्रवप्रभृतिषु कल्पतां क्लृप्तो भवतु । देवश्राद्धं ( श्राद्धं ) भवत्विति यावत् । तथाऽनेन सपिण्डनकर्मणा प्रेतस्य पितृलोकप्राप्तिः पार्वणश्राद्धाधिकारश्च भवत्विति वाक्यार्थः । ये पितरः पितामहादयः समानाः सपिण्डनेन समानलोकं गताः । अत एव समनसः समानहृदयाः यमराज्ये यमाधिकारे स्थिताः ॥१॥

ये समानाः समनसो जीवा जीवेषु
मामकाः ॥ तेषा ँ श्रीर्मयि कल्प-
तामस्मिँल्लोके शतं समाः ॥ २ ॥

तेषां प्रसादेनेत्यध्याहार्य्यम् । तेन तेषां पितॄणां प्रसादेन मयि श्रीर्लक्ष्मीः कल्पतां भवतु । अस्मिन् लोके इहैव जन्मनीत्यर्थः । कियन्तं कालं ? शतं समाः शतवर्षाणि । तथा चानेन कर्मणा पितृप्रसादेन मम शतं वर्षाणि लक्ष्मीर्भवत्विति वाक्यार्थः । ते के पितरः ? समानाः समनस इति पदद्वयं व्याख्यातम्, ये जीवेषु सूक्ष्मशरीराधिष्ठानेन कर्मणां भोक्तृषु मध्ये तत्सम्बन्धिनो जीवाः सूक्ष्मशरीरावच्छिन्नकर्मभोक्तारः ते । अन्यत्पार्वणवत् सर्वं समानम् ॥ २ ॥

अथ वृद्धिश्राद्धमन्त्रव्याख्या । अत्र यवोऽसि पितृदैवत्यः । स्वधया स्थाने पुष्ट्या । नान्दीमुखानिति विशेषः । तथा च पुष्ट्या नान्दीमुखान् पितन् प्रीणयेति योजना । अन्यत्सर्वं पार्वणसमानम् ।

अथ श्राद्धीयसूक्तमन्त्रव्याख्यानम् ॥

कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि
राजेवामवाँ इभेन ॥ तृष्वीमनुप्रसितिं-
द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥ १ ॥

हे अग्ने ! पाजः बलं कृणुष्व कुरु । पाजःशब्दो बलनामसु पठितः (निघं० २।९।२) । किमिव ? प्रसितिं न पृथ्वीं । पृथ्वीं विशालां प्रसितिं वागुरामिव(२) । यद्वा पृथुजालमिव । नकार उपमार्थीयः । ततो याहि अर्था

(१) स्वधाशब्दोपलक्षितमन्नमस्तु । यद्वा—तेषां पितॄणां लोक आयतने स्वधाकारोपलक्षितमन्नमस्तु इत्युव्वटव्याख्यानम् ॥ (२) प्रसितिर्जालं "प्रसितिः प्रसयनात्तन्तुर्वा जालंवा" । निरु० ६।१२ । इति यास्कोक्तेः । "षिञ्बन्धने" प्रकर्षेण सीयन्ते बध्यन्ते पक्षिणो यया सा प्रसितिस्तां, नकार इवार्थः । ( निरु०१।४ ) पक्षिग्रहणाय प्रसारितं जालमिव शत्रुग्रहणाय बलं प्रसारयेत्यर्थः ।

"रक्षत्रून्प्रती"ति शेषः। क इव? अमवान्-अमात्यवान् राजेव। यद्वा अमवान् अमात्यवान् भूत्वा राजेव याहीत्यन्वयः। यद्वा गृहवान् भूत्वा। अमशब्दो गृहवचनः(१)। केन? इभेन इभमयेन बलेन। यद्वा इभेन हस्तिना। गत्वा चानु पश्चात् तृष्वीं तृष्व्या क्षिप्रया (२)प्रसितिं प्रसित्या वागुरया जालेन वा द्रूणानः हिंसन् (३)अस्तासि-क्षेप्तासि (४)"शत्रूणामि"तिशेषः। अतो ब्रवीमि-तपिष्ठैः (५)अतिशयेन क्लेशकरैः प्रहारै-रक्षसः राक्षसान् विध्य ताडय(६)॥ १॥

तव॑ भ्र॒मास॑ऽआशु॒या प॑त॒न्त्यनु॑ स्पृश

धृ॒ष॒ता शोशु॑चानः॑ ॥ तपू॑ष्यग्ने जु॒ह्वा॑ पत॒-

ङ्गानस॑न्दितो॒ विसृ॑ज॒ विष्व॑गुल्काः॑ ॥ २ ॥

हे अग्ने! ये ते भ्रमासः भ्रमणाः वातोद्धताः अर्थात् ज्वालासमूहाः पतन्ति इतस्ततो गच्छन्ति। तैः तपूंषि तापयितॄन् (तपेरुसिः) अर्थाद्रक्षांसि अनुस्पृश अभिस्पृश (दह)। ज्वालासमूहाः किम्भूताः? आशुयाः आशवो जवनाः (७)। त्वं किम्भूतः? धृषता (८) धृष्टेन ज्वालासमूहेन शोशुचानः दीप्यमानः(९)। किं च पतङ्गान् (१०)रक्षांसि लक्षीकृत्य असन्दितः अनवखण्डितः सन् विष्वक् सर्वतः जुह्वा स्रुचा "हूयमान" इति शेषः। उल्काः विसृज विक्षिप। पतद्गमनानि येषां तान् पतङ्गान्। असन्दित इति "दो अवखण्डन" इत्यस्य रूपम्। तथा च रक्षोऽभिघातं कुर्वित्यर्थः॥ २॥

प्रति॒स्पशो॒ विसृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शो

---

(१) निघण्टु (३। ५। ११) अमाशब्दो गृहवचनः पठ्यते। तत्रह्रस्व आर्ष इति स्वन्यत्। तेनात्र (अमशब्दस्य गृहवाचित्वे) मूलम् "अमगत्यादिषु" (भ्वा० प०) अत्रादिपदेन शब्दसम्भक्ती गृह्येते। अमन्ति सम्भजन्ति जना यत्तत्। यद्वा अमन्ति भजन्ति स्वामिन इत्यमाः सेवकास्तेऽस्य सन्तीत्यमवान्सहायवान्। पचाद्यजन्तादमशब्दान्मतुप्। इभेन याहि शत्रून्प्रति। (२) अत्र विभक्तिव्यत्ययः (पा० ३।१।८५)। तृषु इति क्षिप्रनामसु (निघं २।१५।१०) पठ्यते ततो ङीष् (पा० ४।१।४४) (३) "दॄञ्हिंसायां" (क्र्या० उ०) लटः शानच्। क्र्यादित्वात् श्ना शपः स्थाने बोध्यः। (४) "असुक्षेपणे" (दि० प०) लुट्। (५) तापकतमैरायुधैः। तपन्ति सन्तापयन्तीति तपूंषि। अतिशयेन तपूंषि तपिष्ठानि तैः। "तुरिष्ठेमेयःसु" (पा० ६।४।१५४) इति तृचो लोपः॥ (६) "व्यधताडने" (दि० प०) श्यनि संप्रसारणम्। लोटो मध्यमैकवचनेरूपम्॥ (७) शीघ्रगमनाः। आशुशब्दात्परस्य जसः "सुपां सुलुक्"-(पा० ७।१।३९) इत्यादिना यादेशः। (८) धृषतिः प्रगल्भार्थः। (दि० स्वा०) धृष्णोतीति धृषन्। तेन। बाहुलकाच्छयन्श्नवोरभावः। (९) शुच्दीप्तौ" (भ्वा० प०) यङन्ताल्लटः शानच्। अत्यन्तं शोचति-दीप्यते इति। (१०) पतन्तः सन्तो गच्छन्तीति पतङ्गास्तान्।

ऽअस्या ऽअदब्धः ॥ यो नो दूरे अघशंसो यो

ऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् ॥ ३ ॥

नः अस्माकं यः अघशंसः पापकीर्त्तको दुर्जनः अन्ति-अन्तिके यश्च दूरे तिष्ठति। हे अग्ने! तं प्रति स्पशः प्रणिधीन् बन्धनकृतः(१) विसृज प्रेरय। तूर्णितमो भव अतिशयेन तूर्णो भव (२)। किं च अस्याः मदीयायाः विशः जनपदजातेः पायुः पालयिता भव। अदब्धः-अनुपहिंस्यः। एवं च पातेरुण्-युक्। हे अग्ने! ते तव माकिः मा कश्चित् व्यथिः(३) व्यथयिता शत्रुरादधर्षीत् धर्षको भवतु ॥ ३ ॥

उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ ऽ२॥ ओषता-

त्तिग्महेते ॥ यो नोऽ अरातिꣳ समिधान चक्रे

नीचा तन्धक्ष्यतसन्न शुष्कम् ॥ ४ ॥

हे अग्ने ? उत्तिष्ठ। किञ्च प्रत्यातनुष्व(४) अर्थात् ज्वालासमूहान्। किं च हे तिग्महेते ? (५)अमित्रान् निः ओषतान्निर्दह। "उषदाहे" लोट् तस्य रूपम्, तिग्महेत इति तिग्मं तीक्ष्णं हेतिर्ज्वाला आयुधं वा यस्य स तथोक्तः। किञ्च यः नः अस्मभ्यं दानप्रवृत्तम् अरातिम् अदानं चक्रे अश्रद्धादिना निवारयति स्म। हे समिधान! समिध्यमान! तं नीचा नीचैः कृत्वा धक्षि दह। "दहभस्मीकरणे" (भ्वा०प०) कमिव ? (६)। शुष्कं अतसं न अतसमिव(७) वृक्षमिव। नकार उपमार्थीयः (निरु० १।४)। अरातिमिति "रादान" इत्यस्य क्तिनि रूपम् ॥ ४१ ॥

ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व

दैव्यान्यग्ने ॥ अवस्थिरा तनुहि यातुजूनां

जामिमजामिं प्रमृणीहि शत्रून् ॥ ५ ॥

हे अग्ने! ऊर्ध्वो भव ऊर्ध्वस्तिष्ठ। स्थित्वा च अस्मत् अधि मम उप-

(१) "स्पशबाधनस्पर्शनयोः" (भ्वा० उ०) ततोऽसुन् (उ० ४।१८८) "स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययम्" इति मेदिनी। (२) तूर्णं वेगोऽस्यास्तीति तूर्णी—अतिशयेन तूर्णी तूर्णितमः वेगवत्तमः ॥ (३) अत्र "इन्सर्वधातुभ्यः" (उ० ४।१८८) इति इन् प्रत्ययः। व्यथिः। (४) प्रत्यातनुहि—विस्तारय। (६) उत्साहवदाशु धेति तदर्थः। (५) लोटि प्रथमैकवचने "वहुलं छन्दसि" (पा० २।४।७३) इति शपोलुकि सिपि रूपम्। धरवकरवधरषानि। (७) "अतसा वनानि" (ऋ० स० ८।४।१४।५) इतिश्रुतौ अतसानि अनुपक्षीणानि इति दुर्गव्याख्यानम्। तावता वृक्षार्थावगमः सम्भवति किन्त्वत्रातसपदार्थविशेष्यं वृक्षमेव भाष्यकृतोऽमन्यन्तेतिवृक्षा एव वनानि भवन्तीति ॥ "तसु उपक्षये" (दि० प०) पचाद्यच् (पा० ३।१।१३४) नञ् समासः ॥ अतसेति शे (पा० ६।१।७०) लोपे श्रुतौ बोध्यम् ॥

रि स्थितान् शत्रून् प्रति विध्य-ताडय । "व्यधताडने" लोट् श्यनि स-म्प्रसारणम् । किं च आविष्कृणुष्व दैव्यान्यग्ने ! । हे अग्ने दैव्यानि देवसं-म्बन्धीनि कर्माणि शरीराणीनि वा आविष्कृणुष्व-प्रकाशीकुरु । किञ्च या-तुजूनां यातुधानानां जवनप्रधानानां स्थिरा स्थिराणि धनूंषि अवतनुहि अ-वतारय नियमय । तथा च यातुधानानां सर्वाण्येवास्थिराणि भवन्तु । कि-ञ्च शत्रून् जामिं-पुनरुक्तम् अजामिम्-अपुनरुक्तं कृत्वा प्रमृणीहि पुनः पु-नर्मारयेत्यर्थः(१) । जामिशब्दः पुनरुक्तवचनः ॥ ५ ॥

उदीरितामङ्गिरसो न इति मन्त्रद्वयं तर्पणे व्याख्यातम् ।

ये नः पूर्वे पितरः सोम्यासोऽनूहिरे
सोमपीथं वसिष्ठाः । तेभिर्यमः संरराणो
हवीᳩष्युशन्नुशद्भिः प्रतिकाममत्तु ॥ ६ ॥

नः अस्माकं ये पूर्वे पितरः सोम्यासः सोमयज्ञसम्पादिनः सोमपीथं सोमपानम् अनूहिरे अनुप्रापितवन्तः । अर्थात् देवान् प्रति । "वह प्रापणे" लिट् । ते किम्भूताः ? वसिष्ठाः वसिष्ठस्य बहून्यपत्यानि वसिष्ठाः (२) तेभिः तैः संरराणः सन् यमः हवींषि अत्तु भक्षयतु । यमः किम्भूतः ? उशन् कामयमानः "वशकान्तौ" (अ०प०)(३) । किम्भूतैः ? उशद्भिः । अत एव प्रतिकामं यथाकाममत्तु भक्षयतु ॥ ६ ॥

त्वᳪं सोम प्रचिकितो मनीषा त्वᳪं रजिष्ठ-
मनुनेषि पन्थाम् ॥ तव प्रणीती पितरो नऽ
इन्दो देवेषु रत्नमभजन्त धीराः ॥ ७ ॥

हे सोम ! प्रचिकितः प्रचिकित्वान् प्रकृष्टचैतन्ययुक्तः त्वं मनीषा यज्ञानां मनस इच्छा तया(४) (त्वया) युक्तो भवसि । यद्वा हे सोम ! त्वं प्रचिकितः प्रकृष्टज्ञातासि "चितीसंज्ञाने" । या च ते मनीषा बुद्धिः तया रजिष्ठं ऋजुतमं पन्थां पन्थानं(५) देवयानाख्यम् अनुनेषि अनुगमयसि । किं च तव प्रणीती-प्रणीत्या प्रणयेन (६)तवाभ्यनुज्ञानेन हे इन्दो ! नः अस्माकं पितरः कर्म कृत्वा देवेषु मध्ये रत्नं रमणीयं यज्ञफलम् अभजन्त भुक्तवन्तः । पितरः किम्भूताः ? धीरा धीमन्तः ॥ ७ ॥

---

(१) पुनः पुनस्ताडितमताडितं कृत्वा मारयेत्यर्थः । मृणातिर्मारणार्थ इति महीधरः । (२) "अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च" (पा० २।४।६५) इत्यपत्यार्थस्याणो लुक् ॥ तेभिरित्यत्र "बहुलं छन्दसि" (पा० ७।१।१०) इति भिस ऐसभावः पूर्वस्यैत्वम् ॥ (३) लटः शतरि संप्रसारणम् । (पा० ६।१।१६) (४) विभक्तेर्लुक् (पा० ७।१।३९)। (५) "अयस्मयादीनि च्छन्दसि" (पा० १।४।२०) इति सर्वनामस्थानेऽपि पदसंज्ञायां नलोपे सवर्णदीर्घः ॥ (६) अत्र पूर्वसवर्णदीर्घः । (पा० ७।१।३९) तृतीयैकवचनेन बोध्यः ।

त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः
पवमान धीराः ॥ वन्वन्नवातः परिधीँ ऽरपोर्णु वीरेभिरश्वैर्मघवा भवा नः ॥ ८ ॥

हे सोम ! हि यस्मात्त्वया आश्रयभूतेन नः अस्माकं पूर्वे पूर्वजाः पितरः कर्माणि चक्रुः कृतवन्तः। हे पवमान! पावनार्ह! पावनहेतो! तस्मात्त्वामिदं प्रार्थये—वन्वन् सम्भजमानः सन् "वनसम्भक्तौ" (भ्वा० प०) अस्मदीयानि तानि "कर्माणी"ति शेषः। परिधीन् यज्ञोपद्रवकारिणः अपोर्णु अपगमय। त्वं किम्भूतः? अवातः वाताद्युपद्रवशून्यः सन्नित्यर्थः। वीरेभिः वीरैरश्वैः सह। किं च नोऽस्माकम् मघवा भव धनवान्भव। भवा-इत्यस्य संहितायां दीर्घः। मघं धनं देहीति यावत्। यो यस्मै धनं ददाति स तस्य धनवानित्यभिधीयते। पितरः किम्भूताः? धीराः धीमन्तः ॥ ८ ॥

त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवीऽआततन्थ ॥ तस्मै तऽइन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम् ॥ ९ ॥

हे सोम! यस्त्वं पितृभिः संविदानः संवादं कुर्वाणः। द्यावापृथिवी द्यावापृथिव्यौ। आततन्थ आतनोषि। "तनुविस्तारे" हे इन्दो! सोम! तस्मै ते हविषा विधेम परिचरेम हविर्दद्म इत्यर्थः। वयं च हविः प्रदानानन्तरं रयीणां धनानां पतयः स्याम भवेम। सोमवतां पितॄणां षडृचम् ॥ ९ ॥

बर्हिषदः पितरऽऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ॥ तऽआगतावसा शन्तमेनाथा नः शंयोररपो दधात ॥ १० ॥

हे बर्हिषदः पितरः! बर्हिषि सीदन्तीति बर्हिषदः बर्हिर्यज्ञभागिनो वा ऊती ऊत्या गत्या अर्वाक् अर्वाच आगतागच्छत। किमर्थम्? इमा इमानि वो युष्माकं हव्या हव्यानि हवींषि वयं चकृम कृतवन्तः। तानि च आजुषध्वं सेवध्वम्। यैश्च युष्माभिः अधस्तनानि हवींषि सेवितानि ये यूयं पुनरपि आहूयमाना आगत आगच्छत। अथाऽनन्तरं शन्तमेन शिवतमेन सुखयितृतमेन अवसा अन्नेन (निघं०२।७।६) हविर्लक्षणेन हेतुभूतेन परितुष्टाः। यज्ञसमाप्त्युत्तरकाले नः अस्माकं शंयोः शमनं रोगाणां, यावनं च भयानां, दधात धत्त। शंयोरिति पदद्वयमेतदित्युव्वटः (निरु०४।२१)।

अन्यदपि यत्किञ्चित् अरपः अपापं(१)तदस्माकं दधात धत्त ॥ १० ॥

आऽहं पि॒तॄन्त्सु॑वि॒दत्राँ॑ऽ२॥ अवित्सि॒ नपा॑तं

च वि॒क्रम॑णं च॒ विष्णो॑ः ॥ ब॒र्हि॒षदो॒ ये स्व॒धया॑

सु॒तस्य॒ भज॑न्त पि॒त्वस्त॑ऽइ॒हाग॑मिष्ठाः ॥ ११ ॥

अहं पितॄन् आ अवित्सि आभिमुख्येन अवेदिषं विदितवान्। पितॄन् किम्भूतान्? सुविदत्रान् कल्याणदानान्। विष्णोर्यज्ञस्य नपातं च विक्रमणं च विदितवान्। न पातोस्ति यस्मिन् गतानां स नपातः देवयानः पन्थाः। विविधं क्रमणं यत्र स विक्रमणः पितृयानः पन्थाः। तत्र हि-आरहट्टघटीवदुत्तराधरं प्राणिनो गच्छन्ति। तथा च देवयानपितृयान-पन्थानौ यज्ञसम्बन्धिनौ अवेदिषं तद्वासिनः पितॄँश्च। अतोऽहमेवं ब्रवीमि ये बर्हिषदः पितरः स्वधया अन्नेन सह सवनीयलक्षणेन सुतस्याभिषु-तस्य सोमस्य पित्वः पानं सोमपानमिति यावत्। तत् भजन्त भज-ते(२)सेवन्ते ते इह कर्मणि आगमिष्ठाः आगच्छन्तु(३) ॥ ११ ॥

उप॑हूताः पि॒तर॑ः॒ सो॒म्यासो॑ ब॒र्हि॒ष्येषु

नि॒धिषु॑ प्रि॒येषु॑ ॥ तऽआग॑मन्तु॒ तऽइ॒ह

श्रु॑वन्त्वधि॑ब्रुवन्तु॒ ते॒ऽवन्त्व॒स्मान् ॥ १२ ॥

ये पितरः सोम्यासः सोमसम्पादिनः बर्हिष्येषु निधिषु प्रियेषु हविर्विशेषेषु हविर्विशेषनिमित्तम् उपहूताः आहूताः ते पितरः इह आगमन्तु (४)आगच्छन्तु। बर्हिष्येषु (५)बर्हिषि भवेषु। आसादितेषु वा। निधिषु निहितेषु (६)प्रियेषु पितॄणामभिरुचितेषु। आगत्य च ते इह श्रुवन्तु (७)शृण्वन्तु मदीयानि वचांसि। श्रुत्वा चाधिब्रुवन्तु श्लाघ-यन्तु। यद्वा पुत्रेषु पितॄणां यद्वक्तव्यम्भवति तद्वदन्तु। किं च ते अस्मान् अवन्तु रक्षन्तु ॥ १२ ॥

आयन्तु न इति तर्पणे व्याख्यातः ॥

अग्नि॑ष्वात्ताः पितर॒ऽएह॒ ग॑च्छत॒ सद॑ः॒ सदः

सद॒त सुप्रणीतयः ॥ अ॒त्ता ह॒वी॑ᳪषि॒ प्रय॑तानि

ब॒र्हि॒ष्यथा॑ र॒यिᳪ सर्व॑वीरं दधातन ॥ १३ ॥

आ इह एह। हे अग्निष्वात्ताः पितरः! इह आगच्छत। आगत्य च

(१) तथा च निरुक्तम् "रपोरिप्रमिति पापनामनी भवतः" (४।खं०२१) नञ्समासः। (२) लडर्थे लङ्। अडभाव आर्षः। (३) लोडर्थे लुङ्। पुरुषवचनव्यत्ययः। (४) व्यत्ययेन शपो लुक्। (५) बर्हिषि भवेषु (पा० ४।४।११०) यत्। (६) निधिवत्स्थापनीयेषु। (७) अत्र बाहुलकाच्छपो लुकि लुकाऽनुत्पत्तिरेवान्वाख्यायत इति श्नुविषयाभावाच्छृ इनुवौ (पा०।३।१।७४)

सदः सदः गृहं गृहं प्रति सदत उपविशत। ततः सुप्रणीतयः सुप्रणयना सुखोपविष्टाः सन्तः हवींषि अत्तेति। संहितायां दीर्घः। भक्षयत हवींषि। किम्भूतानि? प्रयतानि शुचीनि। पुनः किम्भूतानि? बर्हिषि "स्थापितानि" इति शेषः। अथ तृप्ताः सन्तः सर्ववीरं रयिं धनं दधातन निधत्त (१) सर्वे वीरा यस्मात्तत्सर्ववीरम् ॥ १३ ॥

ये अ॑ग्निष्वात्ता ये॑ऽअन॑ग्निष्वात्ता मध्ये॑

दिवः॑ स्वधया॑ मा॒दय॑न्ते ॥ तेभ्यः॑ स्व॒राडसु॑नी-

तिमे॒तां य॑थाव॒शं त॒न्वं॑ कल्पयाति ॥ १४ ॥

ये पितरः अग्निष्वात्ताः अग्निना सु आत्ताः (२)ये च अनग्निष्वात्ताः श्मशानकर्म्म न प्राप्ताः। मध्ये दिवः द्युलोकस्य मध्ये स्वधया स्वकर्मफलोपभोगेन मादयन्ते सुखं सेवन्ते। तेभ्यः तेषां स्वराट् परमेश्वरः एताम् एतम्(३) असुनीतिं यमं सहायं कृत्वा यथावशं यथाकामं यथारुचि तन्वं—तनुं शरीरं कल्पयाति कल्पयति-कल्पयतु (४)। तथा च परमेश्वरः यमं सहायं कृत्वा तेषां पितॄणां शरीरं कल्पयतु इति वाक्यार्थः। स्वराट् स्वेनैव राजत इति अकृतकत्वयः। असुनीतिम् असून् प्राणान् नयतीति असुनीतिर्यमः ॥ १४ ॥

अ॒ग्नि॒ष्वा॒त्तानृ॑तु॒मतो॑ हवामहे नाराश॒ᳪं॑से

सो॑मपी॒थँय्य॒ ऽआ॒शुः॒ ॥ ते नो॒ विप्रा॑सः सु॒हवा॑-

भवन्तु व॒यᳪं स्या॑म॒ पत॑यो र॒यी॒णाम् ॥ १५ ॥

अग्निष्वात्तान् पितॄन् ऋतुमतः ऋतुसंयुक्तान् हवामहे आह्वयामः। कान्? इत्याह ये नाराशंसे चमसे सोमपीथं सोमपानम् आशुः प्राप्नुयुः। श्रुतौ—चमसे पितॄणां भक्षः श्रूयते—"पितृभ्यो नाराशंसेभ्य" इत्यत्र। ते च आहूयमानाः नः अस्माकं सुहवाः स्वाह्वानाः भवन्तु। ते किम्भूताः? विप्रासः विप्राः। (५) मेधाविनः। एवं कृते वयं रयीणां धनानां (निघं २।१०) पतयः स्याम भवेम ॥ १५ ॥

आच्या जानु॑ दक्षिण॒तो नि॒षद्ये॒मं य॒ज्ञ-

---

न भवतः। (१) निधत्त—स्थापयत। अत्र "तप्तनप्तनथनाश्च" (पा० ७।१।४५) इति तस्य तनबादेशः। अथा—इत्यत्र "निपातस्यच"—(पा० ६।३।१३६) इति दीर्घः। (२) विधिवदौर्ध्वदेहिककर्म्मप्राप्ताः।

(३) महीधरस्तु एताम्मनुष्यसम्बन्धिनीन्तनुं शरीरमित्याह। अत्र "तन्वादीनाञ्छन्दसि" (पा० ६।४।७७ वा०) इति यण्॥ एतमिति लिङ्गव्यत्यय इत्युव्वटः। (४) लेटोऽडाटावागमः। (५) "आज्जसेरसुक्" (पा० ७।१।५०) इत्यसुगागमः। विप्र इति मेधाविनाम (निघं० ३।१५।१)

मभिगृणीत विश्वे ॥ मा हिंसिष्ट पितरः
केनं चिन्नो यद्वऽआगः पुरुषता करांम ॥ १६ ॥

हे विश्वे ? हे पितरः ! जानु अर्थात् सव्यम् आच्य पातयित्वा दक्षिणतो निषद्य दक्षिणतोऽवस्थानं कृत्वा। अयं च स्वभावनिर्देशः पितॄणाम्। एवं स्वभावाः पितरो भवन्ति "अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीदन्निति" श्रुतेः। इमं मदीयं यज्ञं श्राद्धम् अभिगृणीत-अभिष्टुत। "दक्षिणामन्त्रकालकर्तृहविर्यजमानोत्कर्षःसाधुरयं यज्ञ इति प्रकारेणे" ति शेषः। विश्वे सर्वे सोमवन्तो बर्हिषदोऽग्निष्वात्ताश्चेत्यर्थः। किञ्च हे पितरः ! केन चिदपि नः अस्मान्मा हिंसिष्ट मा नाशयत। यत् यद्यपि वः युष्माकं आगः अपराधं पुरुषता पुरुषतया (१) हेतुभूतया कराम कृतवन्तस्तथाऽपि मा हिंसिष्टेत्यर्थः। पुरुषाश्चलचित्ता भवन्तीत्यभिप्रायः ॥ १६ ॥

आसीनासोऽअरुणीनामुपस्थे रयिं धत्त
दाशुषे मर्त्याय ॥ पुत्रेभ्यः पितरस्तस्य
वस्वः प्रयंच्छत तऽइहोर्जन्दधात ॥ १७ ॥

हे पितरः ! ये यूयम् अरुणीनाम् अरुणानाम् ऊर्णानाम् अर्थात् कुतपानाम् उपस्थे-मध्ये आसीनासः आसीनाः उपविष्टाः स्थ। अरुणवर्णा हि ता ऊर्णा भवन्ति याभिः कुतपाः क्रियन्ते। यद्वाऽरुणवर्णानां सूर्यकिरणानाम् उपस्थे उत्सङ्गे आसीनाः सूर्यलोकस्था इत्यर्थः। ते यूयं मर्त्याय मनुष्याय दाशुषे दत्तवते अर्थाद्धवींषि यजमानायेति यावत्। रयिं धनं धत्त दत्त। किं च तस्य तेभ्यः वस्वः वसूनि प्रयच्छत। इदं यजमानार्थं पुत्रवचनम्। तथा च श्राद्धकारिभ्योऽपि पुत्रेभ्यो वसु दत्तेत्यभिप्रायः। किं च ते यूयम् इहास्मदीये यज्ञे ऊर्ज्जम् अन्नं बलं वा दधात स्थापतय ॥ १७ ॥

यमंग्ने कव्यवाहन त्वं चिन्मन्यसे
रयिम् ॥ तन्नो गीर्भिः श्रवाय्यं
देवत्रा पंनया युजंम् ॥ १८ ॥

हे अग्ने ! कव्यवाहन ! कव्यं वहतीति कव्यवाहनः। यं रयिं हविर्लक्षणं धनं त्वं चित् त्वमपि मन्यसे अवगच्छसि "अनेन श्रेयः प्राप्तुं शक्यते इत्यनेन प्रकारेणे"ति शेषः। तद्धविर्लक्षणं धनं नः अस्मदीयं गीर्भिः प्र-

(१) आङ आत्, (पा० २।१।३९) मनुष्यधर्म्म एष प्रमाद इति ॥

भूतवाग्भिः पुरोऽनुवाक्यायाज्यावषट्कारलक्षणाभिः देवत्रा देवेभ्यः पनया पनय देहि। हविः किम्भूतं ? श्रवाय्यं श्रवणीयं, युजं यथायुक्तं यथायोग्यमित्यर्थः। 'पनतिर्दानकर्मा' ॥ १८ ॥

योऽअग्निः कव्यवाहनः पितॄन्

यक्षदृतावृधः ॥ प्रेदु हव्यानि वोचति

देवेभ्यश्च पितृभ्यऽआ ॥ १९ ॥

यः अग्निः कव्यवाहनः कव्यं पितॄणामन्नं उह्योढा पितॄन् यक्षत् इष्टवान्। सः इदानीं प्रेदु हव्यानि वोचति इमानि हवींषि देवेभ्यः पितृभ्यश्च प्रवोचति प्रब्रवीतु। (१) पितॄन् किम्भूतान् ? ऋतावृधः सत्यवर्धयितॄन् यज्ञवृधो वा। आकारः समुच्चयार्थः ॥ १९ ॥

त्वमग्नऽईडितःऽकव्यवाहनावाड्ढव्यानि

सुरभीणि कृत्वी ॥ प्रादाः पितृभ्यः स्वधया

तेऽअक्षन्नद्धि त्वं देव प्रयता हवींषि ॥ २० ॥

हे अग्ने कव्यवाहन। यस्त्वम् ईडितः स्तुतो याचितो वा हव्यानि हवींषि अवाट् ऊढवानसि। किं कृत्वा ? सुरभीणि कृत्वी कृत्वा। (२)ऊढ्वा च तानि हवींषि पितृभ्यः प्रादाः प्रदत्तवानसि। ते च पितरः स्वधया पितृमन्त्रेण अक्षन् अत्तवन्तः भक्षितवन्तः। हे देव। त्वमपि प्रयता प्रयतानि हवींषि अद्धि भक्षय ॥ २० ॥

ये चेह पितरो ये च इत्यादि तर्पणे व्याख्यातः ॥

इदं पितृभ्यो नमोऽअस्त्वद्य ये पूर्वासो

यऽउपरासऽईयुः ॥ ये पार्थिवे रजस्या

निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु ॥ २१ ॥

इदं हविर्लक्षणम् नमोऽन्नम् अद्य अद्यतनं तेभ्यः पितृभ्यः अस्तु। ये पूर्वासः पूर्वाः पूर्वम् ईयुः अर्थात् स्वर्गं, ये च उपरासः उपरतव्यापाराः कृतकृत्याः अर्थात्परं ब्रह्म ईयुः याताः। ये च पार्थिवे रजसि आनिषत्ताः। पार्थिवं पृथिव्यां भवं रजो ज्योतिरग्निः(३)। तत्राभिमुख्येन निषण्णा अग्निलोकं प्राप्ता इत्यर्थः। येवा ये च नूनं निश्चयेन सुवृजनासु साधुवृत्तासु विक्षु यजमानलक्षणासु प्रजासु निषण्णास्तेभ्यः ॥ २१ ॥

अधा यथा नः पितरः परासः प्रत्नासोऽ

(१) इमानि देवेभ्य इमानि पितृभ्य इति ब्रवीतु ॥ लोडर्थेऽत्र लट्। अत्र इत्–उ–इति पादपूरणौ ॥ (२) कृत्वीति कृत्वेत्यर्थे निपात इति महीधरः। (३) तथा च निरुक्तम्—"रजो

अग्नऽऋतमाशुषाणाः ॥ शुचीदयन्दीधितिमुक्थशासः क्षामा भिन्दन्तोऽअरुणीरप व्रन् ॥ २२ ॥

हे अग्ने ! अधा अथानन्तरं देहयात्रोत्तरकालं यथा येनप्रकारेण नः अस्माकं पितरः शुचि शुचिम् ( इत् एवकारार्थे ) शुचिमेव दीप्तमेव भास्वरमेव दीधितिं रश्मिम् अयन् आगताः प्राप्ताः । दीधितिम् आदित्यरश्मिम् आदित्यमण्डलमिति यावत् । यत एष देवयानः पन्थाः । हे अग्ने ! त्वत्प्रसादात् क्षामा क्षमां पृथिवीं भिन्दन्तः वेदिचषालयूपावटादिखननैः । यद्वा पृथिव्याश्रयाणि व्रीहिपशुयूपादीनि भिन्दन्तः । यज्ञसर्वोपकरणानि अनुतिष्ठन्त इत्यर्थः । अरुणीः अरोचनाः दीधितीः रश्मीन् अर्थादादित्यस्य अपव्रन् अपवृणुमः । आच्छाद्य अपवृत्य च देवपन्थानमनुतिष्ठाम इति वाक्यार्थः । पितरः किम्भूताः ? प्रत्नासः प्रत्नाः पुराणाः । ऋतमाशुषाणाः ऋतं यज्ञम् आशुषाणाः आप्नुवन्तः । उक्थशासः उक्थानि ये शंसन्ति ते उक्थशासः । उक्थः सामविशेषः ॥ २२ ॥

उशन्तस्त्वेति तर्पणे व्याख्यातः ॥

इति महामहोपाध्यायशत्रुघ्नकृतायां मन्त्रार्थदीपिकायां श्राद्धमन्त्रपरिच्छेदः ॥ * ॥

---

सहस्तोमाः सहछन्दसऽआवृतः सहप्रमाऽऋषयः सप्तदैव्याः ॥ पूर्वेषां पन्थामनुदृश्य धीराऽअन्वालेभिरे रथ्यो न रश्मीन् ॥ १ ॥

अथ षडङ्गशतरुद्रियं व्याख्यायते ॥

अयं मन्त्रः ऋषिसृष्टिप्रतिपादकस्त्रिष्टुप् । सप्त ऋषयः भारद्वाज विश्वामित्रकश्यपगौतमात्रिजमदग्निवसिष्ठाः पूर्वेषां कल्पान्तराधिकारिणां पन्थां (१)पन्थानम् अनुदृश्य-अवलोक्य अन्वालेभिरे-अन्वारभन्त सृष्टिं कृतवन्तः । ऋषयः किम्भूताः ? सहस्तोमाः स्तोमसहिताः कारणस्तोमसहिताः । सहछन्दसः छन्दःसहिताः । आवृतः आवृच्छब्देन कर्मोच्यते । श्रद्धासत्यप्रधानानां कर्म्मणामनुष्ठातार इत्यर्थः । सहप्रमाः प्रमाणं प्रमा तया सहिताः प्रमाणपरीक्षकाः । धीरा धीमन्त इत्यर्थः ।

---

रजतेर्ज्योती रज उच्यते" ( ४।३।१९ ) इति । ( १ ) "अयस्मयादीनि च्छन्दसि" ( पा० १।४।२० ) इति सर्वनामस्थानेऽपि पदत्वान्न लोपः । पूर्वेषामधस्तनकल्पोत्पन्नानामवसिताधिकाराणाम्

दैव्याः (१)प्रजापतिप्राणाभिमानिनः। कथमित्यन्वालेभिरे ? रथ्यो न रश्मीन्। रथे साधुः रथ्यः सारथिः। नकार उपमार्थीयः। तथा च यथा सारथिः इष्टदेशप्राप्त्यर्थम् अश्वनियमनाय रश्मीन् प्रग्रहान् आलभते, एवं तेऽपि सृष्टियज्ञं सृष्टवन्त इत्यर्थः॥ १॥

यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य
तथैवैति॥ दूरङ्गमञ्ज्योतिषां ज्योतिरेकं
तन्मे मनः शिवसङ्कल्पमस्तु॥ २॥

"गणानां त्वा" इति देवपूजाप्रकरणे व्याख्यातः। ततः शिवसङ्कल्पव्याख्या॥ तन्मनः मे मम शिवसङ्कल्पमस्तु। शिवः सङ्कल्पोऽभिलाषो यस्य तत् शिवसङ्कल्पम्। तत्किम्भूतम् ? दैवम् अद्भुतशक्तिमत्(२)। तत्किं ? यत् जाग्रतः पुरुषस्य दूरम् उदैति दूरं गच्छति नाना विषयेषु सञ्चरतामिन्द्रियाणां सहकारित्वेनेतस्ततः सञ्चारत्वादित्यभिप्रायः। उ अप्यर्थे। तन्मनः सुप्तस्य तथैव एति स्वल्पविषयमपि भवति। इन्द्रियप्रसाराभावात्। मनः किम्भूतं ? ज्योतिषामिन्द्रियाणां मध्ये एकम् अद्वितीयं ज्योतिः। इन्द्रियमुख्यमित्यर्थः। तदधीनत्वात्सर्वेन्द्रियाणामिति भावः। पुनः किम्भूतम् ? दूरङ्गमम् इन्द्रियाणां मध्ये दूरगन्तृ। व्यवहिताव्यवहितविषयसाधारणत्वादित्यर्थः॥ २॥

येन कर्म्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति
विदथेषु धीराः॥ यदपूर्वं यक्षमन्तः
प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु॥ ३॥

येन मनसा अपसः अपस्विनः कर्मिणो मनीषिणो यज्ञे कर्माणि कृण्वन्ति कुर्वन्ति 'अपस इति कर्मनाम' (निघं०२।१।१) (३)। मनीषिणः मेधाविनः। मनीषिणः किम्भूताः ? विदथेषु (४)यज्ञेषु यज्ञसाधनज्ञानेषु वा धीराः पण्डिताः। (५)यत् मनः किम्भूतम् ? अपूर्वं न विद्यते पूर्वमिन्द्रियं यस्मात् 'कारणं वा यस्य' तत्, नित्यमित्यर्थः। अद्भुतं वा। पुनः

(१) देवस्य प्रजापतेरिमे दैव्याः॥

(२) उव्वटस्तु–देवो विज्ञानात्मा सोऽनेन गृह्यत इति दैवम्। उक्तं च "मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवमि"ति। (३) तद्विद्यते येषान्तेऽपस्विनः। "अस्मायामेधास्रजो विनिः (पा०५। २।१०२) इति विन्प्रत्ययः। 'विन्मतोर्लुगि' (पा० ५।३।६५) तीष्ठाभावेऽपि छान्दसो विनो लुक्। सदा कर्म्मनिष्ठा इत्यर्थः॥ (४) वेत्तेरौणादिकोऽथप्रत्ययः। प्रत्ययाद्युदात्तत्वेन मध्योदात्तं पदम्। प्रत्ययः, परश्च, आद्युदात्तश्च (पा० ३।१।१–२–३) इति पाणिन्युक्तेरिति महीधरः॥ (५)इन्द्रियेभ्यः पूर्वम्मनसः सृष्टेः। यद्वा "अपूर्वमनपरमबाह्यमि"त्युक्तेरपूर्वमात्मरूपन्तदेतदाह–अद्भुतमिति॥

किम्भूतं ? यक्षं (१)पूज्यं, भोक्तृ वा, प्रजानां प्राणिनामन्तः अन्तर्वर्त्ति, (२)तन्मे मन इति व्याख्यातम् ॥ ६ ॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं
म्प्रजासु ॥ यस्मान्नऽऋते किञ्चन कर्म्म क्रियते
तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥

यन्मनः प्रज्ञानं प्रकृष्टं ज्ञानं यस्मात्तत् । उत समुच्चये । अपि च यत् चेतः (३) चेतनायाः उपलब्धेर्हेतुः । धृतिश्च । यत् प्रजासु अन्तः हृदये अमृतंज्योतिः सुखहेतूनां प्रकाशकं, यस्मात् (४)ऋते विना किञ्चन कर्म न क्रियते "केनापी"ति. शेषः । तन्मे मनः शिव, इति व्याख्यातम् ॥ ३ ॥

येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन
सर्व्वम् ॥ येन यज्ञस्तायते सप्तहोता
तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥

येन मनसा इदं विद्यमानं भूतमतीतं, भविष्यत् भावि च, सर्वं भुवनं लोकं परिगृहीतं आक्रान्तम् (५)येन किम्भूतेन ? अमृतेन-नित्येन सुख-हेतुना(६) वा । येन च सप्तहोता (७)अग्निष्टोमस्तायते विस्तार्यते । तन्मे मनः शिवसङ्कल्पमस्तु ॥ ४ ॥

यस्मिन्नृचः साम यजूꣳषि यस्मिन्प्रतिष्ठिता
रथनाभाविवाराः ॥ यस्मिँश्चित्तꣳसर्व्वमोतं
म्प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ५ ॥

यस्मिन् मनसि ऋचः ऋग्वेदः प्रतिष्ठितः । यस्मिंश्च साम सामवेदः, यजूंषि यजुर्वेदश्च । एवं सर्वे वेदाः प्रतिष्ठिताः आश्रिताः । कुत्र क इव । रथनाभौ रथमध्ये ( चक्रे ) अरा(८)इव । यस्मिंश्च प्रजानां सर्वं

---

( १ ) यष्टुंशक्यं यक्षं, यजतेर्द्धातोरौणादिकः सन्प्रत्ययः, "ञ्नित्यादिर्नित्यम्" ( पा० ६।१।१९७ ) इतिप्रत्ययाद्युदात्तं पदम् ॥ ( २ ) इतरेन्द्रियाणि बहिष्ठानि । मनस्त्वन्तरिन्द्रियमिति भावः । ( ३ ) "चिती सञ्ज्ञाने" अस्माद्धातोर्ण्यन्तादसुन्प्रत्ययः । सामान्यविशेषज्ञानजनकमित्यर्थः । उक्तमपि पुनरुच्यते आदरार्थम् "अभ्यासे भूयांसमर्थं मन्यन्ते" इति निरुक्तकारयास्कोक्तेः ॥ धृतिर्धैर्यम् आधार आधेयोपचारान्मनस्येव सर्वमुत्पद्यते ॥ ( ४ ) "अन्यारादितरर्ते" ( २।३।२९ ) इति पाणिनिसूत्रादृतशब्दस्य योगे पञ्चमी । ( ५ ) स्वविषयीकृतम् मनसस्त्रिकालज्ञत्वात् । ( ६ ) अयमर्थः । मनोऽमृतं शाश्वतं मुक्तिपर्यन्तं, श्रोत्रादीनि नश्यन्ति । मनस्त्वनश्वरमिति ॥ ( ७ ) अग्निष्टोमे सप्त होतारो भवन्ति । बहुव्रीहेरनङ् ( पा० ७।१।९४ ) ( ८ ) "अरं शीघ्रे च चक्राङ्गे शीघ्रगे पुनरन्यवत्" इति विश्वमेदिन्यौ । पुंस्त्वमत्रार्षम् ॥

(१)चित्तं संज्ञानमोतं सम्बद्धं (२)तन्मे मन इति ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयते
भीशुभिर्वाजिनऽइव ॥ हृत्प्रतिष्ठं यदजिरं
जविष्ठन्तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥

मनुष्यान्नेनीयते हिताहितविषये प्रवर्त्तयति निवर्त्तयति च। (३) क इव सुषारथिः सुष्टु हयारोहः अभीशुभी रश्मिभिरश्वानिव। प्रयोक्तृसारथिः अश्वान् हिताहितविषये प्रवर्त्तयति निवर्त्तयति च। अश्वान् किम्भूतान्? वाजिनः वेगशालिनः। मनः किम्भूतं? हृत्प्रतिष्ठं हृदि प्रतिष्ठितम्। तत्रैव ज्ञानोत्पत्तेः। यच्च तत् अजिरमजरं नित्यं प्रौढं, जविष्ठं जवशालि वेगवत्। तन्मे मन (४)इति ॥ ६ ॥

अथ पुरुषसूक्तम्।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिꣳ सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

सहस्रशीर्षेति। पुरुष ईश्वरः। दशाङ्गुलं नाभेरूर्ध्वं व्यतिक्रम्य। अर्थात् हृत्पद्मेऽतिष्ठत्-स्थितोऽभूत्। अर्थवशाद्धृत्पद्मोपरि ज्ञानात्मकपुरुषरूपेण स एवान्तर्यामी कर्मफलोपभोजक इत्युच्यते। किं कृत्वा-भूमिं सर्वतः स्पृत्वा-व्याप्य। "स्पृङ्व्यायामे" (तु० आ०) सर्वतस्पृत्वा-इति कस्कादित्वात्सत्वम्। भूमिशब्दोऽत्र भूम्यारब्धप्राणिदेहवचनः। तेन

---

(१) सर्वपदार्थविषयि ज्ञानम्। (२) निक्षिप्तं तन्तुसन्ततमिव कृतम्। यथा तन्तुसन्ततिःपटे। एवं सर्वं ज्ञानं मनसि निहितम्। मनःस्वास्थ्य एव ज्ञानोत्पत्तिरिति ॥

(३) अत्र मनुष्यपदं प्राणिमात्रोपलक्षणम्। मन्त्रार्थस्तु—यन्मनो मनुष्यान्नेनीयते अत्यर्थमितस्ततो नयति। नयतेः क्रियासमभिहारे यङ्। मनःप्रेरिता एव प्राणाः प्रवर्त्तन्ते। अत्र दृष्टान्तः सुषारथिरश्वानिवेति। शोभनः सारथिर्यन्ता यथा कशया अश्वान्नेनीयते। द्वितीयो दृष्टान्तः अभीशुभिर्वाजिन इवेति। यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनो वेगेन व्रजतः (अपथगन्तॄन्) अश्वान्नेनीयत इत्यनुषङ्गः। रश्मिभिर्नियच्छतीत्यर्थः। इत्थमुपमाद्वयम्। प्रथमायां नयनं, द्वितीयायां नियमनं धात्वर्थः, तथा च मन एव प्रवर्त्तयति नियच्छति (निवर्त्तयति) च मनुष्यानित्यर्थः। तच्च मनः हृत्प्रतिष्ठम्। हृदि प्रतिष्ठा स्थितिर्यस्य तत्। हृद्येव मन उपलभ्यते। यच्च मनः अजिरं जरारहितम्। बाल्ययौवनस्थाविरेषु मनस एकरूपत्वात्। यच्च जविष्ठम् अतिजव (वेग) वत्। "न वै वातात्किञ्चनाशीयोऽस्ति, न मनसः किञ्चनाशीयोऽस्ती"ति श्रुतेः। आशीयोऽशुतमम् (शीघ्रतमम्) तन्मे इत्युक्तार्थः। सुषारथिरित्यत्र "सुषामादिषु चे—(पा० ८।३।९८) ति षत्वम्। "अभीशुः प्रग्रहे रश्मौ" इत्यमरः॥ वाजीति तु "वजगतौ" (भ्वा० प०) "आवश्यकाधमर्ण्ययोर्णिनिः" (पा० ३।३।१७०) इति णिनिरुपधावृद्धिश्च (पा० ७।२।११६) "वाजी बाणापूर्वपक्षिषु" इति मेदिनी। वाजाः पक्षा सन्त्येषामिति वा ॥

(४) मनः स्वास्थ्ये एव वेदत्रयीस्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम्। "अन्नमयं हि

सर्वभावेन त्रैलोक्यवर्तिनः पार्थिवदेहान् व्याप्येत्यर्थः । भूमिशब्दः पञ्च-भूतोपलक्षक इति केचित् । भूमिशब्दोऽत्र आधारोपलक्षकः । तेन तिर्यगु-दूर्ध्वाधोव्यापक इत्यर्थः । स क ईश्वरः ? सहस्रशीर्षा सहस्रशब्दोऽसङ्ख्यातवाचकः । तेनासङ्ख्यातशिरा(१) इत्यर्थः । पुनः किम्भूतः ? सहस्राक्षः सहस्रपात् । अत्राक्षशब्दः बुद्धीन्द्रियोपलक्षकः । तानि च पञ्च । तथा च त्रैलोक्योदरे वर्तमानानि शिरांसि बुद्धीन्द्रियाणि कर्मेन्द्रियाणि(२) च तानि सर्वाणि अस्यैवेत्यर्थः । अत्र नाभेरूर्द्ध्वं दशाङ्गुलम् अतिक्रम्य हृदयं भवतीति सकललोकानुभवसिद्धमेव । तत्र पुरि तिष्ठतीत्यत्र श्रुतिः प्रमाणं, तत्रहि "कतम आत्मे"त्युपक्रम्य "सोऽयं विज्ञानमयः पुरुषः, प्राणिषु हृदयं ज्योति"रिति श्रुतिः । "एतौ सुपर्णावि"ति च । "यमो वैवस्वतो देवो यस्तवैष हृदि स्थित" इति मनुवचनम् । स्पृत्वेति "स्पृङ्व्यायामे" इत्यस्य क्त्वान्तं रूपम् । अत्रात्मा ब्रह्माण्डोदरं व्याप्य ब्रह्माण्डोपरि दशाङ्गुलं व्यतिक्रम्यातिष्ठत् । दशाङ्गुलमित्युपलक्षकं ब्रह्माण्डाद्बहिरपि व्यापयदित्यर्थ इति शङ्कराचार्यटीका ॥ १ ॥

पुरुषऽएवेदꣳ सर्व्वं यद्भूतं यच्च भाव्यम् ॥

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥

इदं यत्किंचिद्वर्त्तमानकालीनं, यद्भूतं यदतीतकालीनं, यच्च भाव्यं भविष्यत्कालीनं तत्सर्वं पुरुष एव । तथा च वर्त्तमानभूतभविष्यत्कालस्वरूपो भगवानधिकृतरूप इति दर्शितम् । उत किंच न केवलमेव किं तु यदन्नेन अदनीयेन भक्तादिना अतिरोहति—अतिशयेन जन्मस्थितिं च लभते तत्सर्वं पुरुष एव । तथा च ये स्थावरजङ्गमा भक्ताद्याहारेण जन्म स्थितिं च लभन्ते, ये च स्थावरवृक्षशिलादयो जलतर्पणरूपेणाहारेण जन्म स्थितिं च लभन्ते, सर्व एव ब्रह्मादिस्तम्बपर्यन्ताः पुरुषरूपा इत्यर्थः । तथा च श्रुतिः "सर्वं खल्विदं ब्रह्मे"ति । पुरुषः किम्भूतः ? अमृतत्वस्य ईशानः प्रभुः । मोक्षदातापि स एव पुरुष इत्यर्थः । यद्वा वर्त्तमानकालीनादि यद्वस्तुजातं तत्सर्वं पुरुष एव परमेश्वरः । किञ्च यदन्नेनातिरोहति तेषामेतद्वस्तु अमृतत्वस्य मोक्षस्येशानः । इत्यन्वयः ॥ २ ॥

एतावानस्य महिमाऽतो ज्यायाँश्च पूरुषः ॥

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ॥ ३ ॥

---

सौम्य मन" इति सामवेदीयच्छान्दोग्योपनिषदि मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादितेति ॥ (१) अत्र सहस्रं शिरांसि यस्येति बहुव्रीहौ "शीर्षश्छन्दसि" ( पा० ६।१।६० ) इति शिरश्शब्दस्य शीर्षन्नादेशे उपधादीर्घः । ( पा० ६।४।८ ) ॥ (२) एतच्च पादशब्दस्योपलक्षकतयाऽभिहितम् । पादो हि कर्मेन्द्रियेषु एकम् ॥

अस्य पुरुषस्य एतावान्महिमा यत्पूर्वकाण्डकोक्तवत्सर्वदेशकालव्यापित्वं संसारापवर्गप्रभुत्वं नाम। अतोऽस्मात्कारणात्पुरुषः ज्यायान् ज्येष्ठः पुरुषोत्तमः। किञ्च अस्य एकः पादः विश्वा भूतानि। चराचरात्मकानि सर्वाणि भूतानि। अपरं च त्रिपात् पादत्रयम् अस्य दिवि स्वर्गे आकाशे वा पादत्रयं ऋग्यजुः सामात्मकम्। पादचतुर्थादि अस्य पुरुषस्यावशिष्टम्। त्रिपाद्स्वरूपम् किम्भूतम्? अमृतं विनाशरहितं मोक्षद्वारं सूर्यमण्डलभेदनद्वारेण गच्छतां मुमुक्षूणां परमात्मनि लयान्मोक्षद्वारम्–इत्यर्थः। यद्वा त्रिपाद्विज्ञानमयानन्दरूपं दिवि विद्योतने स्वमहिम्नि स्वर्गे द्वारे व्याप्य तिष्ठतीत्यर्थः। यद्वा योगिध्येयं तदेव त्रिपात् दिवि सत्यलक्ष्लपादो गुणे स्थितमित्यर्थः ॥ ३ ॥

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ॥
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥

अस्य चतुष्पादलक्षणस्य पुरुषस्य योऽसौ त्रिपात् पादत्रयस्वरूपः ऋग्यजुःसामलक्षणो भगवानादित्यः सोऽभ्युदैत् उदितः। किम्भूतः? उद्ध्र्वः दिविस्थः। यद्वा कर्मबन्धनिबन्धनानां स्थावरजङ्गमादीनामुपरिभूत इत्यर्थः। किञ्चास्य चतुष्पादलक्षणस्य पुरुषस्य पादो लेशः जगद्रूपश्चतुर्थांशः हिरण्यगर्भतया जगति अभवत् प्रथमं सत्तामात्रेणावस्थानमकरोदित्यर्थः। जगति किम्भूते? साशनानशने–भोक्तरि अभोक्तरि च। येषां च सुकृतदुष्कृतेषु अधिकारस्ते भोक्तारः ब्राह्मणादयः। येषामनधिकारस्तेऽभोक्तारो वृक्षकृमिकीटादयः। तदेवं कर्माधिकारिणि अनधिकारिणि च सर्वत्र जगति अपरपादः सत्तामात्रेणातिष्ठदित्यर्थः। ततस्तदनन्तरं विष्वङ् व्यक्रामत् व्याप्तवान् सर्वशरीराणि व्याप्यावस्थानमकरोदित्यर्थः। यद्वा प्रथमं जगति सत्तामात्रेणाभवत्। ततः विष्वङ् सर्वतः साशनानशने भोक्तारमभोक्तारं च व्यक्रामद्व्याप्तवान्। तत्र विषुशब्दपूर्वादञ्चुगतिपूजनयो''रित्यस्माद्धातोः क्विपि विष्वङिति रूपम्। अभिशब्देन व्यवहितेनोदैदित्यन्वेति ॥ ४ ॥

ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

ततः पुरुषात् हिरण्यगर्भात् विराट् ब्रह्मा अजायत। तस्माद्विराजः ब्रह्मणः सकाशात् पुरुषो मनुरभ्यजायत। स मनुर्जातः सन्पुरोऽग्रे पूर्यन्ते सप्तभिर्धातुभिरितिपुरः शरीराणि वा ससर्ज। पश्चादपि भूमिम् अत्यरिच्यत अतिरिक्तो भूमावसक्तोऽभवत्। भूमिपदं देशोपलक्षणार्थं, पुरः पश्चादिति जीवभावादूर्ध्वकालोपस्थापकं, तेन क्वचिदपि देशे काले वा

तस्य मनोः पुत्रपौत्रादिसंबन्धिभिः सदृशी नाभूदित्यभिप्रायः ॥ ५ ॥

तस्माद्यज्ञात्सर्व्वहुतः सम्भृतं पृषदाज्यम्।

पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥

तस्मात्पूर्वोक्तपुरुषमेधाख्ययज्ञात् सर्वव्यापकात्पुरुषचतुर्थपादात्सर्वहुतः सर्वैर्हूयमानत्वाद्यज्ञस्वरूपात्पृषदाज्यं हविः सम्भृतं समुत्पन्नं तत्पृषदाज्यं तान् चक्रे पशूंश्चकार। तान् कान्? ये आरण्या ग्राम्याश्च। आरण्या मृगादयः। ग्राम्याश्छागादयः। तान् किम्भूतान्? वायव्यान् वायुदैवत्यान् ॥ ६ ॥

तस्माद्यज्ञात्सर्व्वहुतऽऋचः सामानि जज्ञिरे।

छन्दांᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥

तस्मात्सर्वहुतः सर्वैर्हूयमानाद्यज्ञपुरुषात् ऋचः ऋग्वेदाः सामानि सामवेदाः जज्ञिरे जाताः। तस्मादेव छन्दांसि गायत्रीप्रभृतीनि। जज्ञिरे–जातानि। तस्मादेव यजुः अजायत आसीदित्यर्थः ॥ ७ ॥

तस्मादश्वाऽअजायन्त ये के चोभयादतः।

गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥

तस्माद्यज्ञात्सर्वयज्ञरूपात् अश्वाः अजायन्त। न केवलमश्वाः किन्तु ये के चोभयादतः। ये के च न(१) उभयतो दन्ताः पशवः अश्वादयः तेऽप्यजायन्त–जाताः। तस्मादेव गावः जज्ञिरे–जाताः। तस्मादेव अजा अवयश्च जाताः। अजाः छागाः अवयो मेषाः। उभयादत इति "अन्येषामपि दृश्यते" (पा० ६।३।१३७) इति दीर्घः। गावो ह। हकारः समुच्चयार्थः। अत्र कण्डिकात्रये यत्किञ्चिद्विराटात्मकं विध्यर्थवादमन्त्राश्रया वेदाश्च पुरुषोत्तमात्पुरुषमेधयज्ञस्वरूपादेव सर्वं जातमिति वाक्यार्थः॥ ८॥

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः।

तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ॥ ९ ॥

तं पुरुषं यज्ञसाधनभूतं बर्हिषि संस्थाप्य देवा ब्रह्मप्रभृतयः साध्याः साध्यनामानः गणदेवताः ऋषयः मरीचिप्रभृतयः प्रौक्षन् प्रोक्षितवन्तः। किम्भूतम्? अग्रतः सृष्टेः पूर्वजातं पुरुषत्वेनेत्यर्थः। प्रागुक्तं प्रथमतः जातं तस्मात्तदानीमन्यहविरभावे स्वयमेव हविरासीदित्यर्थः। न केवलं प्रौक्षन् किं तु तेन पुरुषेण यज्ञेन यज्ञसाधनभूतेन अयजन्त यागं कृतवन्तः। अत्र कारणे कार्य्योपचारात् यज्ञेन यज्ञसाधनमभिधीयते।

(१) उभयादत—इति बहुव्रीहिः "वयसि दन्तस्य दतृ" (पा० ५।४।१४१) इति दत्रादेशः।

प्रोक्षन् ग्रहणं सकलसंस्कारोपलक्षणार्थम्। तथा च पुरुषं पृषदाज्यादिरूप यज्ञसाधनभूतं प्रोक्षणादिसंस्कारैः संस्कृत्य तेन पृषदाज्यादिरूपेण देवा यागं कृतवन्त इति वाक्यार्थः ॥ ९ ॥

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।

मुखं किमस्यासीत्किं बाहू किमूरू पादाऽउच्यते ॥ १० ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते। प्रजापतेः प्राणरूपादेव यत् यदा पुरुषं व्यदधुः कालेनोदपादयन्। तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः। अस्य पुरुषस्य मुखं किमासीत्? किं बाहू ऊरू चास्तां? किं च पादावपि किमास्तामित्यर्थः ॥ १० ॥

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।

ऊरू तदस्य यद्वैश्यः पद्भ्याᳪ शूद्रोऽअजायत ॥ ११ ॥

ब्राह्मणइति। पूर्वकण्डिकायां स्तुत्यर्थं विकल्पः कृतः आकाङ्क्षोत्थापनाय। अत्र स्तुतिमाह-अस्य पुरुषस्य मुखं ब्राह्मण आसीद्बभूव। बाहू राजन्यः क्षत्रियः कृतः। अर्थादीश्वरेणैव अस्य ऊरू यत्तद्वैश्यः कृतः। एतेन ब्राह्मणादयः अस्य मुखादिभ्यो जाता इति बोद्धव्यम्। अग्रे तथा दर्शनात्पद्भ्यां शूद्रः अजायत। अयमेव ब्राह्मणादिचतुष्टयरूप इति वाक्यार्थः ॥ ११ ॥

चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत।

श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥

अस्य पुरुषस्य मनसः सकाशाच्चन्द्रमा अजायत जातः। चक्षोः चक्षुषः सूर्यः अजायत जातः। श्रोत्राद्वायुश्च प्राणश्च अजायत। मुखादग्निश्च। अन्यत्र चन्द्रमस्सूर्यौ च। बाहुभ्यो मनश्चक्षुःश्रोत्राणामुत्पत्तिरिति सृष्टिक्रमः। अत्र तु अचिन्त्यमहिम्नि पुरुषे मनश्चक्षुःश्रोत्रमुखेभ्यश्चन्द्रमःप्रभृतीनामुत्पत्तिक्रम इति विपरीतमर्थं स्तुतिरिति वाक्यार्थः ॥ १२ ॥

नाभ्याऽ आसीदन्तरिक्षᳪ शीर्ष्णो द्यौः समवर्त्तत।

पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२॥अकल्पयन् ॥ १३ ॥

नाभ्या नाभितः अन्तरिक्षमाकाशम् आसीद् बभूव। शीर्ष्णः मस्तकात् द्यौः स्वर्गः समवर्त्तत समभवत्। पद्भ्यां पादद्वयाद्भूमिः समवर्तत। श्रोत्रात्कर्णाद्दिशः समवर्त्तन्त। तथा-तेनोक्तेन विधिना स एव पुरुषः लोकान् देवमनुष्यादिनिखिलस्थावरजङ्गमादित्रैलोक्यम् अकल्प-

यन् अकल्पयत्सृष्टवान्(१) ॥ १३ ॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ॥

वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धविः ॥ १४ ॥

पुरुषेण हविषा हविर्भूतेन देवाः यत् यज्ञम् अतन्वत-कृतवन्तः । देवा इत्युपलक्षणं साध्या ऋषयश्च । अस्य वसन्तः ऋतुविशेषः आज्यं घृतमासीत् । ग्रीष्म इध्मः समिद्विशेषः, शरद्धविः योग्यतावशात् आज्यातिरिक्तं हविः पुरोडाशादि । अत्र कश्चिदृक्कव्युत्क्रमोऽस्ति अस्या अनन्तरं तं यज्ञम् । ततस्तस्माद्यज्ञादिति तिस्र ऋचः क्रमेणैव । ततः सप्तास्यासन्निति सृष्टिक्रमोऽपेक्षितः ॥ १४ ॥

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ॥

देवा यद्यज्ञन्तन्वाना अबध्नन्पुरुषम्पशुम् ॥ १५ ॥

अस्य पुरुषस्य यज्ञस्य परिधयः भूमिवेष्टनानि सप्त-अर्थात्समुद्राः आसन् बभूवुः । त्रिःसप्त-एकविंशतिसमिधः कृताः । सप्त छन्दांसि सप्त उपच्छन्दांसि सप्त व्याहृतयश्च । एतानि समिधः कृता इत्यर्थः । अस्य कस्य ? यत् यं यज्ञं तन्वानाः कुर्वाणा देवाः पशुं पशुभूतं पुरुषम् अबध्नन् बद्धवन्तः । अत्र सप्तेति सङ्ख्यामात्रं श्रूयते न तु सङ्ख्येयं, तत्र सङ्ख्येये कल्प्यमाने यज्ञभूमिवेष्टकं कल्पनीयं यज्ञभूमिश्च भारतवर्षम् । तद्वेष्टकाश्च लवणार्णवप्रभृतयः सप्त समुद्रा एव भवन्ति । त्रिः सप्त इत्यपि सङ्ख्येयकल्पनायां छन्दांसि जज्ञिरे तस्मादित्यत्र यज्ञसाधनसृष्टौ एकविंशतिच्छन्दसामुक्तत्वात्तेषामेव ग्रहणम् ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन् ॥

ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ १६॥

देवा-इन्द्रादयः यज्ञेन-यज्ञसाधनभूतेन पुरुषेण-पश्वादिरूपेण यज्ञं पुरुषं-पुरुषोत्तमम् अयजन्त-पूजितवन्तः । अत्र इष्टं पुरुषं पशुं कृत्वा हिंसात्मकेन च कर्मणा यज्ञः क्रियत इत्याह-तानि धर्माणि प्रथमान्यासन । तथा च ते धर्माः प्रथमा मुख्या एवासन् । अन्यत्र तद्दर्शनमसम्भावितमेवेत्यर्थः । अत एव ते देवा एवंविधेनैव यज्ञेनेष्ट्वा नाकं-स्वर्गं सचन्त-सङ्गताः । यत्र नाके पूर्वे साध्यादयो देवाः सन्ति । महिमानः महात्मानः । ते ह नाकमित्यत्र हकारश्छान्दसः स्तोभः । सचन्त इति, "षच-

---

उभयतो दन्ता येषान्त इति विग्रहः । (१) अत्रत्यं वचनव्यत्ययमभिप्रैति । महीधरस्तु —"फलदानोत्सुकाः काला" इति शेष, इति व्याख्यातवान् ॥

समवाये" (भ्वा० आ०) इत्यस्माल्लङ् प्रथमपुरुषबहुवचनं "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा० ६ । ४ । ७५ ) इत्यडागमनिषेधः ॥ १६ ॥

अथोत्तरनारायणीयम् ।

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे ॥
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥

त्वष्टा आदित्यः अद्भ्यः जलात् पृथिव्या (१) अपि अग्रे सम्भृतः बभूव । अत्र पृथिवीपदं पञ्चभूतोपलक्षणार्थं तेन पञ्चभूतोत्पत्तिपूर्वकाल एव सम्भृतः पुष्ट इत्यर्थः । न केवलं पञ्चभूतेभ्य एव पूर्वं सम्भृतः किन्तु विश्वकर्मणो ब्रह्मणः सकाशात् जलेभ्यः रसादिच्छातोऽपि पूर्वं समवर्तत । यदा विश्वकर्मणो जगन्निर्माणेच्छाभूत्तदैव समवर्तत इत्यर्थः । तस्मात्तस्यादित्यस्य तद्रूपं मण्डलाकारं मर्त्यस्य मनुष्याणां सृष्टितोऽपि अग्रे पूर्वं देवत्वं विदधत् धारयत् एति एभिर्मनुष्यैः समेति समागच्छतीति अतिशयेन ज्ञातवान् । देवा द्विविधाः—उत्कृष्टेन कर्मणा देवत्वं प्राप्ताः कर्मदेवाः । सृष्ट्यादावुत्पन्नाः प्रधानदेवाः (२) ॥ १७ ॥

वेदाहमेतम्पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ॥
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १८ ॥

अहमेतं पुरुषं वेद जानामि अस्मदादीनां सर्वेषामनुभवसिद्ध इत्यर्थः । एतं किम्भूतं ? महान्तं सर्वव्यापकं, पुनः किम्भूतम् ? आदित्यवर्णं ज्योतिर्मयमित्यर्थः । यथाऽऽदित्यः स्वप्रकाशकः परानपि प्रकाशयति तथाऽयमपि स्वप्रकाशब्रह्मरूपो जगदपि प्रकाशयति । तमसः परस्तात् अविद्यात्मकसंसारात् परमुत्तीर्णमित्यर्थः । तमेवादित्यरूपं पुरुषं विदित्वा ज्ञात्वा मृत्युम् अतिक्रम्य एति गच्छति अपुनरावृत्तये । नान्य इति—अयनाय मृत्युमतिक्रम्य गमनाय अर्थात् मोक्षाय अन्यः पन्था न विद्यते । तथाचायमेव पुरुषो ध्यानगम्यो ज्ञातो मोक्षं ददातीति वाक्यार्थः ॥ १८ ॥

प्रजापतिश्चरति गर्भेऽअन्तरजायमानो
बहुधा विजायते ॥ तस्य योनिम्परि पश्यन्ति
धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥

प्रजानां पतिः प्रजापतिः पुरुष एव सूर्यरूपः । अन्तश्चरति अर्थात्प्राणिनां देहमध्ये जीवात्मरूपतया वसतीत्यर्थः । किम्भूतः? गर्भे अजायमानोऽपि

(१) अत्र षष्ठ्यर्थे चतुर्थी ( पा० २।३।६२ वा० ) । (२) त एवाऽऽजानदेवा उच्यन्ते ।

नित्यवदनुत्पत्तिधर्मा अपि बहुधा बहुप्रकारेण विजायते। स्थावरजङ्गमात्मकदेहेषु जन्म लभते। यद्वाऽजायमानोऽपि गर्भे बहुधा विजायते रामादिशरीरेणेत्यर्थः। तस्य योनिमुत्पत्तिस्थानं धीरा ब्रह्मवादिनः परिपश्यन्ति। ध्यानेन सम्यगुपलक्षयन्तीत्यर्थः। तत्स्थानं ब्रह्मवेति तात्पर्यम्। तस्मिन् प्रजापतौ विश्वा सर्वाणि भुवनानि भूतानि स्वर्गमर्त्यपातालादीनि तस्थुः स्थितानि। हकारः स्तोभार्थः। विश्वा इति निलोपश्छान्दसः ( पा० ६।१।७० )॥ १९॥

यो देवेभ्यऽआतपति यो देवानाम्पुरोहितः॥
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये॥ २०॥

यः सूर्यः आतपति-आसमन्ताद्भावेन तपति। किमर्थं? देवेभ्यः देवानां प्रयोजनाय(१) उदिते आदित्ये कर्मण्यधिकारो भवति। यः देवानां पुरः अग्रे हितः निहितः स्थापितः। देवानां हविर्दानाय पूर्वमग्निरूपेणाधीयते इत्यभिप्रायः। यो देवेभ्यः सकाशात्पूर्वो जात उत्पन्नः। आदित्यो द्वादशादित्यः प्रथमः समुत्पन्न इत्यर्थः। तस्मै—आदित्याय नमः। किं भूताय? रुचाय रोचमानाय। ब्राह्मये—ब्रह्मभूताय ब्रह्मणः अपत्यं ब्राह्मिः तस्मै॥ २०॥

रुचं ब्राह्मं जनयन्तो देवाऽअग्रे तदब्रुवन्॥
यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे॥ २१॥

देवा ब्रह्मादयः। जनयन्तः स्वयमुत्पद्यमानाः। तं ब्राह्मं (२) ब्रह्मसुतं रुचं रोचमानं प्रकाशरूपमादित्यमग्रे पूर्वं प्रथममब्रुवन्। अयमेवास्माकं मुख्य इत्युक्तवन्तः। किं च हे पुरुषोत्तम! त्वा त्वामेवमनेन प्रकारेण सूक्तोक्तविश्वरूपं यो ब्राह्मणो विद्याज्जानीयात् तस्य ब्राह्मणस्य देवा वशे इच्छायां असन्(३)भवन्ति इच्छानुवर्तिनो भवन्ति। तथा च सहस्रशीर्षेत्यादिग्रन्थतोऽर्थतश्चाधीत्य यो ब्राह्मणः पुरुषोत्तमं जानाति तस्य ब्राह्मणस्य देवा ब्रह्मादयः अभिलषितान् सम्पादयन्तीति वाक्यार्थः॥ २१॥

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे
नक्षत्राणि रूपमश्विनौ व्यात्तम्॥ इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण॥ २२॥

---

( १ ) षष्ठ्यर्थेऽत्र चतुर्थी। ( पा० २।३।६२ वा० )॥
( २ ) "ब्राह्मोऽजातावि" ( पा० ६।४।१७१ ) ति निपातितः॥
( ३ ) अस्तेर्लेटि प्रथमपुरुषबहुवचने इकारलोपः (पा० ३।४।९७) अडागमश्चास्यैः (पा० ३।४।९४)॥

हे पुरुषोत्तम ! तव श्रीः लक्ष्मीश्च पत्न्यौ सहचारिण्यौ त्वामालभत इत्यर्थः। चकारद्वयं तुल्यप्रधान्यज्ञापनार्थं, श्रीरैश्वर्यं, लक्ष्मीर्धनं, यद्वशात्पुरुषो लोकानामाश्रयणीयो भवति सा श्रीः, यद्वशात्पुरुषः लोकानां दर्शनीयो भवति, सा लक्ष्मीः। "लक्ष दर्शनाङ्कनयोरि" त्यस्य (चु. आ.) रूपम्। अहोरात्रे पार्श्वे अहः रात्रिश्च पार्श्वद्वयम्। अहः शब्दः परब्रह्मपरः। तस्य विद्यात्मकत्वेन प्रकाशरूपत्वात्। रात्रिशब्दः संसाररूपत्वेन प्रकृतिपरः। तस्या अविद्यात्मकत्वेनाप्रकाशकत्वात्। एतेन धर्मार्थकामात्मकः संसारः मोक्षश्च श्रीपरमेश्वरपार्श्वे द्वयमित्युक्तं भवति। नक्षत्राणि रूपं नारायणो मूर्तिरित्यर्थः। अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विवृतं मुखमित्यर्थः। तथा च श्रुतिः 'इमे हीदं सर्वमश्नुवाताम्'' इति। एवम्भूतं त्वां पुरुषोत्तमं याचे। इष्णन् इच्छन्त्तं (१)सकामम् इषाण इच्छ अनुगृहाण। निजोपासकं सत्वमनुगृहाणेत्यर्थः। किं च मे मम अमुं लोकं भार्यापुत्रजनादिकम् इषाण। न केवलममुं किन्तु मे मम सर्वलोकं भूरादिसप्तलोकम् इषाण। अयं वाक्यार्थः। यः कश्चित् स्वर्गपुत्रादिकामयमानोऽनेन सहस्रशीर्षाध्यायेन त्वां स्तौति पूजयत्युपतिष्ठते तमनुगृहाण। ममापि पशुपुत्रादिधनयुक्तमिहलोकं स्वर्गमोक्षादिकमिषाण इच्छ। तव वाञ्छामात्रेणैव सर्वं सम्पाद्यते सत्येच्छत्वादित्यभिप्रायः। अत्र स्तुतिपूर्वं प्रार्थना महतीति स्तुत्वा प्रार्थना ॥ २२ ॥

अथाप्रतिरथसूक्तम्—

> आशुः शिशानो वृषभो न भीमो
> घनाघनः क्षोभणश्चर्षणीनाम् ॥
> सङ्क्रन्दनोऽनिमिषऽएकवीरः शतꣳ
> सेनाऽअजयत्साकमिन्द्रः ॥ १ ॥

इन्द्रं स्तौति–इन्द्रः शतं बह्वीः सेनाः साकं सहैव एकदैवाजयत् जितवान्। इन्द्रः किम्भूतः ? आशुः शीघ्रः। शिशानः–शातनकर्त्ता "शोतनूकरणे," ( दि० प० ) ॥ वृषभो न भीमः। नकारः उपमार्थीयः, वृषभ इव भीमः। बिभेत्यस्मादिति भीमः भयानकः। घनाघनः हनहनेत्येवं वक्ता, यद्वा, घनशरीरः। पुनः किम्भूतः ? चर्षणीनां मनुष्याणां (निघं०२।३।८) क्षोभणः सञ्चालकः। सङ्क्रन्दनः सङ्ग्रामकारिणां समाह्वर्ता। अनिमिषः अप्रमादी अर्थादाहवे, यद्वा अनिमिषो देवः(२)। एकवीरः विक्रान्तः ॥ १ ॥

---

( १ ) अमः श्नुः। ( पा० ७।१।३९ )। ( २ ) "सुरमत्स्यावनिमिषौ" इत्यमरः।

सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण
दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेण जयत
तत्सहध्वं युधो नरऽइषुहस्तेन वृष्णा ॥ २ ॥

तदिन्द्रेण तादृग्गुणविशिष्टेनेन्द्रेण येन सैन्यं जितमितिशेषः । हे नरः ! मनुष्याः ! हे युधः ! योद्धारः ! तत्सहध्वं तद् जयताभिभवत । "युधसंप्रहार" इत्यस्य क्विपि युध इति । कादृशेनेन्द्रेण ? सङ्क्रन्दनेन-शब्दकारिणा । अनिमिषेण-एकचित्तेन अप्रमाद्यता । जिष्णुना जयशीलेन । युत्कारेण- सम्प्रहारिणा । दुश्च्यवनेन-अप्रच्युतस्वभावेन । धृष्णुना-प्रसहनशीलेन । पुनः किम्भूतेन ? इषुहस्तेन-बाणपाणिना । वृष्णा-वर्षणशीलेन । यद्वा इन्द्रेण तत् जितमिति योजना ॥ २ ॥

स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा
स युधऽइन्द्रो गणेन ॥ सꣳसृष्टजित्सोमपा
बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥

स इन्द्रः इषुहस्तैर्योद्धृभिः संस्रष्टा-संसृजति मिलति । स एवेन्द्रो निषङ्गिभिः खड्गिभिः संसृजति । किम्भूतः ? वशी कान्तः सर्वजनप्रियः स्वतन्त्रो वा । निगृहीतारिषड्वर्ग ईश्वरो वा । स इन्द्रः युध्यतेऽसौ युधः युद्धकर्त्ता गणेन शत्रुगणेन संसृज्य संसृष्टजित्ससृष्टान् शत्रून् जयतीति संसृष्टजित् । पुनः किम्भूतः ? सोमपाः । पुनः किम्भूतः ? बाहुशर्द्धी-बाहुबली बाहुबलोपेतः । संयोगितनिरपेक्षः । शर्द्ध इति बलनाम ( निघं० २।९।७ ) । उग्रधन्वा उग्रतधनुः । पुनः किम्भूतः ? प्रतिहिताभिरस्ता शत्रुशरीरे प्रतिहिताभिरिषुभिः अस्ता क्षेप्ता । शत्रूणामेवाग्रे, शत्रूणामेव वा, एतेन लघुसन्तानत्वमुक्तम् ॥ ३ ॥

बृहस्पते परि दीया रथेन रक्षोहामित्राँ२
ऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणो
युधा जयन्नस्माकमेध्यविता रथानाम् ॥ ४ ॥

इन्द्रपुरोहितत्वेन(१) बृहस्पतिः स्तूयते-हे बृहस्पते ! रथेन परिदीय परिगच्छ(२) । त्वं किम्भूतः ? रक्षोहा(३) । किं कुर्वन् ? अमित्रान् शत्रून् अपबाधमानः परिपीडयन् । किं च सेनाः शत्रुसेनाः प्रभञ्जन् प्रमर्द-

( १ ) वाग्वै बृहती तस्याः पतिरिन्द्रः । व्याकरणकर्तृत्वात् । यद्वा वाक्पतिरेवेत्याह । ( २ ) दीयतिर्गतिकर्मा ( निघं० २।१४ ) । ( ३ ) रक्षसां हन्ता ।

यन् सन् प्रमृणः(१) प्रमर्द्दकान्युधा जयन् अस्माकं रथानाम् अविता गोता रक्षकः एधि भव । अस्धातोर्लोट (ध्वसोरेद्धाऽऽवितिलोपे) एधि ॥४॥

बलविज्ञायस्स्थविरः प्रवीरः सहस्वान्वाजी
सहमानऽउग्रः ॥ अभिवीरोऽअभिसत्त्वा
सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ५ ॥

हे इन्द्र ! स त्वं जैत्रं जेतारं रथम् आतिष्ठ । त्वं किम्भूतः ? गोवित् (२)स्तुतिवित् । पुनः किम्भूतः ? बलविज्ञायः बलेन विज्ञायते इति विज्ञायः(३)प्रसिद्धः। स्थविरः सर्वानुशासकः सर्वमान्यो वा चिरन्तनो वा। प्रवीरः प्रकृष्टो वीरः । सहस्वान्-बलवान्( निघं० २।९ ) । वाजी-वाजवान् । वाजमन्नं (निघं० २।७) सहमानः(४) । उग्रश्च भीषणः अभि वीरः वीरं वीरमभिलक्षीकृत्य गच्छत्यभिवारः । अभिसत्वा सत्वनाम् अभितिष्ठति(५) सः । सहोजाः "सह इति बलनाम" ( निघं० २।९ ) बलाज्जातः(६) । नह्यन्यस्माज्जात एतादृशो भवति ॥ ५ ॥

गोत्रभिदङ्गोविदं वज्रबाहुञ्जयन्तमज्म
प्रमृणन्तमोजसा ॥ इमर्ठ० सजाता
ऽअनु वीरयद्ध्वमिन्द्रर्ठ० सखायोऽ
अनु सर्ठ० रभद्ध्वम् ॥ ६ ॥

हे सजाताः ! समानजन्मानो देवाः । इमम् इन्द्रम् । अनुवीरयध्वं वीर(७)कर्मकुर्वाणं वीरकर्मणैवाऽनुगम्य प्रोत्साहयत । हे सखायः ! सखिभूताः देवाः ! गोत्रमसुरकुलं भिनत्तीति गोत्रभित्तम् एनम् अनुसंरभध्वम् । अनुगम्य(८) संरम्भं कुरुत । यद्वा गोत्रभिदं(९) वृष्ट्यर्थं गोत्रं मेघं भिनत्ति यस्तम् । वज्रबाहुं वज्रपाणिं,गोविदम् गां वाचं वेत्तीति गोवित्तं पण्डितम् । जयन्तमज्म अजनशीलम् अज्म—सङ्ग्रामं जयन्तम् । ओजसा बलेन प्रमृणन्तं(१०) मर्दयन्तम् अर्थात् अज्म एव । अज्म

(१) युधा युद्धेन प्रमृणः हिंसकान् जयन्नभिभवन् । मृणातिर्हिंसाकर्म्मा तस्मात्क्विपि द्वितीयाबहुवचनम् । ( २ ) गां वाचं वेत्ति यः सः । क्विप् । ( ३ ) करणे घञ् । "आतोयुक्०" (पा० ७।३।३२) इति युक् । यद्वा बलं विशेषेण जानातीति "कर्मण्यण्" ( पा० ३।२।१ ) युक्पूर्ववत् ॥ ( ४ ) शत्रूनभिभवन् । "षह मर्षणे" ( भ्वा० आ० ) लटः शानच् । मर्षणं क्षमा अभिभवश्च । ( ५ ) अभितः सत्वानः प्राणिनो यस्य सः । ( ६ ) जानातेर्विट् ( पा० ३।२।६७ ) "विड्वनोः"—( पा० ६।४।४१ ) इत्यात्वम् । ( ७ ) शूरवीर विक्रान्तौ चुरादिरदन्तस्ततो लोट् । ( ८ ) अनुसङ्गस्य रभसङ्कुरुतेत्युव्वटव्याख्यानम् । संरम्भं वेगङ्कुर्वाणमनुसंरम्भङ्कुरुतेति महीधरः । ( ९ ) गा अपस्त्रायते गोत्रो मेघस्तस्य भेत्तारम् ।

( १० ) शत्रून् हिंसन्तम् । मृणातिर्हिंसाकर्म्मेति महीधरः ।

यन् सन् प्रमृणः(१) प्रमर्द्दकान्युधा जयन् अस्माकं रथानाम् अविता गोता रक्षकः एधि भव। अस्धातोर्लोट (ध्वसोरेद्धाऽऽवभ्यासलोपे) एधि ॥४॥

बलविज्ञायस्स्थविरः प्रवीरः सहस्वान्वाजी
सहमानऽउग्रः ॥ अभिवीरोऽअभिसत्त्वा
सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ५ ॥

हे इन्द्र! स त्वं जैत्रं जेतारं रथम् आतिष्ठ। त्वं किम्भूतः? गोवित् (२)स्तुतिवित्। पुनः किम्भूतः? बलविज्ञायः बलेन विज्ञायते इति विज्ञायः(३)प्रसिद्धः। स्थविरः सर्वानुशासकः सर्वमान्यो वा चिरन्तनो वा। प्रवीरः प्रकृष्टो वीरः। सहस्वान्-बलवान्( निघं० २।९ )। वाजी-वाजवान्। वाजमन्नं (निघं० २।७) सहमानः(४)। उग्रश्च भीषणः अभि वीरः वीरं वीरमभिलक्षीकृत्य गच्छत्यभिवारः। अभिसत्वा सत्वनाम् अभितिष्ठति(५) सः। सहोजाः "सह इति बलनाम" ( निघं० २।९ ) बलाज्जातः(६)। नह्यन्यस्माज्जात एतादृशो भवति ॥ ५ ॥

गोत्रभिदङ्गोविदं वज्रबाहुञ्जयन्तमज्म
प्रमृणन्तमोजसा ॥ इमꣳ सजाता
ऽअनु वीरयध्वमिन्द्रꣳ सखायोऽ
अनु सꣳरभध्वम् ॥ ६ ॥

हे सजाताः! समानजन्मानो देवाः। इमम् इन्द्रम्। अनुवीरयध्वं वीर(७)कर्म कुर्वाणं वीरकर्मणैवाऽनुगम्य प्रोत्साहयत। हे सखायः! सखिभूताः देवाः! गोत्रमसुरकुलं भिनत्तीति गोत्रभित्तम् एनम् अनुसंरभध्वम्। अनुगम्य(८) संरम्भं कुरुत। यद्वा गोत्रभिदं(९) वृष्ट्यर्थं गोत्रं मेघं भिनत्ति यस्तम्। वज्रबाहुं वज्रपाणिं,गोविदम् गां वाचं वेत्तीति गोवित्तं पण्डितम्। जयन्तमज्म अजनशीलम् अज्म—सङ्ग्रामं जयन्तम्। ओजसा बलेन प्रमृणन्तं(१०) मर्दयन्तम् अर्थात् अज्म एव। अज्म

(१) युधा युद्धेन प्रमृणः हिंसकान् जयन्नभिभवन्। मृणातिर्हिंसाकर्म्मा तस्मात्किपि द्वितीयाबहुवचनम्। (२) गां वाचं वेत्ति यः सः। किप्। (३) करणे घञ्। "आतोयुक्०" (पा० ७।३।३२) इति युक्। यद्वा बलं विशेषेण जानातीति "कर्मण्यण्" ( पा० ३।२।१ ) युक्पूर्ववत् ॥ (४) शत्रूनभिभवन्। "षह मर्षणे" ( भ्वा० आ० ) लटः शानच्। मर्षणं क्षमा अभिभवश्च। (५) अभितः सत्वानः प्राणिनो यस्य सः। (६) जानातेर्विट् ( पा० ३।२।६७) "विड्वनोः"— ( पा० ६।४।४१ ) इत्यात्वम्। ( ७ ) शूरवीर विक्रान्तौ चुरादिरदन्तस्ततो लोट्। ( ८ ) अनुसङ्गम्य रभसङ्कुरुतेत्युव्वटव्याख्यानम्। संरम्भं वेगङ्कुर्वाणमनुसंरम्भङ्कुरुतेति महीधरः। (९) गा अपस्त्रायते गोत्रो मेघस्तस्य भेत्तारम्।
(१०) शत्रून् हिंसन्तम्। मृणातिर्हिंसाकर्मेति महीधरः।

साम् उत्कृष्टचित्तानां, भुवनच्यवानां भुवनसमर्थानाम्, च्यवनं जितं जितमिति शब्दस्तेषामुद्भूत इत्यर्थः ॥ ९ ॥

उद्धर्षय मघवन्नायुधान्युत्सत्त्वनाम्मामकानाम्मनांसि ॥ उद्वृत्रहन्वाजिनां व्वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १० ॥

हे मघवन्! आयुधानि उद्धर्षय–उद्गतहर्षाणि कुरु। उल्लासयेति यावत्। किं च सत्वनां मनुष्याणां (१) मामकानां च मनांसि उद्धर्षय। किं च हे वृत्रहन्! वाजिनामश्वानां वाजिनानि बलान्यु (२) द्धर्षय। किं च त्वत्प्रसादाज्जयतां रथानां घोषा उद्यन्तु–उद्गच्छन्तु (३) ॥१०॥

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं याऽइषवस्ता जयन्तु ॥ अस्माकं व्वीराऽउत्तरे भवन्त्वस्माँ २॥ ऽउ देवाऽअवताहवेषु ॥ ११ ॥

अस्माकं ध्वजेषु इन्द्रः "रक्षिता भवत्विति" शेषः। ध्वजेषु किम्भूतेषु? समृतेषु अर्थात् शत्रुबलध्वजसङ्गतेष्वित्यर्थः (४)। किं च इन्द्रप्रसादादस्माकं या इषवस्ता जयन्तु। अस्माकं वीरा उत्तरे विजयिनो भवन्तु। किं च अस्मान् उ देवा अवताहवेषु। उ एवकारार्थः। हे देवाः! अस्मानेवाहवेषु आह्वानेषु संग्रामेषु वा अवत रक्षत ॥११॥

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ॥ अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १२ ॥

हे अप्वे! (५) अमीषां शत्रुबलसम्बन्धिनां मनुष्याणां चित्तं चित्तानि (६) प्रतिलोभयन्ती विमोहयन्ती आकुलीकुर्वन्ती। 'लुभ विमोहने" (तु० प०) विमोहनमाकुलीकरणम्। शत्रूणामङ्गानि गृहाण। ततः परेहि

---

(१) सत्वन् शब्दो वेद उदकपर्याये पठितोऽपि (ऋ० सं० ८।८।१।१) तत्कार्यम्प्राणिनमप्याह। उदकं हि स्वगादिरूपेण शुक्रभावमापद्य प्राणिनमभिनिष्पादयतीति।

(२) वेजनवन्त्वानि। चञ्चलत्वं ह्यश्वस्य गुण इत्युव्वटः। गमनानीति महीधरः।

(३) "इण् गतौ" (अ० प०) लोट्। "इणो यण्" (पा० ६।४।८१)।

(४) "ऋ गतौ" (क्र्या० प०) कर्तरि क्तः (पा० ३।४।७२)।

(५) अप्वा देवता, सा व्याधिर्भयं वेत्युवटमहीधरौ। यस्मादेतया विद्धोऽपचीयते सत्त्वादपभ्रश्यते तस्मादसावप्वा। अपवाति–अपगमयति सुखम् प्राणांश्चेत्यप्वा। अपपूर्वाद्वातेरन्तर्भूतण्यर्थात् "अन्येष्वपि दृश्यते" (पा० ३।२।१०१) इति डुप्रत्ययः। अपशब्दान्त्याकारलोपश्च छान्दसः। ततष्टाप्। (६) जातावेकवचनम्।

परान् शत्रूनपि ग्रहीतुं गच्छ । ततश्च अभिप्रेहि तानेव शत्रून् अभिप्रेत्य प्रकर्षेण इहि गच्छ पुनः पुनरित्यर्थः । असूनेत्र हृत्सु शोकैर्निर्दह तेषां हृदयानि दहेत्यर्थः । (१) किं च त्वत्प्रसादादन्धेन तमसा अज्ञानलक्षणेनामित्राः सचन्ताम् सेवन्ताम् ॥ १२ ॥

अवसृष्टा परापत शरव्ये ब्रह्मसंशिते ॥

गच्छामित्रान्प्रपद्यस्व मामीषां कञ्चनोच्छिषः ॥ १३ ॥

हे इषो ! अवसृष्टा निःक्षिप्ता सती परापत गच्छ । गच्छेति पुनरुपादानं त्वरार्थम् । गत्वा चाऽमित्रान् शत्रून् प्रपद्यस्व(२) । प्रपन्ना च अमीषां शत्रूणां मध्ये कञ्चन मा उच्छिषः माऽवशेषय । (३) शत्रुनुत्कृत्तमूलान् कुर्वित्यर्थः । किम्भूते शरव्ये ! शरमये । ब्रह्मसंशिते ! ब्रह्मणा मन्त्रेण सन्नितरां शिते तीक्ष्णीकृते ॥ १३ ॥

योद्धॄन् प्रत्याह—

प्रेता जयतानरऽइन्द्रो वः शर्म्म यच्छतु ॥

उग्रा वः सन्तु बाहवोऽनाधृष्या यथाऽसथ ॥ १४ ॥

हे नरः ! मनुष्याः ! प्रेत प्रकर्षेण गच्छत(४) । अनन्तरम् जयत । वः युष्माकमिन्द्रः शर्म शरणं (५)यच्छतु ददातु । किं च भवतां बाहवः तथा उग्राः उद्गीर्णायुधाः सन्तु यथा यूयम् अनाधृष्या अप्रधृष्या असथ भवत(६) ॥ १४ ॥

असौ या सेना मरुतः परेषामभ्येति नऽओजसा

स्पर्द्धमाना ॥ ताङ्गूहत तमसापव्रतेन यथा-

ऽमीऽअन्योऽअन्यन्न जानन् ॥ १५ ॥

हे मरुतः ! याऽसौ सेना परेषां शत्रूणाम् अभ्येति अभिमुखमागच्छति अस्मान्प्रतीत्यर्थः । सेना किम्भूता ? ओजसा बलेन अस्मान् स्पर्द्धमाना, तां सेनां तथा गूहत व्याप्नुवत । केन ? अपव्रतेन तमसा । व्रतमिति कर्मनाम, (निरु० २।१३) तथा च येन तमसा शत्रूणां व्रतम् अपगतं भवति तदपव्रतम् । तथा च येन तमसा व्याप्तानां शत्रूणां शराणि नश्यन्ति तेन व्याप्नुवत । तथा कथं ? यथाऽमी सैनिकाः अन्यः अन्यं न जानन् परस्परं न जानीयुरित्यर्थः ॥ १५ ॥

---

(१) अत्र विभक्तिव्यत्ययः (पा० ३।१।८५) आर्षः ॥ (२) शत्रुशरीरेषु प्रविश । (३) "शिष्लविशेषणे" (रु० ५०) लृदित्वादङ् (पा० ३।१।५५) (४) अत्र "द्व्यचोऽतस्तिङः" (पा० ६।३।१३५) इति दीर्घः । (५) परित्राणमित्युव्वटः । जयोत्थसुखमिति महीधरः ॥ (६) "लेटोऽडाटौ" (पा० ३।४।९४) ॥ केनाप्यतिरस्कार्या भवत । अत्र "तप्त-

यत्र॑ बा॒णाः॑ सम्पत॑न्ति कुमा॒रा वि॑शि॒खाऽइ॑व ॥

तन्न॒ऽइन्द्रो॑ बृह॒स्पति॒रदि॑ति॒ः शर्म॑ यच्छतु

वि॒श्वाहा॒ शर्म॑ यच्छतु ॥ १६ ॥

तत्र इन्द्रः नोऽस्माकं शर्म्म कल्याणं यच्छतु–ददातु। किं च बृहस्पतिः अदितिश्च विश्वाहा सर्वदा(१) शर्म्म यच्छतु। तत्र कुत्र? यत्र बाणा इषवः सम्पतन्ति। क इव? कुमारा विशिखा इव। मुण्डितमुण्डाः कुमारा–इव। यथा सर्वमुण्डितमुण्डाः कुमाराः क्रीडार्थं तं तं देशं निपतन्तीत्यर्थः ॥ १६ ॥

मर्म्माणि ते॒ वर्म्म॑णाच्छादयामि॒ सोम॑स्त्वा॒

राजा॒मृते॒नानु॑ वस्ताम् ॥ उ॒रोर्व्वरी॑यो

वरु॑णस्ते कृणोतु॒ जय॑न्त॒न्त्वानु॑ दे॒वा म॑दन्तु ॥ १७ ॥

हे यजमान! ते तव मर्माणि जीवस्थानानि वर्मणा कवचेनाहं छादयामि आवृणोमि। सोमो राजा त्वाम् अमृतेनानुवस्ताम् आच्छादयतु। किं च वरुणस्ते तव इदं वर्म उरोरपि वरीयः (२)उत्कृष्टादप्युत्कृष्टं कृणोतु करोतु। जयन्तं जयशालिनं त्वा त्वां देवा मदन्तु प्रहर्षयन्तु ॥ १७ ॥

इत्यप्रतिरथसूक्तम् ॥ * ॥

इतोऽग्रे सूर्यसूक्तमस्तीति वेदितव्यम्।

वि॒भ्राड्बृ॒हत्पि॑बतु सो॒म्यं मध्वायु॒र्दध॑द्य॒ज्ञप॑ता॒

ववि॑ह्रुतम् ॥ वात॑जूतो॒ योऽअ॑भि॒रक्ष॑ति॒ त्मना॑

प्र॒जाः पु॑पोष पुरु॒धा वि॑राजति ॥ १ ॥

विभ्राडिति। स सूर्यः सोम्यं सोममयं मधु हविः पिबतु। सूर्यः किम्भूतः? विशेषेण भ्राजते दीप्यते इति विभ्राट्। किं कुर्वन्? यज्ञपतौ यजमाने अविह्रुतम् अनवखण्डितम् आयुर्दधत् स्थापयन्। "ह्वृ कौटिल्ये" (भ्वा० प०) "ह्रु ह्वरेश्छन्दसो"ति ह्वृकारस्य ह्रु आदेशः। स कः? यः सूर्यः येन त्मनाऽऽत्मनैव जगदभिरक्षति 'मन्त्रेष्वाङ्यादेरात्मन" (पा० ६।४।१४१) इत्याकारलोपः। सूर्यः किम्भूतः? वातजूतः वातप्रेरितः।

---

नसनथनाश्च" (पा० ७।१।४५) इति तस्य थः। (१) विश्वानि सर्वाण्यहानि विश्वाहा विभक्ते राकारः (पा० ७।१।३९)। अत्यन्त संयोगे द्वितीया। यद्वा इन्द्रविशेषणमेतत्। विश्वान्सर्वान् शत्रूनासमन्ताद्धन्ति यः सः। क्विप्। एवं बृहस्पतिः। बृहताम्मन्त्राणां पतिः पालकः। विजयोचितमन्त्रज्ञः। अदितिः अखण्डितशक्तिः स एवेन्द्रः। (२) अत्रातिशायिन ईयसुनि उरोर्वरादेशे

वातप्रेरितमेव जूतं चेष्टितं (१)यस्येत्यर्थः। यश्च प्रजाः पुपोष पोषयति शीतोष्णवर्षैः। यश्च पुरुधा बहुधा(२)विराजति दीप्यतेऽग्निविद्युन्नक्षत्रादिरूपैः। मधु किम्भूतं? बृहत्-महत्॥ १॥

उदुत्यमिति सूर्योपस्थाने व्याख्यातम्—

येना पावक चक्षसा भुरण्यन्तञ्जनाँ

ऽअनु॥ त्वँ वरुण पश्यसि॥ ३॥

हे पावक! पावयितः शोधक! सूर्य्य! येन चक्षसा दर्शनेन जनान् अनुलक्षीकृत्य तं सर्वमेधयाजिनं यजमानं भुरण्यन्तं-भुरण्य(३)-पक्षिवत् शीघ्रं गच्छन्तं पश्यसि। हे वरुण! सूर्य! त्वं च तेन ध्यानेनास्मानपि भुरण्यतः पश्येत्यर्थः। शकुनिवच्छीघ्रगामी भुरण्युरिति उव्वटः॥ ३॥

दैव्यावद्ध्वर्यूऽआगतꣳ रथेन सूर्य्यत्वचा।

मद्ध्वा यज्ञꣳ समञ्जाथे॥ ४॥

हे दैव्यौ अध्वर्यू! हे देवसम्बन्धिनौ अध्वरनेतारौ! इह आगतम् आगच्छतं, केन? सूर्यत्वचा सूर्यदीप्तिमता रथेन। सूर्यस्येव त्वग्दीप्तिर्यस्य स सूर्यत्वक् तेन। आगत्य च मध्वा मधुस्वादवता हविषा सोमपुरोडाशद्व्यादिना यज्ञं समञ्जाथे संम्रक्षयतं समं कुरुतम्। अञ्जेरेतद्रूपम्। प्रभूतानि हवींषि कुरुतम् इत्यर्थः॥ ४॥

तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम्। प्रतीचीनं वृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्द्धसे॥ ५॥

तमिति। हे सोमयाग! यासु विक्षु येषु यजमानेषु अनुवर्द्धसे पुनः संस्क्रियसे तासु तदीयासु क्रियासु व्यवस्थितः सन् प्रतीचीनमात्मनोऽभिमुखम् इन्द्रम् अवस्थाप्य स्ववीर्येण स्थापयित्वा अस्मै यजमानाय वृजनं बलवद्यज्ञफलं दोहसे पूरयसि। कथं? प्रत्नथा। थाउपमार्थीयः, प्रत्नशब्दः पुराणवचनः। तथा च चिरन्तनानामिव ऋषीणामित्यर्थः।

टलोपः। (१) वातेन प्रेरितं रविमण्डलं भ्रमतीति प्रसिद्धिः॥ (२) पुरुशब्दो बह्वर्थतया संख्यावाचित्वेनाभिमत इह इति "संख्याया विधार्थे धा" (पा० ५।३।४२) इति धाप्रत्ययोऽत्र छान्दसः॥ (३) वस्तुतस्त्वेषोऽर्थोऽस्य भ्रान्तिनिबन्धनः। उव्वटोऽपि "शकुनिः क्षिप्रपाती भुरण्युरित्यभिधीयत" इत्याह। तथा च भुरण्युमात्मानं करोति भुरण्यति भुरण्यतीति भुरण्यन् तं, क्विबन्ताच्छतृप्रत्ययः। सर्वमेधयाजिनं भुरण्यपक्षिरूपमात्मानङ्कृत्वा स्वर्गङ्गच्छन्तं येन चक्षसा दर्शनेनानुपश्यसि तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण सूर्य! त्वं पश्येत्यर्थम्महीधर आह।

पूर्वथा पूर्वेषामिव ऋषीणां साध्यानां, विश्वथा विश्वेषामिव ऋषीणाम्, इमथा इदानीन्तनानामृषीणामित्यर्थः। इन्द्रम् किम्भूतं? ज्येष्ठतातिं उत्कृष्टविस्तारम्। अथ वा ज्येष्ठप्रशस्यं, बर्हिषदं बर्हिषि तिष्ठन्तं, स्वर्विदं स्वर्लोकं जानन्तं, तद्वासित्वात्। धुनिं कम्पयितारं "शत्रूणामि"ति शेषः। "धूञ् कम्पने"। आशुं जयन्तं शीघ्रं जयशालिनं "जेतव्यानि" इति शेषः॥५॥

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरा-

यू रजसो विमाने॥ इममपाᳬ सङ्गमे सूर्यस्य

शिशुं न विप्रा मतिभी रिहन्ति॥ ६॥

अयं वेनः कान्तश्चन्द्रमा इति यावत्। पृश्निगर्भा अपः चोदयत् प्रेरयति। "लेट्" (पा० ३।४।७) इतो लोपः। वर्षतीत्यर्थः। पृश्निर्द्युलोकः सूर्यो वा। तस्य गर्भे तिष्ठन्तीति (१)पृश्निगर्भाः। वेन इति "विन कान्तावि"त्यस्य (२)प्रयोगः। चन्द्रमाः किम्भूतः? ज्योतिर्जरायुः-ज्योतिरेव जरायुः जरायुवत् गर्भपुटबन्धनमस्य। कस्मिन् समये? रजसः जलस्य (निघं० ४।१।३६) विमाने त्यागसमये (३) ग्रीष्मान्त इत्यर्थः। इममेव सोमम् अपां सूर्यस्य च सङ्गमे "गृहीताभिर्वसतीवरीलक्षणाभिरद्भिरभिषुतं सन्तमि"ति शेषः। शिशुं न-शिशुमिव विप्रा मेधाविनो मतिभिः मतिपूर्वकवाग्भिः रिहन्ति स्तुवन्ति। सोमाभिषवार्थं वसतीवर्य आपः अपां सूर्यस्य च सङ्गमे गृह्यन्ते। (४) "ता वै स्यन्दमानानां (वहन्तीनां) गृह्णीयाद्दिवा गृह्णीयादि"ति श्रुतेः॥ ६॥

चित्रं देवानामिति व्याख्यातं सूर्योपस्थाने॥ ७॥

आ नऽइडाभिर्विदथे सुशस्ति विश्वानरः

सविता देवऽएतु॥ अपि यथा युवानो मत्स-

था नो विश्वञ्जगदभिपित्वे मनीषा॥ ८॥

सविता देवः नः अस्माकं विदथे यज्ञे तथा तेन प्रकारेण आ एतु आगच्छतु। इडाभिः यज्ञकारणभूताभिः सुशस्तिभिः शोभनशंसनहेतुभूतैः। (५)सविता किम्भूतः? विश्वानरः (६)विश्ववर्तिनां जनानां स्वत एव

---

उव्वटोऽपि एवमेवाह॥ (१) एतत्फलितार्थकथनं, विग्रहस्तु पृश्निर्गर्भो यासामिति। तथाच षष्ठ्यर्थे बहुव्रीहिरिहेति भावः। (२) वेनतिः कान्तिकर्मा नैघण्टुकः (२।६।४) विन कान्तावित्येतमर्थमभिप्रेत्याभिहितमनेन॥ (३) निर्माणकाले इत्युव्वटः। (४) रिहतिरर्चतिकर्मसु पठितः (निघं० ३।१४)॥ अयमर्थः अनयाऽधिदैवमधियज्ञं च सोमः क्रमेण देवाऽऽत्मना लताऽऽत्मना च स्तूयते इति। (५) तृतीयायाः "सुपां सुलुगि" (पा० ७।१।३९) इत्यादिना लुक्, एवमग्रेऽपि॥ (६) विश्वेभ्यो नरेभ्यो हितः। विश्वनरहितकारीति महीधरः। निरुक्ते (७।२१।१)

रक्षकः । स्वपादित्युवटः । तथा कथम् ? यथा येन प्रकारेण हेतुना वा हे युवानः ! कर्मत्तमाः आगमनकाले मपरिणामिनः श्रवृद्धाः देवा इति यावत् । नः कृते विश्वं जगत् सर्वं जगत् मत्सथ तर्पयथ । अभिपित्वे अभिपतनकाले अन्नाय वा । कया ? मनीषा-मनीषया-बुद्ध्या ॥ ८ ॥

यदद्य कच्च वृत्रहन्नुदगाऽअभिसूर्य्य ।

सर्वं तदिन्द्र ते वशे ॥ ९ ॥

हे वृत्रहन् ! वृत्रं शार्वरं तमस्तस्य हन्तः(१) ! सूर्य । अद्य यत् यत्र कच्च कुत्रचित् त्वम् अभ्युदगाः अभ्युदेषि(२) । हे इन्द्र परमेश्वर ! (३) सूर्य । तत्सर्वं तव वशे वर्त्तते । तत्र त्वमेवैक ईश्वरो नान्य इत्यभिप्रायः॥९॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य ।

विश्वमाभासि रोचनम् ॥ १० ॥

हे सूर्य । त्वं तरणिः ऊर्द्ध्वं तूर्णं प्रवर्तसे विश्वदर्शतः विश्वस्य सर्वस्य दर्शनीयः ज्योतिष्कृत् ज्योतिषां कर्ता असि-भवसि । अतस्त्वामित्थं भूतं ब्रूमः-त्वमेव विश्वं सर्वं जगत् आभासि दीपयसि । विश्वं कथम्भूतं ? रोचनं दीप्यमानम् अग्निविद्युन्नक्षत्रादिरूपेण त्वमेव सर्वत्र भासीत्यर्थः ॥ १० ॥

तत्सूर्य्यस्य देवत्वन्तन्महित्वं मद्ध्या

कर्त्तोर्विततꣳ सञ्जभार । यदेदयुक्त हरितः

सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥ ११ ॥

सूर्यस्य तदेव देवत्वं तदेव महित्वं महिमा यत्कर्त्तोः (४)कर्मणो मध्या मध्ये विततं रश्मिजालं कल्पान्त इवान्तकाले (५)संजभार संजहार(६) संहरते । नान्य एतत्तनितुं शक्नोति नोपसंहर्तुमित्यभिप्रायः । किञ्च यदा इत् यदा एव सधस्थात् रश्मीनां सह(७)स्थानात् अर्थात् पृथिव्यादिलोकत्रयात् । ते हि तत्र निपतन्ति अतस्तस्मात् हरितः हरिद्वर्णान् रश्मीन्

---

तु "विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा अपि वा विश्वानर एव स्यात्प्रत्यृतः सर्वाणि भूतानी"ति । विश्वानि ह्यसौ भूतानि प्रति ऋतः प्रविष्ट इति तदर्थः ॥ (१) "वृत्रो मेघे ह्यरौ ध्वान्ते दानवे वासवे रिपौ" इति विश्वकोशात् ॥ (२) वर्त्तमानेऽत्र लुङ् (पा० ३।४।६) (३) "इदिपरमैश्वर्ये" (भ्वा० प०) ततो रन्नौणादिकः ॥ (४) कार्यश्रेष्ठस्य जगद्रूपस्य "ईश्वरे तोसुन्" (पा० ३।४।१३) इति तोसुन्प्रत्ययः । मध्या इति डेर्डादेशः । (पा० ७।१।३९) ॥ (५) दिनान्ते । (६) "हृग्रहोर्भश्छन्दसि" (पा० ३।१।८४ वा०) इति हस्य भः । वर्त्तमानेऽत्र लिट् । (पा० ३।४।६) । (७) व्योममण्डलादिति महीधरः । अत्र सहस्य सधादे-

मात्मनि अयुक्त युक्तवान् (१)आत्मसंस्थानकरोत्। माद्राप्नोति। आत्–अथ रात्री सिमस्मै सर्वस्मै जगते वासः तमोमयं वासः (२)तनुते विस्तारयति। एवमेकत्रादित्यसहितं ज्योतिरन्यत्र तमः। आदित्यप्रभावाद्भसतीत्यभिप्रायः ॥ ११ ॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं
कृणुते द्योरुपस्थे। अनन्तमन्यद्रुशदस्य पाजः
कृष्णमन्यद्धरितः सम्भरन्ति ॥ १२ ॥

सूर्यो मित्रस्य वरुणस्य च अभिचक्षेऽभिदर्शनाय द्योः द्युलोकस्य उपस्थे उत्सङ्गे तत् रूपं कृणुते मण्डलाकृतिरूपं करोतीत्यर्थः। येन रूपेण जनानभिचक्षेऽभिचष्टे अभिपश्यति। लडर्थे लिट् (पा० ३।४।६) मित्रो हि सुकृतिनोऽनुगृह्णाति। वरुणो दुष्कृतिनो निगृह्णाति। सूर्योदये हि एवमनेन प्रकारेण तौ जगदनुगृह्णीत इत्यर्थः। किं–च अस्य सूर्यस्यान्यत् पाजः रूपं हरितो दिशः। इन्द्रियवृत्तयो वा सम्भरन्ति संहितं बिभ्रति(३)। रूपं किम्भूतम्? अनन्तम्–अपर्यन्तं (४)कालतो देशतश्च। रुशत् (५)शुक्लं जरामरणाद्ययुक्तं विज्ञानघनानन्दमयमित्यर्थः। अन्यच्च कृष्णं द्विविधमित्यर्थः ॥ १२ ॥

बण्महाँ २॥ऽअसि सूर्य्यबडादित्य महाँ २॥
ऽअसि॥ महस्ते सतो महिमा पनस्यतेऽद्धा
देव महाँ २॥ ऽअसि ॥ १३ ॥

हे सूर्य(६)! बट् सत्यं (निघं० ३।१०) महानसि। महदसि ब्रह्मेत्यर्थः। हे आदित्य(७)! बट् सत्यं महानसि "तेजसा" इति शेषः। किं च महः महतः सतः ते तव महिमा महाभाग्यं सर्वदेवेष्ववस्थितं सर्वैः प्राणिभिः पनस्यते पूज्यते। (निघं० ३।१४) मतः हे देव! दानक्रीडादियुक्त! अद्धा (८)तत्त्वतः महानसि। "अभ्यासे भूयांसमर्थं मन्यन्ते"

---

यः। (पा० ६।३।९६)। (१) अत्र वर्त्तमाननिर्देश एव युक्तत्योव्वट–महीधराभ्यां कृतः। (२) वसनम् (वस्त्रम्)। लडर्थे लुङ्। (पा० ३।४।६)॥ (३) धारयन्ति। इन्द्रियग्राह्यं द्वैतरूपमेकं,—मपरञ्च शुद्धचैतन्यमद्वैतलक्षणमिति द्वे रूपे सूर्यस्य। सगुणं निर्गुणं च ब्रह्म सूर्य एवेत्यर्थः॥ पाज इति बलनाम (निघं० २।२) इह तु रूपमुच्यते। (४) अपरिच्छिन्नम्। (५) अद्वैतलक्षणम्। रुशदिति रोचतेरति प्रत्यये चकारस्य शकारे गुणाभावे च निपातिते रूपम्। (६) सुवति कर्म्मणि लोकं प्रेरयतीति सूर्य्यः "राजसूयसूर्य" (पा० ३।१।११४) इत्यादिना क्यबन्तो निपातितः। (७) तेजसामादानादादित्य इत्युव्वटः। (८) तत्त्वे त्वद्धाऽञ्जसा

( निरु० १०।४२ ) यथाऽहो दर्शनीयोऽहोऽदर्शनीयोऽत्र न पुनरुक्तिदोषः । एवं बट् सूर्य इति ॥ १३ ॥

बट् सूर्य्य श्रवसा महाँ २॥ऽअसि सत्रा
देव महाँ २॥ ऽअसि ॥ मह्ना देवाना-
मसुर्य्यः पुरोहितो विभुज्ज्यो-
तिरदाभ्यम् ॥ १४ ॥

हे सूर्य ! बट् सत्यं श्रवसा श्रवणीयेन बलेन ( निघं० २।६ ) धनेन ( निघं २।१० ) कीर्त्या वा ( निरु० ४।२४ ) महानसि । हे देव ! सत्रा सत्यं ( निघ० ३।१० ) महानसि । किं च मह्ना स्वकीयमहत्त्वेन देवानां मध्ये असुर्य्यः असि । असुरस्यास्तीति असुरः प्राणी तस्मै हितः असुर्य्यः । 'उगवादिभ्यो यत्' ( पा० ५।१।२ ) इति यत् । प्राणिनां हित इत्यर्थः । पुरोहितः-पुर एनं दधति सर्वकर्मस्विति पुरोहितः प्रथमपूज्यः । किं च विभु व्यापकम् अदाभ्यम् अनुपहिंस्यं ज्योतिः विज्ञानघनानन्दमयमसीत्यर्थः ॥ १४ ॥

श्रायन्तऽइव सूर्य्यं विश्वेदिन्द्रस्य भक्षत ॥
वसूनि जाते जनमानऽओजसा प्रति
भागन्न दीधिम ॥ १५ ॥

यथा सूर्यं रश्मयः श्रायन्त (१)इव श्रयन्त एव । किञ्च इन्द्रस्य इन्द्रसम्बन्धीनि इन्द्रानुज्ञातानि विश्वा-(२)इत् सर्वाणि वसूनि धनानि (३) । सूर्यं भक्षत(४) अभक्षत भजन्ते(५) । एवं वयमपि सूर्यं समाश्रिताः तदुपष्टम्भात् । विश्वानीन्द्रस्य धनानि जाते- पुत्रपौत्रप्रपौत्रादौ जनमाने जनिष्यमाणे च भविष्यत्कालविषये ओजसा बलेन ज्ञानसमुच्चयकारितया प्रतिभागं नकार उपमार्थीयः । प्रतिपुरुषं भागमिव (६)दीधिम निधीमहि । स्थापयामः । दधातेरेतद्रूपं न ध्यायतेः(७) ॥ १५ ॥

---

द्वयम्" इत्यमरः । ( १ ) आश्रिताः । इव एवार्थे "श्रिञ्सेवायां" ( भ्वा० उ० ) लटः शतरि । शपि गुणे प्राप्ते व्यत्ययेन वृद्धिः । ( २ ) इदितिपादपूरणः । "शेश्छन्दसि बहुलम्" ( पा० ६।१।७० ) इति शेर्लोपः । ( ३ ) वृष्टिधान्यनिष्पत्त्यादीनि । ( ४ ) "भजभागसेवयोः" ( भ्वा० उ० ) अस्य लुङि तङि प्रथमपुरुषबहुवचनेऽडभाव आर्षः । "आत्मनेपदेष्वनत" ( पा० ७।१।५ ) इति झस्यादादेशः । सूर्यंकिरणा इन्द्रदत्तां वृष्टिम्भूमौ प्राणिभ्यो विभज्य ददतीत्यर्थः । ।( ५ ) विभजन्ते । ( ६ ) यथा स्वभागं पुत्रादिषु धारयामः स्थापयामस्तथेत्यर्थः । ( ७ ) अर्थपौष्कल्यादित्यु-

अद्या देवाऽउदिता सूर्य्यस्य निरꣳहसः

पिपृता निरवद्यात् ॥ तन्नो

मित्रो वरुणो मामहन्तामदितिः

सिन्धुः पृथिवीऽउत द्यौः ॥ १६ ॥

हे देवा(१)रश्मयः! अद्या अद्य सूर्यस्य(२) उदिता उदये सति (उदयकालीना यूयम्) नः अस्मान् अंहसः पापान्निष्पिपृत निर्मुञ्चत-निर्मोचयत अवद्याच्च निष्पिपृत। अवद्यमवाच्यं दुर्यशः। तत् हेतौ। तस्माद् वरुणः मित्रश्च मा मांमहन्तां पूजयन्ताम्। उत अपि च। अदितिः सिन्धुः पृथिवी द्यौश्च मामहन्तां पूजयन्तु ॥ १६ ॥

आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं

मर्त्यञ्च ॥ हिरण्ययेन सविता रथेना

देवो याति भुवनानि पश्यन् ॥ १७ ॥

सविता सूर्य आयात्यागच्छति। किम्भूतः सविता? देवः स्तुतिदीप्तिक्रीडायुक्तः। केनायाति? रथेन। किम्भूतेन? हिरण्ययेन सौवर्णेन। किं कुर्वन्? भुवनानि पश्यन् भुवनवर्त्तिनो लोकान् पुण्यपापकर्तॄन् निरीक्षमाण इत्यर्थः। न केवलमेवं किं तु अमृतं देवं मर्त्यं मनुष्यं च निवेशयन्। "स्वे स्वे व्यापार इति शेषः। मनुष्याः सूर्य्योदये यागादिभिर्देवान् प्रीणयन्ति। पुनः किम्भूतः सविता? आवर्तमानः पुनः पुनस्तमेव देशमागच्छन्। केन सह? रजसा रात्रिकालेन। प्रायो रात्रिकालोऽपुण्यकर्मणां मनुष्यादीनामिति रात्रेः कृष्णत्वमुक्तम्। अयं वाक्यार्थः। यः सविता देवः देवमनुष्यव्यापारस्थापकः यश्च पुण्यपापसाक्षी तस्यार्चादिकमुचितमिति ॥ अत्र आयातीति व्यवहितेनाङा सम्बन्धः। आवर्तमान इत्यत्र च। छन्दसि 'व्यवहिताश्चे' (पा० १।४।८२) ति पाणिनीयसूत्रात्। हिरण्ययेनेति हिरण्मयार्थे निपातः (पा० ६।४।१७४) ॥ १७ ॥

इति षडङ्गे चतुर्थः ॥

---

अथ शतरुद्रियं व्याख्यायते ॥

नमस्ते रुद्र मन्यवऽउतोतऽइषवे नमः ॥

बाहुभ्यामुत ते नमः ॥ १ ॥

---

स्वटः। महीधरस्तु "धृतौ" लङ्। व्यत्ययेन शपः श्लुर्द्वित्वम्। "तुजादित्वात्" (पा० ६।१।७) अभ्यासस्य दीर्घः। (१) दीव्यन्ति दीप्यन्ते इति देवाः। (२) अद्या उदिता इति छान्द-

रुद्रमुपशान्तयति-हे रुद्र ! रोदनं रुद् दुःखं द्रावयति नाशयति इति रुद्रः । यद्वा 'रुगतौ'-ये गत्यर्थास्ते ज्ञानार्थाः । रवणं रुत् ज्ञानं भावे क्विप् तुगागमः । रुत् (ज्ञानं) राति ददातीति रुद्रः । हे रुद्र ! ते-तव मन्यवे क्रोधाय नमोऽस्तु । उतो समुच्चयेऽपि च ते तव इषवे बाणाय नमः । उतापि च ते तव बाहुभ्यां नमः । 'अस्त्वि'ति सर्वत्राध्याहार्य्यम् । "सर्वं वाक्यं क्रियया परिसमाप्यते" इति न्यायात् । तव क्रोधबाणहस्ता अस्मदरिष्वेव प्रसरन्तु नास्मास्वित्यर्थः ॥ १ ॥

या ते॑ रुद्र शि॒वा त॒नूरघो॒राऽपा॑पकाशिनी ।

तया॑ नस्त॒न्वा॒ शन्त॑मया॒ गिरि॑शन्ता॒भिचा॑कशीहि ॥ २ ॥

हे रुद्र ! या ते तव ईदृशी तनूः शरीरं, हे गिरिशन्त ! तया तन्वा नोऽस्मानऽभिचाकशीहि अभिपश्य । चाकशीतिः पश्यतिकर्मा, ( निघं० ३।११।८ ) कीदृशी तनूः ? शिवा शान्ता मङ्गलरूपा । यतः अघोरा अविषमा सौम्या । अत एव अपापकाशिनी पापमसुखं काशयति प्रकाशयतीति पापकाशिनी न पापकाशिनी अपापकाशिनी । या पुण्यफलमेव ददाति न पापफलमित्यर्थः । गिरौ कैलाशे स्थितः शं सुखं प्राणिनां तनोति विस्तारयतीति गिरिशन्तः । गिरि वाचि स्थितः शं तनोतीति वा । गिरौ मेघे स्थितो वृष्टिद्वारेण शन्तनोतीति वा । गिरौ शेते गिरिशः । (१) अमति गच्छति जानातीति वा अन्तः सर्वज्ञः "अमगतौ भजने शब्दे च" कर्त्तरि क्तः । गिरिशश्चासावन्तश्चेति गिरिशन्तः । तत्सम्बुद्धिरिति हे गिरिशन्त ! "शकन्ध्वादित्वात्पररूपम्" (पा० ६।१।९४ वा०) । कीदृश्या तन्वा ? शन्तमया सुखतमया सुखयितृतमया ॥ २ ॥

यामिषुं गिरिशन्त॒ हस्ते॑ बि॒भर्ष्यस्त॑वे ।

शि॒वां गि॑रित्र॒ तां कु॑रु॒ मा हि॑ꣳसीः॒ पुरु॑षं॒ जग॑त् ॥ ३ ॥

हे गिरिशन्त ! यामिषुं बाणं हस्ते बिभर्षि धारयसि । किं कर्त्तुम् ? अस्तवे "असुक्षेपणे" ( दि० प० ) तुमर्थे तवे प्रत्ययः ( पा० ३।४।९ ) असितुं शत्रून्प्रति क्षेप्तुमित्यर्थः । हे गिरित्र ! गिरौ कैलाशे स्थितो भूतानि त्रायते इति तत्सम्बुद्धिः । ताम् इषुं शिवां कल्याणकारिणीं कुरु । किं च पुरुषं पुत्रपौत्रादिकं जगज्जङ्गममन्यदपि गवाश्वादिकं, मा हिंसीः मा वधीः ॥ ३ ॥

शि॒वेन॒ वच॑सा त्वा॒ गिरि॒शाच्छा॑ वदामसि ॥

---

सो दीर्घः (पा० ६।३।११७) (१) "गिरौ डश्छन्दसि" (पा० ३।२।१५ वा०) इति डे टिलोपः ॥

यथा नः सर्व्वमिज्जगदयक्ष्मꣳ सुमनाऽअसत् ॥ ४ ॥

गिरौ कैलासे शेते गिरिशः। (१) हे गिरिश! शिव! शिवेन वचसा मङ्गलरूपेण वचनेन त्वा त्वाम् अच्छ—त्वां प्राप्तुं वयं वदामसि वदामः प्रार्थयामहे। "अच्छाभेराप्तुमिति शाकपूणिः"(२)। संहितायां "निपातस्य चे"(पा.६।३।१३६)ति दीर्घः। "इदन्तोमसि" (पा.७।१।४६) इतिमस इगागमः। किं वदामः? इत्यत आह—नोऽस्माकं सर्वमित् सर्वमेव जगत् जङ्गमादि (नर पश्वादि) यथा येन प्रकारेण अयक्ष्मं नीरोगं व्याधिरहितं, यक्ष्मा व्याधिः। सुमनाः शोभनमनस्कश्च असत् भूयात्। तथा कुर्वित्यर्थः। सुमनः—शब्दे पुंस्त्वमार्षं जगद्विशेषणत्वात्। असदित्यत्र अस्तेर्लेट्। "लेटोऽडाटावि"-त्यट्। इलोपः। इच्छब्दः एवकारार्थ ॥ ४ ॥

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ॥ अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परासुव ॥ ५ ॥

अधिशब्द उपरिभावमैश्वर्यं वा वदति। रुद्रो माम् अध्यवोचत् अधि(३)वक्तु सर्वाधिकं वदतु। अयम् याजकः सर्वाधिको भवत्विति तेनोक्ते मम सर्वाधिक्यं भविष्यत्येवेत्यर्थः। कीदृशो रुद्रः? अधिवक्ता अधिकं वदनशीलः। तथा प्रथमः सर्वेषां मुख्यः पूज्यत्वात्। दैव्यः देवेभ्यो(४) हितः भिषक् रोगनाशकः। स्मरणेनैव रोगनाशात् भिषक्त्वम्। शिवमेवं परोक्षमुक्त्वा प्रत्यक्षमाह हे रुद्र! सर्वा यातुधान्यः यातुधानीराक्षसीः त्वं परासुव परिक्षिप अस्मत्तो दूरीकुरु। किंकुर्वन्? सर्वान् अहीन् सर्पव्याघ्रादीन् जम्भयन् विनाशयन् "जभिर्नाशने" (चु०प०) लटः शता। कीदृशीः यातुधानीः? अधराचीः अधरे अधोदेशेऽञ्चन्ति ता अधराच्यः ता अधराचीः अधोऽधो गमनशीलाः। चः समुच्चये। सर्पादिनाशराक्षसीक्षेपौ सहैव कुर्वित्यर्थः ॥ ५ ॥

असौ यस्ताम्रोऽअरुणऽउत बभ्रुः सुमङ्गलः ॥ ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः

(१) "गिरौ डश्छन्दसि" इति डप्रत्यये टिलोपः ॥ (२) अस्यार्थः। अच्छेति अभेरर्थे वर्त्तते। तथा चाभीत्युपसर्गो योग्यतावलादभिवदने वर्त्तते इत्येके प्राहुः। आप्तुमिति तदर्थं इतिशाकपूणिराचार्य आहेति ॥ (३) लोडर्थे लुङ् (पा० ३।४।६)॥ (४) "तस्मै हितमि"ति (पा० ५।१।५) यत्प्रत्ययः। वस्तुतस्तु यत्यादिवृद्धिर्दुर्लभा। अतोदिविभवोदिव्यः। "द्युप्रागपागुदक्प्रतीचो यत्" (पा० ४।२।१०१) इतियत्। अद्भुतः। दिव्य एव दैव्यः स्वार्थेऽण् प्रत्ययः (पा० ५।४।३८)॥

सहस्रशोऽवैषाᳪ हेडऽईमहे ॥ ६ ॥

आदित्यरूपेणाय रुद्रः स्तूयते । अभिनयेन दर्शयन्नाह-योऽसौ प्रत्यक्षो रुद्रो रविरूपश्च पुनः ये रुद्राः एनम् अभितो दिक्षु प्राच्यादिषु श्रिताः किरणरूपेण । "अभितः परितः" (पा० २।३।२ वा०) इत्यादिना द्वितीया । सहस्रशः सहस्रसंख्याः । एषां हेडः क्रोधम् अस्मदपराधजं वयम् अवई-महे-अवनयामः निवारयामः भक्त्या निराकुर्मः । "हेड इति क्रोधनाम" (निघं० २।१३।३) । कीदृशोऽसौ ? ताम्रः उदयेऽत्यन्तं रक्तः । अरुणः रक्तो ऽस्तकाले । उतापि च बभ्रुः पिङ्गलवर्णोऽन्यदा । सुमङ्गलः शोभनानि मङ्गलानि यस्य सः । मङ्गलरूपं रव्युदय सर्वमङ्गलप्रवर्त्तनात् । क्रमेणैतानि रूपाणि दधातीत्यभिप्रायः । यद्वा रुद्र एवोच्यते-असौ यस्ताम्रः ताम्रवर्णः । अरुणः अरुणवर्णः । उत अपि च बभ्रुः बभ्रुवर्णः । सुमङ्गलः । प्रयोजनव-शान्नानारूपाणि करोति । यद्वा क्रोधेन ताम्रः क्रमात् क्रोधह्रासेन यादृशं रूपं तादृशमाशास्यते ॥ ६ ॥

असौ योऽवसर्प्पति नीलग्रीवो विलोहितः ॥

उतैनङ्गोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः

स दृष्टो मृडयाति नः ॥ ७ ॥

योऽसावादित्यरूपो रुद्रोऽवसर्प्पति उदयास्तमयौ कुर्वन्निरन्तरं ग-च्छति गोपाः । उत अप्यर्थ गवां प्रवेशकालं मन्यमाना इत्यर्थः । गोपालाः उत वेदोक्तसंस्कारहीना अपि अदृश्रन्पश्यन्ति । एनम् उदहार्य्यः उद-कं हरन्ति यास्ताः "मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च" इति उदकस्योदादेशः । जलहारिण्यो योषितोऽपि एनम् अदृश्रन्पश्यन्ति । आगोपालाङ्गनाप्रसिद्ध एष इत्यर्थः । दृशेर्लुङि "इरितोवेति (पा० ३।१।५७) च्लेरङ् रुमागमश्च छान्दसः । कीदृशोऽसौ ? नीलग्रीवः विषधारणेन नीला ग्रीवा कण्ठो यस्य सः । अस्तमयेऽयं सूर्य्यः नीलकण्ठ इव लक्ष्यः । विलो-हितः विशेषेण रक्तः । स रुद्रः दृष्टः सन् नोऽस्मान्मृडयाति (१) । मृड-यतु सुखयतु । असौ मण्डलवर्ती सविता रुद्र एव तपतीति ज्ञातः सुखं करोत्वित्यर्थः ॥ ७ ॥

नमोऽस्तुनीलग्रीवाय सहस्राक्षाय मीढुषे ।

अथो ये ऽअस्य सत्त्वानोऽहन्तेभ्योऽकरन्नमः ॥ ८ ॥

नीलग्रीवाय श्रीनीलकण्ठाय रुद्राय नमोस्तु । किम्भूताय ? सहस्रा-

(१) लोडर्थेलेट् । (पा० ।३।४। ७) ॥

ज्ञाय वहत्ताय इन्द्रस्वरूपिणे । मेहते इति मीढुष् तस्मै मीढुषे, "मिहसे-चने" (भ्वा० उ०) इत्यस्मा—"दाश्वान्साह्वान्मीढ्वाँश्च" ति (पा० ६ । १ । १२) क्वस्वन्तो निपातः । सेक्त्रे वृष्टिकर्त्रे पर्जन्यरूपायेत्यर्थः । तरुणाय वा । अथो अपि च अस्य रुद्रस्य ये सत्वानः प्राणिनो भृत्या-स्तेभ्योऽहं नमो नमस्कारम् अकरं करोमि । "डुकृञ्करणे" (तु० उ०) ततो लडर्थे लुङि उत्तमैकवचनम् । अपरिणामित्वेन स्तूयते इति भावः ॥ ८ ॥

प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।

याश्च ते हस्तऽइषवः परा ता भगवो वप ॥ ९ ॥

हे भगवः ! भगं षड्विधमैश्वर्यमस्त्यस्येति भगवान् "मतुवसोरुः सम्बुद्धौ छन्दसी" (पा० ८ । ३ । १) ति रुत्वम् । "ऐश्वर्यस्य सम-(१) ग्रस्य" त्याद्युक्तत्वात् । हे भगवन् ! रुद्र ! तव धन्वनः उभयोरार्त्न्योः द्वयोः कोट्योः स्थितां ज्यां मौर्वीं त्वं प्रमुञ्च दूरीकुरु । याश्च ते तव हस्ते इषवो बाणाः ताः इषूः परावप पराक्षिप ॥ ९ ॥

विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२ ॥

ऽउत ॥ अनेशन्नस्य याऽइषवऽआभुरस्य निषङ्गधिः ॥ १० ॥

अस्य कपर्दिनः कपर्दो जटाजूटोऽस्यास्तीति कपर्दी तस्य रुद्रस्य धनुः विज्यमस्तु विगतगुणं भवतु । बाणवान्निषुधिः, विशल्योऽस्तु विगतशल्यो भवतु । शल्यः फलम् । बाणाः सन्त्यत्रेति बाणवान् । उतापि च अस्य या इषवः शराः ता अनेशन् नष्टा भवन्तु । "णश्अदर्शने" (दि०प०) "नशेरतपत्वमङ्कि वे"-त्येत्वम् । पुषादित्वात्च्लेरङ् । किं च अस्य निषङ्गधिः खड्गकोशः आभुः रिक्तोस्तु । खड्गरहितोऽस्तु(२) । निषज्यते इति निषङ्गः स धीयतेऽत्रेति निषङ्गधिः खड्गकोशः ॥ १० ॥

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ॥

तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परिभुज ॥ ११ ॥

अतिशयेन मीढ्वान्मीढुष्टमः । "तसौ मत्वर्थे" (पा० १ । ४ । १९) इति भसंज्ञायां "वसोः सम्प्रसारणम्" (पा० ६ । ४ । १३१) इति वस्योत्वे षत्वष्टुत्वे । हे मीढुष्टम ! सेक्तृ (३) तम ! वर्षुक ! ते तव हस्ते या धनुर्हेतिः धनूरूपमायुधं बभूव स्थितमस्ति । एकं तेपदं पादपूरणाय । तया धनूरूपया हेत्या विश्वतः सर्वतः अस्मान् त्वं परिभुंज—परिपालय ।

(१) "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति ॥ (२) रुद्रः अस्मान्प्रतिन्यस्तसर्वशस्त्रास्त्रोऽस्त्वित्यर्थः । (३) युवतम ! । विपरिणामनिषेधद्वारेण स्तुतिः ॥

पालनार्थस्य भुजेर्विकरणव्यत्ययो ( पा० ३।१।८५ ) शप्रत्ययः। कीदृश्या तया ? अयक्ष्मया न यक्ष्मा रोगो यस्याः तया निरुपद्रवया दृढ्या। अनुपद्रवकारिण्या वा ॥ ११ ॥

परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः ॥

अथो यऽइषुधिस्तवारेऽअस्मन्निधेहि तम् ॥ १२ ॥

हे रुद्र! ते तव धन्वनो हेतिः धनुःसम्बन्धि आयुधं विश्वतः सर्वतः अस्मान् परिवृणक्तु त्यजतु मा हन्तु इत्यर्थः। "वृजीवर्जने" रुधादित्वात् श्नम्। अथो-अपि च यस्तव इषुधिः बाणः तम् अस्मत् अस्मत्तः सकाशात् आरे दूरे ( निघं० २। २६ ) निधेहि अस्मत्तो दूरे स्थापयेत्यर्थः ॥ १२ ॥

अवतत्य धनुष्ट्वं सहस्राक्ष शतेषुधे ॥

निशीर्य्य शल्यानाम्मुखा शिवो नः सुमना भव ॥ १३ ॥

सहस्रमक्षीणि यस्य स सहस्राक्षः तत्सम्बुद्धिः हे सहस्राक्ष!। शतम् इषुधयो यस्य सः शतेषुधिः तत्सम्बुद्धिः हे शतेषुधे।। त्वं नोऽस्मान् प्रति शिवः शान्तः सुमनाः शोभनचित्तश्च भव। अनुगृहाणेत्यर्थः। किं कृत्वा ? धनुः अवतत्य अप ( गत ) ज्याकं कृत्वा अवतार्य्य। किं च शल्यानां बाणफलानां मुखा मुखानि बाणफलकाग्राणि निशीर्य्य शीर्णानि कृत्वा "शॄहिंसायां" ( क्र्या० प० ) "समासेऽनञ्पूर्वे क्त्वोल्यप्" ( पा० ७। १। ३७ ) इति क्त्वोल्यप् "ॠत इद्धातोः" ( पा० ७। १। १०० ) इतीत्वम् ॥ १३ ॥

नमस्तऽआयुधायानातताय धृष्णवे ॥

उभाभ्यामुत ते नमो बाहुभ्यान्तव धन्वने ॥ १४ ॥

हे रुद्र! ते तव आयुधाय बाणाय नमोऽस्तु। कीदृशायायुधाय ? अनातताय धनुषि अनारोपिताय। धृष्णवे धर्षणशीलाय "धृषेः क्नुप्रत्ययः"(प २:१४.) रिपून्हन्तुं प्रगल्भाय। उतापि च ते तव उभाभ्यां बाहुभ्यां नमः। तव धन्वने धनुषेऽपि नमोऽस्तु। तस्यापि विशेषणम् अनाततायं अवतारितमौर्वीकाय। पुनः पुनर्नमस्कार आदरातिशयेन ॥ १४ ॥

मा नो महान्तमुत मा नोऽअर्भकम्मा

नऽउक्षन्तमुत मा नऽउक्षितम् ॥ मा नो

वधीः पितरम्मोत मातरम्मा नः

प्रियास्तन्वो रुद्र रीरिषः ॥ १५ ॥

हे रुद्र ! नः अस्माकं महान्तं वृद्धं गुरुपितृव्यादिकं, त्वं मा वधीः मा हिंसीः । उत-अपि नः अस्माकमर्भकं बालं मा वधीः । मा च नः उक्षन्तं सिञ्चन्तं तरुणं वधीः । उत-अपि नः उक्षितं सिक्तं गर्भस्थं च मा वधीः । नः पितरं जनकं मा वधीः । उत-अपि नो मातरं जननीं मा वधीः । महान्तमित्यनेन सिद्धयोर्मातापित्रोः पुनः पुनरुपादानमादरार्थं । नः प्रिया वल्लभाः तन्वः तनूः शरीराणि पुत्रपौत्ररूपाणि त्वं मा रीरिषः मा हिंसीः । "रिष नहिंसार्थः" (भ्वा०प०) तो लोडर्थे लुङ् ॥ १५ ॥

मा नस्तोके तनये मा नऽआयुषि मा

नो गोषु मा नोऽअश्वेषु रीरिषः ॥ मा

नो वीरान्रुद्र भामिनो वधीर्हविष्मन्तः

सदमित्त्वा हवामहे ॥ १६ ॥

हे रुद्र ! नः अस्माकं तोके पुत्रे तनये पौत्रे च मा रीरिषः मा हिंसीः । तद्विषयां हिंसां मा कुर्वित्यर्थः । एवं नः आयुषि जीवने मा रीरिषः मा हिंसीः । नः गोषु धेनुषु मा रीरिषः । नः अश्वेषु तुरगेषु च मारीरिषः । विभक्तिव्यत्ययो बाहुलकात् (पा०३।१।८५) । तोकं तनयम् आयुः गा अश्वान् । किं च भामिनः क्रोधयुतानपि नोऽस्माकं वीरान् भृत्यान् मा वधीः "भामक्रोधे" ( पा०३।३।१७० ) णिनिः । क उपकार इति चेत्तत्राह-यतः हविष्मन्तो हवियुक्ताः । सदम् सदाकाले । इच्छब्दः एवकारार्थः । सदैव त्वा त्वां वयं हवामहे यागाय आह्वयामः । त्वदेकशरणा वयमिति भावः ॥ १६ ॥

नमो हिरण्यबाहवे सेनान्ये दिशां च

पतये नमो नमो वृक्षेभ्यो हरिकेशेभ्यः

पशूनाम्पतये नमो नमः शष्पिञ्जराय

त्विषीमते पथीनाम्पतये नमो नमो हरिके-

शायोपवीतिने पुष्टानाम्पतये नमः ॥ १७ ॥

अतः परं तिस्रोऽशीतयो रुद्राणां द्वयोर्द्वयोर्नमस्कारः । एकैकस्यां कण्डिकायामष्टावष्टौ रुद्राः । तेषु येऽशान्ततरास्तेषामुभयतो नमस्काराः, हिरण्यमाभरणरूपं बाह्वोर्यस्य स हिरण्यबाहुः । स च सेनान्नयतीति सेनानीः तस्मै रुद्राय नमः । दिशां च पतये पालकाय रुद्राय नमः । हरयो हरितवर्णाः केशाः पर्णरूपाः येषां ते हरिकेशाः । तेभ्यः वृक्षेभ्यो वृक्षरूपरुद्रेभ्यो नमः । पशूनां जीवानां पतये पालकाय रुद्राय नमः । शष्पि-

श्राय शष्पस्वालतुल्यं तद्वत्पिञ्जराय पीतरक्तवर्णाय । ( सोपध ) त्विषी- मत्छान्दसः । त्विषिर्दीप्तिरस्यास्तीति त्विषिमान् तस्मै त्विषीमते "संहि- तायां भूम्न" इति प्रातिशाख्यसूत्रेण त्विषिशब्दस्य दीर्घः । ईदृशाय रुद्राय नमः । पथीनां मार्गाणां पतये पालकाय नमः । पथामिति प्राप्ते छान्दसं रूपम् । पथिन्शब्दो मार्गवाची । उत्तरदक्षिणतृतीया मार्गाः श्रुतावुक्ताः । हरिकेशाय नीलवर्णकेशाय । जराविहितायेति यावत् । उपवीतिने मङ्गलार्थं यज्ञोपवीतधारिणे रुद्राय नमः । पुष्टानां गुणपूर्णानां नराणां पतये स्वा- मिने नमः ॥ १७ ॥

नमो॑ बभ्लुशाय॑ व्याधिनेऽन्ना॑नाम्पत॑ये
नमो॒ नमो॑ भ॒वस्य॑ हे॒त्यै जग॑ताम्पत॑ये॒ नमो॒
नमो॑ रु॒द्राया॑तता॒यिने॒ क्षेत्रा॑णाम्पत॑ये॒ नमो॒
नम॑ः सू॒ताया॑हन्त्यै॒ वना॑नाम्पत॑ये॒ नम॑ः ॥ १८ ॥

अत्र नमः सम्बन्धिपदातिरिक्तानि पदानि विशेषणानि ज्ञेयानि । एवं सर्वत्र । बभ्लुशाय बभ्रुवर्णाय रुद्राय नमः बभ्रुः कपिशः । (१)व्याधिने विध्यतीति व्याधी तस्मै । अन्नानाम्पतये पालकाय नमः । नमो भवस्य हेत्यै । भवः संसारः तस्य हेत्यै आयुधाय । संसारच्छेदकायेत्यर्थः । जगतां पतये पालकाय नमः । नमो रुद्राय आततेन धनुषा सह एति गच्छतीति आततायी तस्मै । उद्यतधनुषे इत्यर्थः । क्षेत्राणां पतये नमः । सूर्योदया- स्तमनमध्यभूमिः क्षेत्रशब्देनोक्ता इति केचिदाचार्या भणन्ति । नमः सूता- य । सूतः सारथिः तस्मै । किम्भूताय ? अहन्त्यै न हि कमपि हन्तीति अहन्तिस्त(२)स्मै । वनानां पतये रक्षकाय नमः ॥ १८ ॥

नमो॒ रोहि॑ताय स्थ॒पत॑ये वृ॒क्षाणां॒ पत॑ये॒
नमो॒ नमो॑ भुव॒न्तये॑ वारिवस्कृ॒ताया-
ऽषधी॑नाम्पत॑ये॒ नमो॒ नमो॑ म॒न्त्रिणे॑ वाणि॒-
जाय॒ कक्षा॑णाम्पत॑येनमो॒ नम॑ उच्चैर्घो॒-
षायाक्र॒न्दय॑ते पत्ती॒नाम्पत॑ये॒ नम॑ः ॥ १९ ॥

रोहिताय लोहि(३)तवर्णायारुणाय नमः । स्थपतये गृहादिनिर्माण- कर्त्रे । वृक्षाणां पतये नमो नमो भुवन्तये भुवं पृथ्वीं तनोति विस्तारयति इति भुवन्तिः तस्मै । वारिवस्कृतायौषधीनां पतये नमो वारिवोऽनुकूल-

(१) रस्य लश्छान्दसोऽत्र शप्रत्ययो मत्वर्थीयः । 'पिङ्गलो बभ्रुः' इति कोशः ॥ (२) अत्र गुणा- भावादिश्छान्दसः । (३) "रोहितो लोहितो रक्तः" इत्यमरः ॥

नम् अर्चनं धनंवा तत्कृतं येन सः वरिवस्कृतः तस्मै । दीर्घत्वं छान्दसम् । ओषधीनां धान्यानां पतये नमः । नमो मन्त्रिणे वाणिजाय वणिगेव वाणिजस्तस्मै नमः । कक्षाणां पतये नमः । कक्षो नदीकच्छः (१) पर्वतकक्षो वा तेषां पतये पालकाय । उच्चैर्घोषो ध्वनिर्यस्य तस्मै । उच्चैर्घोषाय नमः । आक्रन्दयते आक्रन्दयतीत्याक्रन्दयन्तस्मै । युद्धे महा (२) शब्दाय । पत्तीनां सेनाविशेषाणां(३) पतये पालकाय नमो, हस्त्यश्वरथपदातिभिः पत्तिरित्युब्वटः ॥ १६ ॥

नमः कृत्स्नायतया धावते सत्त्वनाम्पतये
नमो नमः सहमानाय निव्याधिनऽ
आव्याधिनीनां पतये नमो नमो निषङ्गिणे
ककुभाय स्तेनानां पतये नमो नमो निचे-
रवे परिचरायारण्यानां पतये नमः ॥ २० ॥

कृत्स्नायतया कृत्स्नश्चासावायतश्चेति कृत्स्नायतस्तस्य भावः कृत्स्नायतता तया । अर्थाद्धनुषः । तकारलोपश्छान्दसः । आकर्णपूरितधनुष्ट्वेन हेतुभूतेन धावते युद्धे शीघ्रङ्गच्छते रुद्राय नमः । सत्त्वनां सत्त्वानां पतये नमः । आकारलोपश्छान्दसः(४) । नमः सहमानाय अभिभवनशीलाय (५) । निव्याधिने नितरां विध्यति हन्ति शत्रूनिति निव्याधी तस्मै० । आव्याधिनीनां पतये नमः । आविध्यन्तीत्याव्याधिन्यस्तासां पतये नमो० । निषङ्गिणे खड्गनिधान-(तूणीर)-युक्ताय । ककुभाय महते । ककुभ इति तु महन्नामसु(६) पठितम् । स्तेनानां पतये नम स्तेनश्चौरः, नितरां चरतीति निचेरुः तस्मै, परितः चरतीति परिचरः सर्वतो गन्ता, आरण्यानाम् अरण्ये भवानां मृगाणां पतये नमः ॥ २० ॥

नमो वञ्चते परिवञ्चते स्तायूनां पतये
नमो नमो निषङ्गिणऽइषुधिमते तस्कराणां
पतये नमो नमः सृकायिभ्यो जिघांसद्भ्यो
मुष्णताम्पतये नमो नमोऽसिमद्भ्यो

(१) वनगता गुल्मवीरुधादयः कक्षाइति महीधरः ॥ (२) रिपुरोदकाय ॥ (३) "एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका" इत्यमरः ॥ (४) वस्तुतस्तु सत्वन्शब्दो नान्तोऽप्यस्ति । अथो ये अस्य सत्वान" इत्यत्र तथादर्शनात् ॥ (५) "षह मर्षणे" (भ्वा० आ०) लटश्शानच् । "आने मुक्" मर्षणं क्षमाऽभिभवश्च ॥ (६) यद्यप्ययंदिङ्नामसु (निघं० १।६) पठ्यते । तथापि दिशो महत्वलक्षणेन महत्सूपचारोऽस्यात्र बोध्यः ॥

नक्तञ्चरद्भ्यो विकृन्तानाम्पतये नमः ॥ २१ ॥

वञ्चत इति। वञ्चतिर्गत्यर्थः। ततो लटः शता। वञ्चते गमनशीलाय नमः। परिवञ्चते सर्वतोगमनशीलाय(१)। वञ्चते वञ्चकाय प्रकाशतस्करायेति केचित्। नम इति सर्वत्र योज्यम्। स्तायूनां पतये नमः। स्तायुश्चौरविशेषः। नमो निषङ्गिणे खड्गिने। इषुधिमते इषुधिस्तूणः तत्सहिताय। तस्कराणां पतये नमः। तस्करश्चौरविशेषः। नमः सृकायिभ्यः। सृक इति वज्रनामसु पठितः, ( निघं० २ २० ) सृकेव गृहीतेन एतुं शीलमेषामिति सृकायिनः तेभ्यः। जिघांसद्भ्यः हन्तुमिच्छद्भ्यः। मुष्णतां पतये नमः। मुष्णतां चौराणां, मुष्णन्तश्चौराः। "मुषस्तेये"। असिमद्भ्यः असियुक्तेभ्यः। नक्तं रात्रौ चरद्भ्यः रात्रौ गच्छद्भ्यः। विकृन्तानां विकर्त्तनशीलानां पतये नमः ॥ २१ ॥

नमऽउष्णीषिणे गिरिचराय कुलुञ्चानां पतये

नमो नमऽइषुमद्भ्यो धन्वायिभ्यश्च वो नमो

नमऽआतन्वानेभ्यः प्रतिदधानेभ्यश्च वो

नमो नमऽआयच्छद्भ्योऽस्यद्भ्यश्च वो नमः ॥ २२ ॥

उष्णीषमस्यास्तीत्युष्णीषी। उष्णीषं शिरोवेष्टनम्। गिरौ चरतीति गिरिचरस्तस्मै पर्वतसञ्चारिणे नमः। कुलुञ्चानाम्पतये नमः। कुत्सितं कुलानि वा लुञ्चन्ति हरन्तीति कुलुञ्चाः "लुञ्च अपनयने" (भ्वा० प०) कर्मण्यण् (पा० ३।२।१) कुं पृथ्वीं लुञ्चन्तीति केचित्। नम इषुमद्भ्यः। इषवो बाणा विद्यमाना येषान्ते इषुमन्तः तेभ्यः वः युष्मभ्यं नमः। धन्वायिभ्यः धनुषा एतुं गन्तुं शीलमेषामिति धन्वायिनः। "वा संज्ञायामि" ति धनुषो वा अनङ्(२)। चकारः समुच्चयार्थः(३)। नमऽआतन्वानेभ्यः उत्क्षिप्य काण्डानि धनूंषि आततानि कुर्वद्भ्यः। प्रतिदधानेभ्यश्च प्रतिदधते सन्दधते बाणान्धनुषीति प्रतिदधानाः सन्दधानास्तेभ्यः। आयच्छन्त्याकर्षन्ति धनूंषि ते आयच्छन्तस्तेभ्य आयच्छद्भ्यः। अस्यन्ति बाणानित्यस्यन्तस्तेभ्योऽस्यद्भ्यो नमः काण्डानि क्षिपद्भ्यः। "असुक्षेपणे" (दि० प०) शतरि श्यन् ॥ २२ ॥

---

(१) "वञ्चुगतौ" (भ्वा० प०) लटः शतरि रूपम्। पक्षे "वञ्चुप्रलम्भने" (चु० आ०) "अनित्यण्यन्ताश्चुरादय" इति णिजभावे लटः शता व्यत्ययेन बोध्यम्। (२) तदेतदस्य प्रामादिकम्। समास एव तद्विधानात्। किन्तु "धविगतौ" (भ्वा० प०) इत्यस्मात् (उ० १,१५६) कनिनि धन्वन् शब्दोऽपि अनुवचनः। धन्वना धनुषा सह यन्ति गच्छन्तीति धन्वायिनः। (३) मन्त्रभेदज्ञापनार्थः। पदमध्येऽपि इति महीधरः।

नमो विसृजद्भ्यो विध्यद्भ्यश्च वो नमो
नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो नमः
शयानेभ्यऽआसीनेभ्यश्च वो नमो नमस्तिष्ठ
द्भ्यो धावद्भ्यश्च वो नमः ॥ २३ ॥

(बाणान्) विसृजद्भ्यः काण्डानि योगं(१) प्रति क्षिपद्भ्यः । विध्यद्भ्यः शत्रूंस्ताडयद्भ्यो नमः । स्वपद्भ्यः स्वापं कुर्वद्भ्यः स्वप्नावस्थामनुभवद्भ्यः । जाग्रद्भ्यश्च वो नमः । शयानेभ्यः शेरते इति शयानास्तेभ्यः सुषुप्त्यवस्थावद्भ्यः । आसीनेभ्य श्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमः । एतानि पदानि निगदव्याख्यातानि । अतः परमद्वैतप्रतिपादनाय स्तुतिः ॥ २३ ॥

नमः सभाभ्यः सभापतिभ्यश्च वो नमो
नमोऽश्वेभ्योऽश्वपतिभ्यश्च वो नमो नमऽआव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो नम
ऽउगणाभ्यस्तृंहतीभ्यश्च वो नमः ॥ २४ ॥

वः युष्मभ्यं नमः । केभ्यः ? सभाभ्यः । सभापतिभ्यश्च सभास्वामिभ्यो नमः । अश्वेभ्यः अश्वपतिभ्यश्च । आव्याधिनीभ्यः आविध्यन्तीत्याव्याधिन्यः सेनास्ताभ्यः । विविध्यन्तीभ्यः । विशेषेण विध्यन्तीति विविध्यन्त्यस्ताभ्यः । उगणाभ्यः उद्गतगणाभ्यः(२) सेनाभ्यः । एवमुदुपसर्गस्यान्त्यलोपश्छान्दसः । (३)तृंहतीभ्यश्च वो नमः । तृंहतिर्हिंसाकर्मा, हिंसन्तीभ्यः सेना(४)भ्यः । तृंहणं वज्राभिप्रहरणं, पोथनं मुसलप्रहारः शस्त्रघातः खड्गादिप्रहार इति हिंसायामेव भेदाः ॥ २४ ॥

नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो
व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो
गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो
विरूपेभ्यो विश्वरूपेभ्यश्च वो नमः ॥ २५ ॥

गणः समूहः तत्स्वरूपेभ्यो नमः । गणपतिभ्यश्च वो नमः । नमो व्रातेभ्यः (व्रातं समूहमर्हन्तीति) व्राताः गणविशेषाः, एवं व्रातपतिभ्यश्च

(१) योगशब्देनात्र शत्रुसैन्यव्यूहोऽनेनाभिसंहितः । "योगः सन्नहनोपायध्यानसंगतियुक्तिषु" इत्यमरात् ॥ (२) उत्कृष्टा गणा भृत्याः सहाया यासां ता उगणाः । आव्याधा मातरस्ताभ्य इति महीधरः । (३) पृषोदरादित्वात् (पा० ६।३।१०९) । (४) "तृहि हिंसायाम्" (तु० प०) हन्तुं समर्थाः ।

वो नमः । नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमः । गृत्सो मेधावी (१) । नमो विरूपेभ्यो(२) विश्वरूपेभ्यः । विश्वरूपाः (३)सर्वरूपास्तेभ्यः । "स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः" इत्यमरेणोक्तेः, व्रातः समूहः ॥२५॥

नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो
रथिभ्योऽअरथेभ्यश्च वो नमो नमः क्षतृभ्यः
सङ्ग्रहीतृभ्यश्च वो नमो नमो महद्भ्योऽ
अर्भकेभ्यश्च वो नमः ॥ २६ ॥

सेना चमूस्तत्स्वरूपेभ्यो वो युष्मभ्यं नमः । सेनान्नयन्तीति सेनान्यः तेभ्यः । नमो रथिभ्यो रथा येषां ते रथिनः तेभ्यः । अरथेभ्यश्च अरथा रथवर्जिता योद्धारः तेभ्यः । क्षतृभ्यः रथानामधिष्ठातारः क्षत्तारः(४) । तेभ्यः । संगृहीतृभ्यो नमः । संगृहीतारः सारथयः । नमो महद्भ्यो महान्तो जातिविद्यादिभिरुत्कृष्टाः । अर्भकेभ्यश्च वो नमः । अर्भका अल्पकाः प्रमाणादिभिः इत्युव्वटः ॥ २६ ॥

नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो नमः
कुलालेभ्यः कर्म्मारेभ्यश्च वो नमो नमो
निषादेभ्यः पुञ्जिष्ठेभ्यश्च वो नमो नमः
श्वनिभ्यो मृगयुभ्यश्च वो नमः ॥ २७ ॥

तक्षाणो रथशिल्पजीविनः तेभ्यो नमः । रथङ्कुर्वन्तीति रथकारास्तक्षणो विशेषाः । नमः कुलालेभ्यः कुलालाः कुम्भकाराः । कर्म्मारेभ्यः कर्मारा लोहकाराः । नमो निषादेभ्यः निषादा मांसभक्षका धीवराः । पुञ्जिष्ठा(५) जात्यन्तरसङ्कीर्णाः सङ्करादयः, पक्षिपुञ्जघातकाः पुल्कसादयो वा तेभ्यः । शुनो नयन्तीति श्वन्यः तेभ्यः । नयतेः स्वत्वं छान्दसं श्वगणिन इति यावत् । मृगयुभ्यश्च वो नमः । मृगान् कामयन्त इति मृगयवः (६) व्याधाः । "इदंयुरिदंकामयमान" इति यास्कः ( निरु० ६।३१ ) "सुप आत्मनः क्यजि" (पा० ३।१।८) ति क्यच् । 'क्यचिचे" (पा०७।४।

---

दुर्द्धरादय इति महीधरः । (१) गृध्यन्ति वाञ्छन्तीति गृत्सा विषयलम्पटा इति महीधरः । (२) निकृष्टरूपेभ्यो नानारूपेभ्यो वेत्युव्वटः । विकृतं रूपं येषान्ते विरूपा नग्नमुण्डजटिलादयस्तेभ्य इति महीधरः । (३) विश्वं सर्वं नानाविधं रूपं येषान्ते विश्वरूपास्तुरङ्गवदनहयग्रीवादयस्तेभ्यो नमः इति महीधरः ॥ (४) क्षियन्ति निवसन्ति रथेष्विति क्षत्तारः । यद्वा "क्षिप प्रेरणे" । ( तु० प० ) क्षिपन्ति प्रेरयन्ति सारथीनिति "नप्तृनेष्टृ" त्यादिना ( उ० ) निपातितः ॥ (५) "सुपि स्थ" (पा० ३।२।४ ) इति स्थः कप्रत्यये कृते "अम्बाम्बगोभूमिसव्यापद्वि"ति सूत्रेण स्थः सस्य षत्वे कृते पुञ्जिष्ठ इति भवति ॥ (६) "व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः" इत्य-

३३) ति प्राप्तस्येत्वस्य "न छन्दस्यपुत्रस्ये" (पा० ७।४।२१) ति निषेधः। तेभ्यो मृगयुभ्यो वो नमः(१) ॥ २७ ॥

नमः श्वभ्यः श्वपतिभ्यश्च वो नमो नमो
भवाय च रुद्राय च नमः शर्वाय च पशुपतये
च नमो नीलग्रीवाय च शितिकण्ठाय च ॥२८॥

नमः श्वभ्यः श्वपतिभ्यश्च वः युष्मभ्यं नमः अस्तु। उभयतो नमस्काराः समाप्ताः। इत उत्तरं रुद्रनामानि नमो भवाय च रुद्राय च नमः शर्वाय च पशुपतये च नमो नीलग्रीवाय च। नीला श्यामा ग्रीवा यस्य स तस्मै। शितिकण्ठाय(२) च। शितिशब्दः श्वेतपर्य्याय इत्युव्वटः। 'शिती धवलमेचकौ' इति विश्वकोशात् ॥ २८ ॥

नमः कपर्दिने च व्युप्तकेशाय च नमः
सहस्राक्षाय च शतधन्वने च नमो गिरिश-
याय च शिपिविष्टाय च नमो मीढुष्टमाय
चेषुमते च ॥ २९ ॥

कपर्दिने जटाजूटधारिणे (३) नमः। व्युप्तकेशाय च। विशेषेण उप्ता मुण्डिताः केशा यस्य स व्युप्तकेशस्तस्मै। सहस्राक्षाय-बह्वक्षाय, शतधन्वने बहुधन्वने नमः। गिरौ कैलाशे शेते गिरिशय(४) स्तस्मै। शिपिविष्टाय विष्णुरूपाय, "विष्णुः शिपिविष्ट" इति श्रुतेः। यद्वा शिपिषु पशुषु विष्टः प्रविष्टः "पशवो वै शिपिरि"तिश्रुतेः। सर्वान्तर्यामितया स्थित इत्यर्थः। यद्वा 'शिपिर्यज्ञमादित्यो वा रश्मिर्वा तैराविष्टो भवती"ति निरु (५।८) क्तकारयास्कोक्तेः। यद्वा शिपिविष्टः उपरिनिर्वेष्टितः। खलतिरभिधेयः। प्रजननवद्वेष्टनरहितः। यद्वा उदितमात्र आदित्यः स्तूयते। शिपिशब्देन च बालरश्मय उच्यन्त इत्युव्वटः। मीढुष्टमाय-सेक्तृतमाय यूने। परिणामरहितायेत्यर्थः। इषुमते बाणयुक्ताय ॥ २९ ॥

नमो ह्रस्वाय च वामनाय च नमो बृहते
च वर्षीयसे च नमो वृद्धाय च सवृधे च
नमोऽग्र्याय च प्रथमाय च ॥ ३० ॥

---

मरः॥ (१) नम इषुमद्भ्यो धन्वायिभ्यः (२२) इत्यारभ्य ये वः शब्दास्ते पूजावाचकाः न युष्मदादेशा इति उव्वट-महीधरौ। (२) "कपर्दोऽस्य जटाजूटः" इत्यमरः। अस्य शिवस्य। (३) शितिः श्वेतः कण्ठो नीलातिरिक्तभागो यस्य स शितिकण्ठस्तस्मै नमः॥ (४) "अधि-

ह्रस्वो लघुप्रमाणकः । तस्मै वामनाय सङ्कुचितावयवाय, बृहते महते । वर्षीयसे वृद्धतराय । "प्रियस्थिरे" ( पा० ६।४।१५७ ) इत्यादिना वृद्धशब्दादतिशायिने ईयसुनि तस्य वर्षादेशः । वृद्धाय सवृधे तेन समानवयसे । अग्रे भवोऽग्र्यः । "अग्राद्यत्" ( पा० ४।४।११६ ) इत्यनेन यत्प्रत्ययः, प्रथमो मुख्यः तस्मै ॥ ३० ॥

नमऽआशवे चाजिराय च नमः शीघ्र्याय च शीभ्याय च नमऽऊर्म्याय चावस्वन्याय च नमो नादेयाय च द्वीप्याय च ॥ ३१ ॥

आशवे च अजिराय च । द्वे अपि शीघ्रनामनी । अश्नुत इति आशुः । अश्नुते व्यापकः, अजति गच्छतीत्यजिरः । अज गतिक्षेपणयोः ( भ्वा० प० ) शीघ्रशीभ्यौ क्षिप्रनामनी "शीभृ कत्थने" ( भ्वा० आ० ) शीभते कत्थते इति शीभ्र आत्मश्लाघी पचाद्यच् । ततः 'तत्र भव' इत्यर्थे "भवे छन्दसि" (पा० ४।४। ११०) इति छान्दसो यत्प्रत्ययः । अधिष्ठातृदेवतावचनः । अग्रेऽप्येवमेव बोद्धव्यम् । ऊर्मिर्जलकल्लोलः । अवाचीनं गच्छदुदकस्य स्वनो ध्वनिरवस्वनस्तत्रभवाय । नद्यां भवो नादेयः, "नद्यादिभ्योढक्" इति ढकञोढस्येयः ( पा० ७।१।२ ) द्वीपे भवो द्वीप्यः । द्वीपो नद्या मध्ये निरुदकप्रदेशः ॥ ३१ ॥

नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो जघन्याय च बुध्न्याय च ॥ ३२ ॥

ज्येष्ठायेत्यादिवयोऽवस्थाविशेषाभिप्राया नमस्काराः । पूर्वोजातः पूर्वजः । अपरोजातः अपरजः । मध्ये भवो मध्यमः । अपगतो गल्भो जननेन्द्रियं यस्य सोऽपगतगल्भः । "गल्भ धार्ष्ट्ये" (भ्वा० आ०) गल्भनं गल्भ धार्ष्ट्यम् । अपगतगल्भः पक्वगर्भा(१)न्तरितो वा । अव्यवहितः कनिष्ठः । जघनं कटिपश्चाद्भागः, बुध्नं वृक्षादिमूलभागः (२) तत्र भवः ॥३२॥

नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नमः श्लोक्याय चावसान्याय च नम उर्वर्याय च खल्याय च ॥ ३३ ॥

---

करणे शेतेः" [ पा० ३।२।१५ ] इति अच् प्रत्यये गुणः । ( १ ) अत्रार्थे "अपगतगर्भोऽपगल्भ" इत्युव्वटव्याख्यानं मानम् । ( २ ) "मूलं बुध्नोऽङ्घ्रिनामक" इत्यमरः ।

सोभइति गन्धर्वनगरमुक्तम् यद्वा उभाभ्यां पुण्यपापाभ्यां सहितः सोभो मनुष्यलोकः। "पुण्येन पुण्यलोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकमि"त्याथर्वणश्रुतेः। अभिचारकर्मप्रतिसरः। विवाहाङ्गोचितं हस्तसूत्रं वा, "आहुः प्रतिसरं हस्तसूत्रे माल्यस्य मण्डने" इतिविश्वः। यामे भवो याम्यः। यामः प्रहरः (१)। क्षेमं कुशलं, श्लोका वैदिकमन्त्रा यशो वा, तत्र भवाय। अवसानं समाप्तिस्तत्र भवाय। उर्वरायां सर्वसस्याढ्यायां (धान्यरूपेण) भव उर्वर्य्यः "उर्वरा सर्वसस्याढ्या" इत्यमरः। उर्वरः सीतयोरन्तरम् इत्युव्वटः। सीता लाङ्गलपद्धतिः, तयोरन्तरं, खलो धान्यखलः, "खलः कल्के भुवि ध्वनौ क्रूरे कर्णे जपेऽधमे" इतिविश्वकोशात्॥

नमो॒ वन्न्या॑य च॒ कक्ष्या॑य च॒ नमः॑ श्र॒वाय॑ च

प्रतिश्र॒वाय॑ च॒ नम॑ऽआ॒शुषे॑णाय चा॒शुर॑थाय

च॒ नमः॒ शूरा॑य चावभे॒दिने॑ च ॥ ३४ ॥

वनं वृक्षसमूहः। उदकं च "वनं प्रस्रवणे गेहे प्रवाहेऽम्भसि कानने," इति हैमः। कक्षः, नदीकक्षः पर्वतकक्षो वा "कक्षो वीरुधि दोर्मूले कच्छे शुष्कतृणे वने" इति हैमः। श्रवः शब्दः। प्रतिश्रवः, प्रतिशब्दः। आशुषेणः(२)शीघ्रसेनः, आशुरथः शीघ्ररथः। शूरः शरभेदी। अवभेदी—अर्वाचीनं भेत्तुं शीलमस्येति अवभेदी ॥ ३५ ॥

नमो॑ बि॒ल्मिने॑ च कव॒चिने॑ च॒ नमो॑ व॒र्म्मिणे॑ च

वरू॒थिने॑ च॒ नमः॑ श्रु॒ताय॑ च श्रुतसे॒नाय॑ च॒ नमो॑

दुन्दु॒भ्या॑य चाहन॒न्न्याय च ॥ ३५ ॥

बिल्ममस्यास्तीति बिल्मी। बिल्मं शिरस्त्राणं, बिल्मं भासन(३) मुत्तमाङ्गमुच्यते इत्युव्वटः। कवचं पट्टस्यूतं कार्पासगर्भं, वर्म लोहकवचं, वरूथं हस्तिन उपरि गृहाकारः प्रकोष्ठकस्तद्वते(४) नमः। श्रुताय—सर्वलोकविदिताय, श्रुतसेनाय श्रुता प्रसिद्धा सेना-चमूर्यस्य तस्मै, दुन्दुभौ भेर्यां भवः दुन्दुभ्यः, आहनने वाद्यताडने भवः आहनन्यः तस्मै ॥ ३५ ॥

नमो॑ धृ॒ष्णवे॑ च प्रमृ॒शाय॑ च॒ नमो॑ निष॒ङ्गिणे॑

---

(१) यमनं यामः। तत्र भवो याम्यः। यापनां नरकादिदाता तस्मै। (२) "पूर्वपदात्" (पा०८।३।१०६) इति षत्वम्॥ (३) तथा च निरुक्तं "बिल्मं भिल्मम्भासनमिति वे" (२।२०।२) ति। भिल्मं भेदनं भासनं प्रकाशनं, प्रकाशते हि मनुजादिरुत्तमाङ्गेन (शिरसा) इति। (४) वस्तुतस्तु "वरूथं च तनुत्राणे रथगोपनवेश्मनोः॥" इत्यजयात्। परप्रहरणाभिघातवारणार्थं रथोपरि लौहादिनिर्म्मितं यद्गृहाकारं भवति तद्वरूथमुच्यते। यद्यप्यमरेण "रथगुप्तिर्वरूथो ने"ति पुल्लिङ्गतया निर्दिष्टस्तथापि मेदिन्यां "वरूथो रथगुप्तौ स्याद्वरूथं चर्मवेश्मनोरि—"त्येवं व्यवातिष्ठिपत्।

चेषुधिमते॑ च॒ नम॑स्ती॒क्ष्णेष॑वे चायु॒धिने॑ च॒

नम॑ः स्वायु॒धाय॑ च सु॒धन्व॑ने च ॥ ३६ ॥

धृष्णुः प्रगल्भः, सर्वं प्रमृशतीति प्रमृशः पण्डितः। नमो निषङ्गिणे, इषुधिमते च, निषङ्गः खड्गः सोऽस्यास्तीति, इषवो धीयन्तेऽत्रेति इषुधिः तद्वते नमः। तीक्ष्णा इषवो यस्य स तीक्ष्णेषुः। आयुधमस्यास्तीत्यायुधी तस्मै नमः। स्वायुधाय शोभनायुधाय। सुधन्वने शोभनधनुषे नमः ॥ ३६ ॥

नम॒ः स्रुत्या॑य च॒ पथ्या॑य च॒ नम॒ः काट्या॑य

च॒ नीप्या॑य च॒ नम॒ः कुल्या॑य च सर॒स्या॑य

च॒ नमो॑ नादे॒याय॑ च वैश॒न्ताय॑ च ॥ ३७ ॥

नद्या एकदेशवाहिनी स्रुतिः। तत्र भवः स्रुत्यः, पथि भवः पथ्यः, काटे भवः काट्यः। कुत्सितं अटतीति काटः विषममार्गः, कूप इति उव्वटः। "काटः कुल्याप्रदेशो वे" ति महीधरः। नीचैर्गच्छन्त्यापो यत्र स नीपः निम्नभूमिः। "ऋक्पूरब्धूः पथामि" ( पा० ५।४।७४ ) ति अप्रत्ययः। "द्व्यन्तरुपसर्गेभ्योऽपईत्" (पा० ६।३।९७) ति, अपशब्दस्येकारः, "कुल्याल्पा कृत्रिमा सरित्," इत्यमरः। कुलेषु देहेषु वान्तर्यामिरूपेण भवः। "कुलं देहेऽन्वये गणे" इति रभसः। कुल्यायां भवः कुल्यः। सरसि भवः सरस्यः, नद्यां भवो नादेयः, वेशन्तोऽल्पसरः तत्र भवः वैशन्तः(१)॥३७॥

नम॒ः कूप्या॑य चाव॒ट्या॑य च॒ नमो॒ वीध्र्या॑य

चात॒प्या॑य च॒ नमो॒ मेघ्या॑य च विद्यु॒त्या॑य

च॒ नमो॒ वर्ष्या॑य चाव॒र्ष्याय॑ च ॥ ३८ ॥

कूपे भवः कूप्यः। अवटे गर्ते भवः अवट्यः। विशेषेण इन्धति दीपयतीति वीध्रः, "इन्धी दीप्तौ" तत्र भवो वीध्र्यः। आतपे भवः आतप्यः। मेघे भवो मेघ्यः। विद्युति भवः विद्युत्यः। वर्षे भवो वर्ष्यः। अवर्षे भवोऽवर्ष्यः ॥ ३८ ॥

नमो॒ वात्या॑य च॒ रेष्म्या॑य च॒ नमो॑ वास्त॒व्या॑य च वास्तु॒पाय॑ च॒ नम॒ः सोमा॑य च

रु॒द्राय॑ च॒ नम॑स्ता॒म्राय॑ चारु॒णाय॑ च ॥ ३९ ॥

वाते भवो वात्यः। रेष्मे भवो रेष्म्यः(२)। रेष्मः हिंसा। रिषनि-

(१) "वेशन्तः पल्वलं चाल्पसरः" इत्यमरः ॥ (२) प्रलयेऽपि विद्यमानायेत्यर्थः।

हिंसायाम् । ( दि० प० ) "अन्येभ्योऽपि दृश्यन्त" ( पा० ३।२।७५ ) इति मनिन् । वास्तु गृहं, तत्र भवो वास्तव्यः । वास्तुं पातीति वास्तुपः, सोमाय च रुद्राय चेति नामतो नमस्कारः । ताम्राय चारुणाय चेति वर्णतो नमस्कारः ॥ ३९ ॥

नमः॑ शङ्गवे॑ च पशुपत॑ये च नमः॑ऽउग्राय॑
च भीमाय॑ च नमो॑ऽग्रेवुधाय॑ दूरेवुधाय॑
च नमो॑ हन्त्रे च हनी॑यसे च नमो॑ वृक्षेभ्यो
हरि॑केशेभ्यो नमः॑स्ताराय॑ ॥ ४० ॥

शं सुखं गमयति इति शङ्गुः । (१)पशूनां पतिः पशुपतिः । उद्गूर्ण उग्रः । भीमो भीषणः । अग्रे स्थितो हन्तीत्यग्रेवधः, दूरे स्थितो हन्तीति दूरेवधः, हन्त्रे हननकर्त्रे, हनीयसे (२)अतिशयेन हननकर्त्रे । हरया हरितवर्णानि केशा इव पत्राणि येषां तेभ्यो वृक्षेभ्यो नमः । तारयति उत्तारयति संसारादिति तारस्तस्मै ॥ ४० ॥

नमः॑ शम्भवाय॑ च मयोभवाय॑ च नमः॑ शङ्कराय॑ च
मयस्क्कराय॑ च नमः॑ शिवाय॑ च शिवत॑राय च ॥ ४१ ॥

शं भवत्यस्मादिति शम्भवः सुखभवः, "शम उपशमे" धातुः । यद्वा शं चासौ भवश्च शम्भुः । शमानन्दरूपः भवः कालदेशानवच्छिन्नः । मय इति सुखरूपः । भवः भवनशक्तिः । आनन्दविज्ञानघनरूपः । शङ्करोतीति शङ्करः । मयः करोतीति मयस्करः, मयः सुखनाम । शिवाय शान्ताय निर्विकाराय । शिवतराय निरतिशयसर्वबीजाय ॥ ४१ ॥

नमः॑ पार्य्या॑य चावार्य्या॑य च नमः॑ प्रतर॑णाय
चोत्तर॑णाय च नमस्तीर्त्थ्या॑य च कूल्या॑य
च नमः॑ शष्प्या॑य च फेन्या॑य च ॥ ४२ ॥

पारे भवः पार्य्यः । अवारे भवः अवार्यः । 'पारावारे परार्वाची तीरे पात्रं तदन्तरमि"ति कोषः । प्रतरति येन तत्प्रतरणं नौकादि लघुद्रव्यं, किं च उत्तरति अनेनेत्युत्तरणं तीर इत्युच्यते, तीर्थे भवः तीर्थ्यः, कूले भवः कूल्यः, शष्पे शरतृणे भवः शष्प्यः, फेने भवः फेन्यः, तस्मै नमः ॥ ४२ ॥

---

( १ ) शं सुखरूपा गावोवाचो वेदरूपा यस्येति वा । शं सुखं गवां करोतीति शङ्गुरित्युव्वटः ।
( २ ) अतिशयेन हन्ता हनीयान् तस्मै । अतिशायने हन्तृशब्दात् ( पा० ५।३।५० ) ईयसुनि ।

नमः॑ सिक॒त्या॑य च प्रवा॒ह्या॑य च॒ नमः॑ किᳩशि॒लाय॑ च क्षय॒णाय॑ च॒ नमः॑ कप॒र्दिने॑ च पुल॒स्तये॑ च॒ नम॑ऽइरि॒ण्या॑य च प्रप॒थ्या॑य च ॥ ४३ ॥

सिकतासु भवः सिकत्यः । प्रवाहे भवः प्रवाह्यः । किमेतदुदकमुत हिमीभूतशिलेतियत्र वितर्कः स किंशिलः । अथ वा किं शिला(१)उत कर्करीति । क्षियन्ति वसन्त्यस्मिन्नप इति क्षयणः स्थिरजलप्रदेशस्तस्मै नमः । कपर्दो जटाजूटोऽस्यास्तीति कपर्दी । पुरस्तिष्ठति शुभाशुभदिदृक्षया इति पुलस्तिः । रलयोरैक्यत्वमत्र, थस्य तत्वं रस्य लत्वं छान्दसम् । यद्वा पुर्षु शरीरेषु अस्तिः सत्ता यस्य स पुलस्तिः सर्वान्तर्यामी तस्मै । इरिण्याय च प्रपथ्याय च । इरिणे भव इरिण्यः । इरिणो निरुदकप्रदेशः(२) । प्रकृष्टः पन्थाः प्रपथः । प्रपथे भवः प्रपथ्यः ॥ ४३ ॥

नमो॒ व्रज्या॑य च॒ गोष्ठ्या॑य च॒ नम॒स्तल्प्या॑य च गेह्या॑य च नमो॑ हृद॒य्या॑य च निवे॒ष्प्या॑य च॒ नम॒ᳪ काट्या॑य च गह्वरे॒ष्ठाय॑ च ॥ ४४ ॥

व्रजे गोसमूहे भवो व्रज्यः । गावस्तिष्ठन्त्यत्रेति गोष्ठः । तत्र भवो गोष्ठ्यः । तल्पे भवः तल्प्यस्तल्पः शयनीयं, गेहे भवो गेह्यः, हृदये भवो हृदय्यः, निवेष्पे भवो निवेष्प्यः । निवेष्पः आवर्तः, नीहारजलं वा । काटे भवः काट्यः । काटः कूपः । गह्वरे तिष्ठतीति गह्वरेष्ठः । गह्वरं महदुदकम् ॥ ४४ ॥

नम॒ᳪ शुष्क्या॑य च हरि॒त्या॑य च॒ नमः॑ पाᳪस॒व्या॑य च रज॒स्या॑य च॒ नमो॒ लोप्या॑य चोल॒प्या॑य च॒ नम॒ऽऊर्व्या॑य च॒ सूर्व्या॑य च ॥ ४५ ॥

शुष्के भवः शुष्क्यः । हरिते भवः हरित्यः । हरितमार्द्रम्, पांसुषु भवः पांसव्यः, रजसि भवः रजस्यः, लोपे भवः लोप्यः, उलपे भव उलप्यः । उलपो (३)बल्वजादितृणविशेषस्तत्र भवः उलप्यः तस्मै । "उलपस्तु गुल्मिनी तृणभेदयोः" ऊर्वो वाडवाग्निस्तत्र भव ऊर्व्यः स इव शोभनः सूर्वस्तत्र भवः सूर्व्यः कल्पानलः तस्मै नमः ॥ ४५ ॥

---

"तुरिष्ठेमेयस्सु" ( पा० ६।४।१५४ ) इति तृचो लोपः। प्रलये सर्वहन्त्रे इत्यर्थः। ( १ ) किं शब्दः कुत्सितवचनः। किंकुत्सिताः शिलाः शर्करारूपाः पाषाणा यत्र प्रदेशे स किंशिलः। तद्रूपाय। ( २ ) "इरिणं शून्यमूषरम्" इति कोषः। ( ३ ) या प्रतानिनी शाखादिभिर्विस्तृता लता सा उलपः। "लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपी"त्यमरः॥

नमः॑ पर्णाय॑ च पर्णशदाय॑ च नमः॑ऽउद्गुरमा॑-
णाय चाभिघ्नते च नमः॑ऽआखिदते च॑
प्रखिदते च नमः॑ऽइषुकृद्भ्यो॑ धनुष्कृद्भ्य॑श्च
वो नमो नमो॑ वः॑ किरिकेभ्यो॑ देवाना॑ᳬ
हृद॑येभ्यो नमो॑ विचिन्वत्केभ्यो नमो॑
विक्षिणत्केभ्यो नमः॑ऽआनिर्हतेभ्यः॑ ॥ ४६ ॥

पर्णाय पर्णस्वरूपाय। पर्णशदाय पर्णशद इति पतितपर्णावस्था-नम्(१) उद्गुरमाणः उद्यमनशीलः, (२) अभिघ्नतेऽभिहननं कुर्वते "स्वाभक्तानामि"ति शेषः। "खिद दैन्ये" (रु० ग०) आङ्-पूर्वः। लटः शता पदव्यत्ययो विकरणव्यत्ययश्च। आखिदते-दैन्यभावं कुर्वते इत्युव्वटः। प्रखिदते अभक्तानां प्रकर्षेण दीनभावं कुर्वते। ये इषवो वाणान् कुर्वन्ति ते इषुकृतः तेभ्यो नमः। ये यूयं धनुष्कृतस्तेभ्यो नमः। युष्मदादेशयोगात्प्रत्यक्षा एते रुद्राः। तिस्रोऽशीतयो रुद्राः समाप्ताः॥ इदानीं रुद्राणां हृदयभूतानामग्निवायुसूर्य्याणां सम्बन्धीनि यजूंषि उच्यन्ते- वो युष्मभ्यं नमः। वः केभ्यः, किरिकेभ्यः "एते हीदᳬ सर्वं कुर्वन्ती"- ति श्रुतेः। कुर्वन्तीदं जगद्वृष्ट्यादिद्वारेणेति किरिकाः वाय्वग्निसूर्य्याः। किम्भूतेभ्यः? देवानां रुद्राणामग्निवायुसूर्याणां हृदयभूतेभ्य इत्यर्थः। विचिन्वन्ति पृथक्कुर्वन्ति धर्मकारिणं पापकारिणं चेति, विचिन्वत्काः। विविधं क्षिण्वन्ति हिंसन्तीति विक्षिणत्कास्तेभ्यः। आनिर्हतेभ्यः-आनि- र्गच्छद्भ्यः। हन्तिर्गत्यर्थः, एते अग्निवायुसूर्याः सर्गादावेतेभ्यो लोकेभ्यः आभिमुख्येन निर्हता निर्गता इत्यर्थः॥ ४६॥

द्रापे॒ऽअन्ध॑सस्पते॒ दरि॑द्र॒ नील॑लोहित।
आसाम्प्रजाना॑मे॒षाम्प॑शू॒नाम्मा भेर्म्मारो-
ङ्मो च॑ नः॒ किञ्च॒ नाम॑मत् ॥ ४७ ॥

सप्तकण्डिका एकरुद्रस्तुतयः। हे द्रापे, "द्रा कुत्सायां गतौ" (अ०प०) द्रापयतीति द्रापिः। अतथोक्त-(पाप-) कारिणः कुत्सितां गतिं नयती- त्यर्थः। हे अन्धसस्पते। अन्धसः अन्नस्य सोमस्य पते पालक!। हे

(१) "शल्लशातने" (भ्वा० प०) शदनं शदः पतनम्। पर्णानां पत्राणां (पक्वानां) शदो यत्र तत् स्थानं पर्णशदम्। यद्वा पर्णानि शीर्यन्ते शारयन्ते (पक्वानि पतन्ति) यत्र सपर्णशदः। पतितपर्णस्थितदेशः। तद्रूपाय नमः॥ (२) "गुरी उद्यमने" (तु० आ०) उद्गुरते उद्यमं करोतीत्युद्गुरमाणस्तस्मै।

दरिद्र! निष्परिग्रह(१)। हे नीललोहित! (२) नामान्येतानि रूपाणि चेति श्रुतौ एवं सम्बोध्य रुद्रमभयं याचते। हे शिव! नः अस्माकम् आसां प्रजानाम्(३) एषां पशूनाम् गवादीनां त्वं मा भेः भयं मा कार्षीः। मा रोक् भङ्गं मा कार्षीः "रुजो भङ्गे"। मो च नः किं च नाममत्। पुनः नः अस्माकं किं चन अपत्यादि माऽऽममत् मा रुग्णं कुरु, "अम रोगे" लङि धातोरमागम आर्षः। उः पादपूरणः॥ ४७॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय

प्रभरामहे मतीः। यथा शमसद् द्विपदे चतुष्पदे

विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्॥ ४८॥

वयं इमा मतीः बुद्धीः रुद्राय प्रभरामहे-प्रेरयामः, "हृग्रहोर्भश्छन्दसि" (पा० ३।१।८४ वा०) इति हकारस्य भकारः। याभिः स्तूयत इत्यर्थः। कथं भूताय? तवसे महते बलवते वा। उभयत्र तवःशब्दः पठितः (निघं० २।६। ३-३) कपर्दिने-जटामुकुटधारिणे। क्षयद्वीराय। क्षयन्तो निवसन्तो वीरा यत्र। तथा प्रेरयाम यथा येन प्रकारेण द्विपदे मनुष्ये चतुष्पदे पशौ शं कल्याणं असत् भवतु। किञ्च विश्वं सर्वं पुष्टं समृद्धं भवतु। अस्मिन् ग्रामे अनातुरम् आपद्रहितत्वं भवतु॥४८॥

या ते रुद्र शिवा तनूः शिवा विश्वाहा

भेषजी। शिवा रुतस्य भेषजी तया

नो मृड जीवसे॥ ४९॥

हे रुद्र! या ते तव शिवा शान्ता तनूः शरीरं तया त्वं नः अस्मान् मृड सुखय। किमर्थम्? जीवसे-जीवनाय। तनूः किम्भूता? शिवा कल्याणी। आदरार्थं पुनः पुनर्वचनम्। विश्वाहा(४) सर्वदा रुतस्य व्याधेः भेषजी। भिषक्त्वेन सह वर्तते। रुतशब्दो व्याधिवचनः। यद्वा शिवारुतस्य फेत्कृतशब्दस्य भेषजी अपशब्दान् हन्त्री-इत्यर्थः॥ ४९॥

परि नो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य

दुर्मतिरघायोः। अव स्थिरा मघवद्भ्यस्तनुष्व

मीढ्वस्तोकाय तनयाय मृड॥ ५०॥

---

(१) अद्वितीयत्वादिति भावः। (२) कण्ठे नीलोऽन्यत्र लोहितः। (३) कर्मणि षष्ठी। एवमग्रेऽपि। अभेररोक्-इति "बहुलं छन्दसि" (पा० २।४।३) इति शपो लुक्। (४) विश्वानि सर्वाणि अहानि। "कालाध्वनोरि" (पा० २।३।५) ति द्वितीयाया आत् (पा० ७।१।३९) सर्वेष्वहस्सु। तत्फलितमाह— सर्वदेति।

रुद्रस्य हेतिरायुधं नोऽस्मान् परिवृणक्तु—परितो वर्जयतु। अस्मान्मा हन्त्वित्यर्थः। अघायोः पापशीलस्य(१) दुर्मतिश्च नः परिवृणक्तु परिवर्जयतु। किम्भूतस्य? त्वेषस्य "त्विषिदीप्तौ" दीप्तस्य क्रुद्धस्येत्यर्थः। स्थिरा स्थिराणि धनूंषि मघवद्भ्यः मघवदर्थं अवतनुष्व अवतारय शिथिलीकुरु। मघं धनं हविर्लक्षणं येषां तेभ्यः यजमानेभ्य इत्यर्थः। किंच हे मीढ्वः! सेक्तः! तोकाय पौत्राय, तनयाय पुत्राय च मृड सुखय। कर्मणि चतुर्थी ॥ ५० ॥

मीढुष्टम शिवतम शिवो नः सुमना भव ॥
परमे वृक्षऽआयुधन्निधाय कृत्तिं वसान-
ऽआचर पिनाकं बिभ्रदागहि ॥ ५१ ॥

हेमीढुष्टम! सेक्तृतम! हे शिवतम! नः अस्माकं शिवः सुमनाश्च शोभनमनाश्च भव। किं च परमे दूरदेशावस्थायिनि वृक्षे आयुधं निधाय स्थापयित्वा कृत्तिं वसानश्चर्म परिदधानः। आचरागच्छ तपश्चरेति वा। पिनाकं स्वं धनुर्बिभ्रत् धारयन् आगहि(२) आगच्छ ॥ ५१ ॥

विकिरिद्र विलोहित नमस्तेऽअस्तु भगवः ॥
यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्निवपन्तु ताः ॥ ५२ ॥

हे विकिरिद्र! विविधं किरि घाताद्युपद्रवं द्रावयति नाशयतीति विकिरिद्रः। हे विलोहित! विगतकलुषभाव!। हे भगवः भगवन्! ते नमोऽस्तु। यास्ते तव हस्ते सहस्रं हेतयः असंख्यातानि आयुधानि सन्ति। ताः अस्मत्–अस्मत्तः अन्यं पुरुषं प्रति निवपन्तु निपतन्तु (घ्नन्तु)। भगव इति "मतुवसो रुः सम्बुद्धौ छन्दसि" (पा० ८।३।१) इति नकारस्य विसर्जनीयः ॥ ५२ ॥

सहस्राणि सहस्रशो बाह्वोस्तव हेतयः। तासा-
मीशानो भगवः पराचीना मुखा कृधि ॥ ५३ ॥

हे रुद्र! ते तव बाह्वोः याः सहस्रशः सहस्राणि हेतयः आयुधानि सन्ति तासां हेतीनाम् ईशानः प्रभुस्त्वं मुखा मुखानि(३) अस्मत्तः परा·

---

(१) अघं पापं परस्य इच्छतीत्यघायुः। छन्दसि परेच्छायामपि क्यच् (पा० ३।१।८ वा०) इति क्यच्। "क्याच्छन्दसि" (पा० ३।२।१७० ) इत्युप्रत्ययः। "क्यचि च" (पा० ७।४।३३) इतीत्वे प्राप्ते "अश्वाघस्यात्" (पा० ७।४।७० ) इत्यात्वम्। (२) ज्या शरहीनन्धनुर्मात्रं शोभार्थन्धारयन्नागच्छेत्यर्थः। (३) "शेश्छन्दसि बहुलम्" (पा० ६।१।७०) इति शेर्लोपः। एवमग्रेऽपि।

चीना पराचीनानि पराश्रितानि पराङ्मुखानि वा कृधि (१)-कुरु । सहस्र-स्यानन्तत्वप्रतिपादनाय शस्प्रत्ययः(२) ॥ ५३ ॥

असंख्याता सहस्राणि ये रुद्रा अधिऽभूम्याम् ।

तेषांऽ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५४ ॥

हे रुद्र ! असंख्याता असंख्यातानि सहस्राणि ये रुद्रा अधिभूम्याम् भूम्या उपरि स्थिताः । तेषां सहस्रयोजने अवस्थितानां धन्वानि धनूंषि अवतन्मसि अवतनुमः अवतारयामः(३) ॥ ५४ ॥

अस्मिन्महत्यर्णवेऽन्तरिक्षे भवाऽअधि ।

तेषांऽ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५५ ॥

अस्मिन्नन्तरिक्षे भवा रुद्रा अधि उपरि स्थिताः । तेषामिति व्या-ख्यातम् । अन्तरिक्षे किम्भूते? अर्णवे । अर्णः पानीयं तद्युक्ते । मत्वर्थीयो वकारः सलोपश्च ( पा० ५ । २ । १०९ वा० ) महति-व्यापके(४) ॥ ५५ ॥

नीलग्रीवाः शितिकण्ठा दिवंऽ रुद्राऽउपश्रिताः ।

तेषांऽ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५६ ॥

ये नीलग्रीवाः कृष्णकण्ठाः शितिकण्ठाः श्वेतकण्ठाश्च रुद्राः दिवं द्युलोकम् उपश्रिता उपरिस्थिताः तेषामित्यादि पूर्ववत् (५) ॥ ५६ ॥

नीलग्रीवाः शितिकण्ठाः शर्वाऽअधः

क्षमाचराः । तेषांऽ सहस्रयोजनेऽव

धन्वानि तन्मसि ॥ ५७ ॥

ये शर्वाः रुद्रा नीलग्रीवाः शितकण्ठाः अधः क्षमाचराः पृथिव्या अधः संचरन्ति तेषामित्यादि पूर्ववत् ॥ ५७ ॥

ये वृक्षेषु शष्पिञ्जरा नीलग्रीवा विलोहिताः ।

तेषांऽ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५८ ॥

ये रुद्राः वृक्षेषु वने आसते । किम्भूताः ? शष्पिञ्जराः शष्पा इव पिञ्जरवर्णाः । शष्पं नवतृणं, नीलग्रीवाः विलोहिता विगतकलुषभावाः विविधं लोहिता वा । लोहितशब्देन धातव उच्यन्ते । तेन त्वग्लोहित-मज्जादियुक्ता इत्यर्थः । तेषामित्यादि पूर्ववत् ॥ ५८ ॥

(१) करोतेर्लोटि शपि लुप्ते "श्रुशृणुपृकृवृभ्यश्छन्दसि" (पा०६।४।१०२) इति हेर्धिः । (२) "संख्यैकवचनाच्च वीप्सायाम्" ( पा० ५।४।४३ ) इतिसूत्रेण । (३) अनेन पृथिवीस्थानां रुद्राणां नमस्कारः ॥ (४) अनेन मध्यस्थानां रुद्राणां नमस्कारः । (५) अनेन दिविष्ठानां नमस्कारः ।

ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ५९ ॥

ये भूतानां प्राणिनाम् अधिपतय ईश्वराः । विशिखासः विशिखाः । अशुगागमः । सर्वमुण्डाः । कपर्दिनो जटिलाः । तेषां धन्वानि धनूंषि अवतन्मसि अवतनुमः नमयामः ॥ ५६ ॥

ये पथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६० ॥

ये रुद्राः पथामधिपतयः मार्गाणामीश्वराः । ये च पथिरक्षयः पथां पालकाः । इलानामन्नानां समूह ऐलं ये बिभ्रति ते ऐलभृतः सन्तोऽपि परोक्षवृत्तिना शब्देन ऐलबृदाः इत्युच्यन्ते । आयुर्युधः । आयुर्जीवनं पणीकृत्य युध्यन्ते आयुर्युधः । चौरादयो वा रुद्रा वा । तेषामित्यादि पूर्ववत् ॥

ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६१ ॥

ये रुद्रास्तीर्थानि प्रयागप्रभृतीनि प्रचरन्ति-गच्छन्ति । सृकाहस्ताः आयुधवन्तः । सृकाइत्यायुधनाम । निषङ्गिणः खङ्गिनः । तेषामित्यादि पूर्ववत् ॥ ६१ ॥

येऽन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
तेषाᳬ सहस्रयोजनेऽव धन्वानि तन्मसि ॥ ६२ ॥

ये अन्नेष्ववस्थिताः विविध्यन्ति विशेषेण ताडयन्ति । (१) अयमर्थः । येषामयमधिकारः अन्नस्य भक्षयितारो रोगादिभिर्गृहीतव्या इति ये च पात्रेष्ववस्थिताः सन्तः पिबतः जनान् विविध्यन्ति, तेषामित्यादि पूर्ववत् ॥ ६२ ॥

यऽएतावन्तश्च भूयाᳬसश्च दिशो रुद्रा
वितस्थिरे । तेषाᳬ सहस्रयोजनेऽव
धन्वानि तन्मसि ॥ ६३ ॥

ये एतावन्तः रुद्रा भूयांस उक्तेभ्योऽपि बहुतराः दिशः वितस्थिरे । विष्टभ्य स्थिताः । तेषामित्यादि पूर्ववत् ॥ ६३ ॥

इत उत्तरं त्रिलोकस्थिता रुद्राः स्तूयन्ते—

नमोऽस्तु रुद्रेभ्यो ये दिवि येषां वर्षमिषवः ।
तेभ्यो दश प्राचीर्दश दक्षिणा दशप्रतीचीर्द-

(१) "व्यधताडने" (दि० १०) लटि श्यनि रूपम् ।

शोदीचीर्दशोर्द्ध्वाः। तेभ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ ६४ ॥

तेभ्यो रुद्रेभ्यो नमोऽस्तु। केभ्यः? ये दिवि द्युलोके स्थिताः येषां रुद्राणां वर्षं वृष्टिः इषवः आयुधस्थानीयं, तेभ्यो रुद्रेभ्यो दशाङ्गुलीः प्राचीः करोमि नमस्कारार्थमितियावत्। एवं दशाङ्गुलीः दक्षिणाः। दश प्रतीचीः दश उदीचीः। दश ऊर्द्ध्वाः। करोमीति सर्वत्र। तेभ्यो नमोऽस्तु। ते नः अस्मान् अवन्तु रक्षन्तु। मृडयन्तु सुखयन्तु। ते वयं च सन्तर्पितरुद्राः सन्तो यं पुरुषन्द्विष्मः यश्च नः अस्मान् द्वेष्टि तम् एतेषां रुद्राणां जम्भे मुखे (१) दध्मः धारयामः ॥ ६४ ॥

नमोऽस्तु रुद्रेभ्यो येऽन्तरिक्षे येषां व्वातऽइषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः। तेभ्यो नमोऽअस्तुते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः ॥ ६५ ॥

नमोऽस्तु येऽन्तरिक्षे येषां वात इषवः। तेभ्यो दश इति पूर्ववत् ॥ ६५ ॥

नमोऽस्तु रुद्रेभ्यो ये पृथिव्व्यां य्येषामन्नमिषवः। तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः। तेभ्यो नमोऽअस्तुते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टितमेषाञ्जम्भे दध्मः ॥ ६६ ॥

नमोऽस्तु रुद्रेभ्यो येषामन्नमिषवः। तेभ्यो दश इतिद्वयोः कण्डिकयोरुक्त एवार्थः ॥ ६६ ॥

इतिशतरुद्रजपे पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ वयं सोमाष्टकं व्याख्यायते—

व्वयर्ठ० सोम व्व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि ॥ १ ॥

---

(१) जम्भो दन्तस्तत्प्रधाने दंष्ट्राकराले मुखे। दन्तयोर्मध्य इति फलितोऽर्थः।

हे सोम!(१)। तव व्रते कर्मणि (निघं २।१) पितृयज्ञे वर्त्तमाना वयं, तनूषु शरीरेषु जाग्रत्स्वप्नसुषुप्त्यादिषु अवस्थासु मनः बिभ्रतः धारयन्तः सचेमहि सेवेमहि "सेवितव्यानि वस्तूनी"ति शेषः(२) ॥ १ ॥

एष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व

स्वाहैष ते रुद्र भागऽआखुस्ते पशुः ॥ २ ॥

त्रैयम्बकाः पुरोडाशाः। तत्रावदानहोमेऽयं विनियुक्तः। हे रुद्र! एष ते तव भागः अंशः स्वस्रा भगिन्या(३) अम्बिकया सह सहितस्तम् इममस्माभिर्दीयमानं स्वं भागं जुषस्व-सेवस्व। स्वाहा तत्सुहुतमस्तु। अतः परमाखूत्करं परिकिरति हे रुद्र! ते तव आखुः मूषकः पशुर्भागः ॥

अव रुद्रमदीमह्यव देवं त्र्यम्बकम् ॥ यथा नो

वस्यसस्करद्यथा नः श्रेयसस्करद्यथा

नो व्यवसाययात् ॥ ३ ॥

वयम्। अवयुत्य (पृथक्कृत्य) "अन्याभ्यो देवताभ्य" इति शेषः। रुद्रमदीमहि आदयाम भोजयाम, "अदभक्षणे" छान्दसो णिलोपः। तथाऽवगत्य ज्ञात्वा त्र्यम्बकमदीमहि यथा येनप्रकारेण स नोऽस्मान् वस्यसः वस्तृतमान् वसनशीलानकरत(४) कुर्यात्। "वसनिवासे" इत्यस्य तृनि वस्तेति भवति। "तुश्छन्दसी"ति (पा० ५।३।५९) ईयसुनि कृते "तुरिष्ठेमेयःस्वि"ति (पा० ६।४।१५४) तृनो लोपः। वसीयस इति प्राप्ते ईलोपश्छान्दसो भवति। एवं तथाऽऽद्यामः। यथा च नः अस्मान् श्रेयसः प्रशस्यतरानकरत्-कुर्यात्। यथा च नः अस्मान् व्यवसाययात् विशेषेण कर्मणामन्तं नयेत् "षोऽन्तकर्मणी"त्यस्य (दि० प०) णयन्तस्य विपूर्वस्यावपूर्वस्य चाशिषि लिङ्। आर्द्धधातुके(५) धातोरात्वे युकि रूपम् ॥ ३ ॥

---

(१) अत्र पितृयज्ञे सोमनामधेयो देवोऽस्ति। "सोमाय पितृमते" इत्येवं हविषो विहितत्वात्। सोऽत्र सम्बोध्यते। (२) यद्वा "षचसमवाये" समवायः सम्बन्धः। सर्वदा त्वत्सम्बद्धा भवेम। (३) तथा च श्रुतिः "अम्बिका ह वै नामास्य स्वसा तयाऽस्यैष सह भाग इति। (२।६।२।९) योऽयं रुद्राख्यः क्रूरदेवस्तस्य विरोधिनं हन्तुमिच्छा भवति। तदानया भगिन्या क्रूरदेवतया साधनभूतया तं हिनस्ति। सा चाम्बिका शरद्रूपं प्राप्य ज्वरादिकमुत्पाद्य तं विरोधिनं हन्ति। रुद्राम्बिकयोरुग्रत्वमनेन हविषा शान्तं भवति। इत्येवम्महीधरोक्तमत्र द्रष्टव्यम्। (४) "छन्दसि लुङ्लङ्लिटः" (पा० ३।४।६) इति लिङर्थे लङ्। विकरणव्यत्यये शपि गुणः। "बहुलं छन्दस्यमाङ्योगेऽपि" (पा० ६।४।७५) इत्यडभावः। (५) वस्तुतो लेटि आडागमे "इतश्च लोपः परस्मैपदेषु" (पा० ३।४।९७) इति इकारलोपे रूपं बोध्यम्।

भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय

भेषजम् ॥ सुखम्मेषाय मेष्यै ॥ ४ ॥

हे रुद्र! यतस्त्वं स्वभावत एव भेषजम् औषधमसि। सर्वप्राणिनां हितकारी भवसि। अतः सम्प्रार्थये गवेऽश्वाय पुरुषाय भेषजं "देही"ति शेषः। मेषाय मेष्यै सुखन्देहि (१) ॥ ४ ॥

त्र्यम्बकँय्यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥

उर्व्वारुकमिव बन्धनान्मृत्योर्म्मुक्षीय

माऽमृतात् ॥ ५ ॥

वयं त्र्यम्बकं शिवं यजामहे पूजयामः। सुगन्धि दिव्यगन्धोपेतं मर्त्य-दोषरहितं, पुष्टिवर्द्धनं पुष्टेर्धनधान्यादेर्वर्द्धयितारम्। अतः सोऽस्मान् मृत्योः सकाशात् मुक्षीय मोचयतु। पुरुषव्यत्ययश्छान्दसः। कस्मात्क इव? बन्धनात् उर्वारुकमिव। उर्वारुः कर्कटीविशेषः। अनायासे दृष्टा-न्तः (२)। माऽमृतात् अमृतान्मा मोचयतु ॥ ५ ॥

कुमार्यो रूपवन्तं पतिं प्रार्थयन्ते—

त्र्यम्बकँय्यजामहे सुगन्धिम्पतिवेदनम् ॥

उर्व्वारुकमिव बन्धनादितो मुक्षीय

माऽमुतः ॥ ६ ॥

वयं त्र्यम्बकं शिवं यजामहे-पूजयामः। किम्भूतं? सुगन्धि दिव्य-गन्धोपेतम्। पुनः किम्भूतं? पतिवेदनं पतिं वेदयतीति पतिवेदनस्त-म्भर्तृलम्भयितारमित्यर्थः, "विद्लृ लाभे" (रु० उ०)। किम्प्रार्थयते? इतः ज्ञातिवर्गात् अहं मुक्षीय, स मां मोचयतु। बन्धनात् मुक्ता भवेयमिति। उर्वारुकमिवेति दृष्टान्तस्पूर्ववत्। अमुतः पतिस्थाना-न्मा मुक्षीय स मा मां मोचयतु इति ॥ ६ ॥

एतत्ते रुद्रावसन्तेन परो मूजवतोऽतीहि।

अवततधन्वा पिनाकवसः कृत्तिवासा

ऽअहिँसन्नः शिवोऽतीहि ॥ ७ ॥

रुद्रं यजति–हे रुद्र! एतत् ते तव अवसं हविःशेषाख्यं भोज्यम्। पथ्यदनम्। पाथेयम् "सम्बलञ्चोच्यतेऽवसमिति" तेन अवसेन सम्ब-

(१) सुहितं खेभ्य इति सुखम् ॥ (२) यथोर्वारुकं कर्कटीफलम्। बदरीफलं वा। सुपक्वं सत् बन्धनात्स्वस्य वृन्तात्प्रमुच्यते तद्वत्।

ऋचँ वाचं प्रपद्ये मनो यजुः प्रपद्ये साम
प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये ॥ वा-
गोजः सहौजो मयि प्राणापानौ ॥ १ ॥

ऋचमृग्रूपां वाचमहं प्रपद्ये प्रविशामि, शरणं व्रजामि। यजुः यजूरूपं मनः प्रपद्ये, प्रविशामि, प्राणं प्राणरूपं साम प्रपद्ये, चक्षुरिन्द्रियं च, श्रोत्रेन्द्रियं च प्रपद्ये। वागादिग्रहणं सप्तदशावयवोपलक्षणं सप्तदशावयवं प्रजापतेर्लिङ्गं प्रपद्ये—इत्यर्थः। त्रयीविद्यां लिङ्गशरीरं च प्रपन्नं प्रवर्ग्यो न नाशयेदिति भावः। तथा वागिन्द्रियमोजो मानसं बलं धार्ष्ट्यम्। पुनरोजोग्रहणाच्छारीरं च बलम् प्राणापानौ उच्छ्वासनिश्वासवायू च एते सह एकीभूताः सन्तो मयि वर्तन्ते। अतो मदिष्टकर्मणि शान्तिर्भवत्वित्यभिप्रायः ॥ १ ॥

यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वाऽतितृण्णं बृहस्पतिर्मे तद्दधातु ॥ शन्नो भवतु
भुवनस्य यस्पतिः ॥ २ ॥

मे मम चक्षुषः चक्षुरिन्द्रियस्य यत् छिद्रमवखण्डितं जातमपकर्माचरणेन, हृदयस्य बुद्धेर्वा यत् छिद्रं जातं, मनसो वा यत् अतितृण्णमतिहिंसितं, यच्च चक्षुर्बुद्धिमनसां व्याकुलत्वं जातं, बृहस्पतिर्देवगुरुः मे मम तत् छिद्रमतितृण्णं च दधातु सन्दधातु। छिद्रं निवर्तयतु। भुवनस्य भूतजातस्य यः पतिरधिपतिः सर्वेष्टफलदायको यः प्रवर्ग्यरूपो यज्ञः स नोऽस्माकं शं सुखरूपो भवतु। शमिति सुखनाम ॥ २ ॥

ततो व्याहृतिसहिता तत्सवितुरिति गायत्री सन्ध्याप्रकरणे व्याख्याता ॥ ३ ॥

कया न इति मन्त्रो नवग्रहपूजनप्रकरणे व्याख्यातः ॥ ४ ॥

कस्त्वा सत्यो मदानाम्मंहिष्ठो मत्स-
दन्धसः। दृढाचिदारुजे वसु ॥ ५ ॥

हे इन्द्र! अन्धसोऽन्नस्य सोमरूपस्य कः अंशः त्वा त्वां मत्सत् माद्यति मत्तं करोति। "मदी हर्षे" "लेटोऽडाटावि" त्यडागमः "सिब्बहुलं लेटी" ति सिप्प्रत्ययः तिप इलोपः। कीदृशः? मदानां मंहिष्ठः मदयन्ति तानि मदानि पचाद्यच्। मदजनकानि हवींषि तेषां मध्ये मंहिष्ठः प्रेष्ठः अत्यन्तमदजनकः। "महि कान्तौ" चुरादिः। मंहयति द्योतते मंही अत्यन्तं मंही मंहिष्ठः, यद्वा "महि वृद्धौ" भ्वादिः। मंहते वर्द्धते मंही।

अत्यन्तं मंही मंहिष्ठः । येनांशेन मत्तः सन् दृढाचित् दृढान्यपि वसु वसूनि धनानि कनकादीनि त्वमारुजे "रुजो भङ्गे" पुरुषव्यत्ययः । आरुजसि चूर्णयसि । दातुं मनसि भङ्क्त्वा ददासीत्यर्थः ॥ ५ ॥

अभीषुणः॑ सखी॑नामवि॒ता ज॑रितॄ॒णाम् ॥

श॒तम्भ॑वास्यू॒तिभिः॑ ॥ ६ ॥

हे इन्द्र ! त्वमूतिभिः, अवनैर्हेतुभिः, (१)त्वमूतये॑ऽवनाय पालनाय नः अस्माकम् इति वा सुष्ठु सम्यक् अभि आभिमुख्येन शतं भवासि भवसि । लेटि आडागमः, शतशब्दो बहुवाची । बहुरूपो भवसि । अस्माकं पालनाय नानारूपाणि दधासि इत्यर्थः । कीदृशस्त्वं ? सखीनां मित्राणां जरितॄणां स्तोतॄणां नोऽस्माकमृत्विजामविता पालयिता । संहितायामभीत्यस्य दीर्घः । "सुञ्" इति सुशब्दस्य षत्वम् "नश्च धातुस्थोरुषुभ्य" इति षुशब्दात्परस्य नकारस्य णत्वम् ॥ ६ ॥

कया॑ त्वन्न॑ऽऊ॒त्याऽभिप्रम॑न्दसे वृषन् ॥

कया॑ स्तो॒तृभ्य॒ऽआभ॑र ॥ ७ ॥

हे वृषन् ! वर्षतीति वृषा तत्संबोधने हे सेक्तः ! इन्द्र ! "वासवो वृत्रहा वृषे"त्यभिधानम् । कया ऊत्या केन तर्पणेन (२)हविर्दानेन नोऽस्मानभिप्रमन्दसे अभिप्रमोदयसि "मदिस्तु स्वपने जाड्ये मदे मोदे स्तुतौ गतौ" लट् । कया च ऊत्या तृप्त्या स्तोतृभ्यः स्तुतिकर्तृभ्यो यजमानेभ्यः, आभर आहर आहरसि "धनं दातुमि"ति शेषः । तद्वद्वयेन तथा वयं कुर्म इति भावः । आभरेति लडर्थे लोट् ॥ ७ ॥

इन्द्रो॒ विश्व॑स्य राजति ॥ शन्नो॑ऽअस्तु

द्वि॒पदे॒ शञ्चतु॑ष्पदे ॥ ८ ॥

विश्वस्य सर्वस्य जगतः इन्द्रः "इदि परमैश्वर्ये" इन्दतीतीन्द्रः परमेश्वरः आदित्यो वा यो राजति देदीप्यते ईष्टे वा स नोऽस्माकं द्विपदे 'विभक्तिव्यत्ययः' द्विपदां पुत्रादीनां शं सुखरूपोऽस्तु । चतुष्पदे चतुष्पदां गवादीनां च शं सुखरूपोऽस्तु ॥ ८ ॥

शन्नो॑ मि॒त्रः शंवरु॑णः॒ शन्नो॑ भवत्वर्य्य॒मा ॥

शन्न॒ऽइन्द्रो॒ बृह॒स्पतिः॒ शन्नो॒ विष्णु॑रुरुक्र॒मः ॥ ९ ॥

मित्रो देवो नोऽस्माकं शं सुखरूपो भवतु महावीरप्रसादात् । मेद्यति

---

(१) "अवने ऊतिः" इत्यमरः । तृतीयार्थे चतुर्थी व्यत्ययेन । (२) अवतिरत्र तृप्त्यर्थः (भ्वा० प०) "ऊतियूति" इत्यादिना निपातितः ।

भक्तेषु स्निह्यतीति मित्रः। वरुणः शं सुखरूपो भवतु। वृणोत्यङ्गीकरोति भक्तमिति वरुणः। अर्यमा नोऽस्माकं शं भवतु। इयर्त्ति गच्छति भक्तं प्रतीत्यर्यमा। इन्द्रो देवेशो नोऽस्माकं शं भवतु। बृहस्पतिर्देवगुरुर्नः शं भवतु। बृहतां वेदानां पतिः पालकः। उरुविस्तीर्णः क्रमः पदन्यासो यस्य स विष्णुः नोऽस्माकं शं भवतु। वेवेष्टि व्याप्नोतीति विष्णुः ॥९॥

शन्नो व्वातः पवताᳬंशन्नस्तपतु सूर्यः।

शन्नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥ १० ॥

वातो वायुर्नोऽस्माकं शं सुखकारी। अपरुषः (१) अव्याधिजनकश्च सन् पवताम् वहताम् "पव गतौ" लोट्। सुवति जनान् स्वस्वव्यापारेषु प्रेरयतीति सूर्यः (२) शं सुखरूपोऽदहनो भेषजरूपश्च सन्नोऽस्माकं तपतु किरणान् प्रसारयतु। पर्जन्यः पिपर्त्ति पूरयति जनानिति पर्जन्यः, पुरो जन्यतेऽनेन वा "पर्जन्यो रसशब्देन्द्रावि"त्यभिधानम्। पर्जन्येशो देवो (३)नोऽस्माकं शं सुखकरं उल्काशनिक्षाररहितं यथा तथा अभिवर्षतु सिञ्चतु। कीदृशः? कनिक्रदत् अत्यन्तं क्रन्दतीति। स्तनयित्नुशब्दं कुर्वन् "दाधर्ति दर्धर्ती" (पा० ७।४।३५)-त्यादिना यङ्लुगन्तो निपातः १०

अहानि शम्भवन्तु नः शᳬरात्रीः प्रति

धीयताम् ॥ शन्नऽइन्द्राग्नी भवतामवोभिः

शन्नऽइन्द्रावरुणा रातहव्या ॥ शन्नऽइन्द्रापूषणा

व्वाजसातौ शमिन्द्रासोमा सुविताय शंय्योः ॥ ११ ॥

अहानि दिनानि नोऽस्माकं शं सुखरूपाणि भवन्तु। रात्रीः सुखरूपा भवन्तु। अस्मासु प्रतिधीयतां प्रतिदधातु "महावीर" इति शेषः। कर्त्तरि यक् छान्दसः। इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवताः, इन्द्राग्नी अवोभिः पालनैः कृत्वा नोऽस्माकं शं सुखरूपौ भवताम्। रातं दत्तं हव्यं ययोस्तौ रातहव्यौ हविस्तृप्तौ इन्द्रावरुणौ नः शं सुखरूपौ भवताम्, वाजसातौ वाजस्यान्नस्य सातौ दाननिमित्तभूते। किमर्थं? सुविताय सुष्ठु इतं सुवितम् तस्मै साधुगमनाय साधुप्रसवाय वा। तथा शं रोगाणां शमनाय योः यवनाय पृथक्करणाय च भयानाम्। रोगं भयञ्च निवर्त्य सुखरूपौ भवताम्, "देवता द्वन्द्वे चे"ति सर्वत्र पूर्वपदस्य दीर्घः ॥ ११ ॥

(१) एष शमित्यस्यैवार्थः। (२) "राजसूयसूर्ये"त्यादिना निपातितः। एवमग्रेऽपि सुखरूप इत्यादि। (३) अत्र पर्जन्यपदेन तदधिपतिरनेनाभिप्रेतः। सोऽर्थोऽभिधानेन समर्थितः ॥ मृग्यमेतदभिधानम्।

शन्नो देवीरित्यस्य व्याख्यानं श्राद्धप्रकरणे कृतम् ॥ १२ ॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥

यच्छा नः शर्म सप्रथाः ॥ १३ ॥

एष मन्त्रो ग्रहार्चने व्याख्यास्यते ॥ १३ ॥

आपो हिष्ठेत्यादित्यृचं सन्ध्याप्रकरणे व्याख्यातम् ॥ १४ ॥ १५ ॥ ॥ १६ ॥ द्यौः शान्तिरित्यग्रे व्याख्यास्यते ॥ १७ ॥

दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ॥ मित्रस्याहञ्चक्षुषा सर्वाणि भूतानि समीक्षे ॥ मित्रस्य चक्षुषा समीक्षामहे ॥ १८ ॥

दृते "दृ विदारणे" विदीर्णे जराजर्जरितेऽपि शरीरे हे महावीर ! मा मां त्वं दृंह दृढीकुरु । यद्वा दृते विदीर्णे कर्मणि मां दृंह अच्छिद्रं कर्म कुरु । यद्वा ससुषिरत्वात्सेक्तृत्वाच्च दृतिशब्देन महावीरः । हे दृते ! महावीर ! मां दृंह दृढीकुरु । कथं दार्ढ्यम् ? तदाह–सर्वाणि भूतानि प्राणिनो मा मां मित्रस्य चक्षुषा समीक्षन्तां सम्यक् पश्यन्तु । मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या । सर्वेषां प्रियो भूयासमित्यर्थः । किञ्च अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे पश्यामि । सर्वे मे प्रियाः सन्तु । मित्रस्य चक्षुः शान्तं भवति । मित्रः कञ्चन न हन्ति । मित्रं च कश्चन न हन्ति । एवं परस्पराद्रोहेण सर्वानहिंसन्तो मित्रस्य चक्षुषा वयं समीक्षामहे पश्यामः ॥ १८ ॥

दृते दृꣳह मा ॥ ज्योक्ते सन्दृशि जीव्यासम् ज्योक्ते सन्दृशि जीव्यासम् ॥ १९ ॥

हे दृते ! महावीर ! मां दृंह । आदरार्थं पुनर्वचनम् । हे महावीर ! ते तव सन्दृशि सन्दर्शने अहं ज्योक् चिरं जीव्यासम् जीवेयम् । जीवे· राशीर्लिङि रूपम् । ज्योगिति निपातश्चिरार्थः । पुनरुक्तिरादरार्था । ते सन्दृशि ज्योग्जीव्यासम् ॥ १९ ॥

नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳ शिवो भव ॥ २० ॥

ऋषिपुत्री लोपामुद्रा ऋषिः अग्निर्देवता बृहतीच्छन्दो महावीरशा·

न्तिकरणे विनियोगः। अयमर्थः हे अग्ने! तुभ्यं नमः। अस्त्वित्युत्तरत्राव-स्थितमत्रापि योज्यम्। किम्भूताय तुभ्यं? हरति सर्वदुःखम इति हरः तस्मै हरसे। पुनः किम्भूताय? शोचिषे दीप्तिकारिणे। तथा अर्चिषे अर्चिर्ज्वाला तद्रूपाय ते तुभ्यं नमोऽस्तु। किमर्थं? ते तव हेतयः ज्वालाः अस्मत्सका-शादन्यानस्मद्विरोधिनः विरुद्धांस्तपन्तु दहन्तु। न केवलमेवं किन्तु त्वं पावकः शोधकः सन् अस्मभ्यं शिवः कल्याणो भव। इत्येतदर्थ च नम-स्कृतोऽग्निः अस्माकं विरुद्धान् दहत्वस्माकं कल्याणाय भवत्वित्याशंसा वाक्यार्थः। अत्र हरसे "हृञ् हरणे" इत्यस्य "सर्वधातुभ्योऽसुन्नि"-त्यसुन्॥ २०॥

नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे॥ २१॥

दध्यङ्ङाथर्वण ऋषिरनुष्टुप्छन्द इन्द्रो देवता महावीरशान्तिकरणे विनियोगः। अयमर्थः हे रुद्र! ते तुभ्यं नमः अस्तु। किम्भूताय? विद्युते विद्युद्रूपाय। तथा स्तनयित्नवे मेघरूपाय ते तुभ्यं नमः। हे भगवन्! सकलैश्वर्यशालिन्! ते तुभ्यं नमः। केन कारणेन त्वं नमस्क्रियसे? यतः कारणात् स्वः स्वर्गं दातुं समीहसे चेष्टसे। दातुमित्यध्याहारः। हे इन्द्र! त्वं यतो यतः कारणात् स्वर्गार्थिनां स्वर्गं ददासि, अतस्तुभ्यं विद्युद्रूपाय ईश्वराय नमोऽस्त्विति वाक्यार्थः॥ २१॥

यतोयतः समीहसे ततो नोऽअभयं कुरु।
शन्नः कुरु प्रजाभ्योऽभयन्नः पशुभ्यः॥ २२॥

दध्यङ्ङाथर्वण ऋषिरिन्द्रो देवता त्रिष्टुप्छन्दो महावीरशान्तिकरणे विनियोगः। हे इन्द्र! यतो यतः यस्माद्यस्मात्कृतादुपचारादस्माकम-भयं कर्तुं समीहसे चेष्टसे ततस्तस्मान्नोऽस्माकं प्रजाभ्यः शं सुखं कुरु। तथा नः पशुभ्यो गवादिभ्योऽभयं कुर्विति पूर्वेणैव सम्बन्धः, अस्माकं त्वदुपचारं प्राप्याभयाय तदस्माकमस्मत्पुत्रादिगवादीनां चाऽभयं कु-र्विति याञ्चावाक्यार्थः॥ २२॥

सुमित्रिया नऽआप ओषधयः सन्तु
दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि
यञ्च वयन्द्विष्मः॥ २३॥

दध्यङ्ङाथर्वण ऋषिरापो देवता यजुश्छन्दो नास्ति (१) महावीराद-

(१) अत्र छन्दो नास्तीति यजुरित्यस्यैवार्थः। कान्छन्दस्कं हि यजुःशब्देनाभिधीयते।

न्तयोः शान्तिकरणे विनियोगः । अयमर्थः । आप ओषधयश्च नोऽस्माकं सुमित्रियाः (१)सन्तु । योऽस्मान् द्वेष्टि-अस्मासु द्वेषं करोति, यं च वयं द्विष्मः यस्मिन् वयं द्वेषं कुर्मः तस्मै दुर्मित्रियाः सन्तु । आपो ब्रह्मादयश्चास्माकं साधुमित्रवदभीष्टकारिण्यो भवन्तु । अस्मच्छत्रूणां दुष्टामित्रवद्विरोधिन्य आपो भवन्तु इत्याशंसा वाक्यार्थः ॥ २३ ॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येम

शरदः शतं जीवेम शरदः शतꣳ शृणुयाम

शरदः शतं प्रब्रवाम शरदः शतमदीनाः

स्याम शरदः शतं भूयश्च शरदः शतात् ॥ २४ ॥

दध्यङ्ङाथर्वण ऋषिः सूर्यो देवता उष्णिक्छन्दो महावीराद्यन्तयोः शान्तिकरणे विनियोगः ॥ अयमर्थः । तच्चक्षुः चक्षुरिव त्रैलोक्यप्रकाशकमादित्यमण्डलमित्यर्थः । तत्किम्भूतं ? देवहितं, पुनः किम्भूतं ? पुरस्तात् उच्चरत्, प्राच्यामुद्यत् । पुनः किम्भूतं, शुक्रं शुक्लं निर्मलमिति यावत् । तस्मादादित्यदर्शनाद्वयं शरदः शतं शृणुयाम । यः सर्ववेदमयश्चादित्यः प्रत्यहं प्राच्यामुदितस्तत्प्रसादेन वयमविकलेन्द्रियाः शतंवर्षाणि जीवेम । एवं प्रब्रवामादेरर्थो ज्ञातव्य इत्याशंसा वाक्यार्थः ॥२४॥

अतः परं स्वस्त्ययनमन्त्राः ।

स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा

विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः

स्वस्ति नो बृहस्पतिर्दधातु ॥ २५ ॥

इन्द्रः नः स्वस्ति कल्याणं दधातु । पूषा सूर्यः नः स्वस्ति कल्याणं दधातु । इन्द्रः किम्भूतः ? वृद्धश्रवाः बहुधनः । श्रवःशब्दो धनवाचकः । महाशब्दो वा वृद्धश्रवाः । पूषा किम्भूतः ? विश्ववेदाः सर्वधनः स्वस्ति दधातु । तार्क्ष्यः किम्भूतः ? अरिष्टनेमिः, अनुपहतास्त्रः, अनुपहतचक्रधरः बृहस्पतिश्च नः स्वस्ति दधातु ॥ २५ ॥

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी

शान्तिरापः शान्तिरोषधयः शान्तिः ॥

वनस्पतयः शान्तिर्विश्वे देवाः शान्ति-

र्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव

(१) साधुमित्रवदभीष्टकारिण्यः ।

शान्तिः सा मा शान्तिरेधि ॥ २६ ॥

सर्वारिष्टोपशमः अस्माकमस्त्वित्यध्याहार्य्यम् । तथा अन्तरिक्षं शान्तिरस्तु । ब्रह्मादयः शान्तिः । शान्तयः सन्तु । अत्र सर्वत्र च द्यौः प्रभृतिभिः शान्तिरित्यन्तैः पदैः तत्र स्वर्गाधिष्ठात्र्यो देवता अस्माकमरिष्टोपशमनपूर्वकमभीष्टसम्प्रदानाय भवन्त्वित्याशंसावाक्यार्थः । आपः शान्तिरित्यादिषु, "सुपां सुपो भवन्तीति" बहुवचनम् ॥ २६ ॥

इति महामहोपाध्यायश्रीशत्रुघ्नमिश्रविरचितायां मन्त्रार्थदीपिकायां षडङ्गरुद्रस्य व्याख्या समाप्ता ॥ * ॥

---

अथ वैवाहिकादयो मन्त्राः । तत्र प्रथममर्हणामन्त्राः(१)

वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः ॥ इम-
न्तमभितिष्ठामि यो मा कश्चाभिदासति ॥ १ ॥

अहं समानानां समानजातीयानां वर्ष्मः अस्मि । आच्छादको भवामि । केषां क इव ? उद्यताम् उदयगामिनां चन्द्रतारकादीनां सूर्य इव । किं च यः कश्चिन्माम् अभिदासति हिंसति । तमिमं विष्टररूपतामापन्नम् अभितिष्ठामि-अभिभूय अधः कृत्वा तिष्ठामि हिनस्मीति वा । अभिपूर्वो दासतिर्हिंसायां वर्त्तत इति कर्कभाष्यम् ॥ १ ॥

विराजो दोहोऽसि विराजो दोहमशीय मयि
पाद्यायै विराजो दोहः ॥ २ ॥

हे जल ! त्वं विराजः विशिष्टदीप्तेर्दोहः प्रपूरणोऽसि । अहं विराजो दोहं विशिष्टदीप्तिपूरकं त्वाम् अशीय गृह्णामि । विराजो दोहस्त्वं मयि पाद्यायै पाद्याय भव । तथा च त्वामभिमन्त्रयामि मम पादस्य विशिष्टां दीप्तिं कुर्विति वाक्यार्थः, अशीयेति "अशगतिदीप्त्यादानेष्वि"त्यस्य धातोः आशिषि लिङि रूपम् ॥ २ ॥

आपःस्थ युष्माभिः सर्वान् कामानवाप्नवानि ॥ ३ ॥

हे आपः ! यतो यूयम् आपः स्थ भवथ । आप्नुवन्तीत्यापः आपूरयित्र्यः । अतोऽहं युष्माभिः गृहीताभिः सर्वान्कामानवाप्नवानि प्राप्नुयाम् । आप्नवानि इति "आप्लृव्याप्ता"वि'त्यस्य धातोः आप्नुवन्तीत्यर्थे क्विपि रूपम् ॥ ३ ॥

---

(१) अत्र विवाहादिकर्मोपयोगिनामन्यशाखीयानां पारस्कराचार्यकृतगृह्यसूत्रसन्दर्भपठितानां मन्त्राणां केचिद्विनियोगं पठन्ति केचन न पठन्तीत्यत्र विकल्पो (विशेषो)ऽस्तीति बुधैर्ज्ञेयः । तेषामर्थपरिज्ञानं जयरामरामकृष्णगदाधराद्याचार्य्यप्रणीतभाष्यादवगन्तव्यम् ॥

समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत ।

अरिष्टा अस्माकं वीरा मापरासेचि मत्पयः ॥ ४ ॥

हे आपः ! वः युष्मान् समुद्रं प्रहिणोमि प्रस्थापयामि । मया प्रहिता यूयं स्वां योनिं समुद्रम् अभिगच्छत । यूयं किम्भूताः ? अस्माकं अरिष्टाः अहिंसकाः । वीरा उत्कृष्टाः । मत्पयः मदीयपानयोग्यं मत्पयस्तत्पुनः मा परासेचि न क्षरतु नापगच्छतु । तथा च तदिहैव तिष्ठत्वित्यर्थः । मदीयपानयोग्यातिरिक्ताः सर्वाः आपः ममाहिंसकाः सत्यः समुद्रं गच्छन्तु । मत्पानयोग्यं पयः अत्रैव तिष्ठत्विति वाक्यार्थः ॥ ४ ॥

आमागन्यशसा सꣳसृज वर्चसा ॥ तं मा

कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम् ॥ ५ ॥

हे जल ! मा मां यशसा आगन् आगमय मां यशस्विनं कुर्वित्यर्थः । किं च वर्चसा तेजसा मा मां संसृज संसृष्टं कुरु । तथा च मा मां प्रजानां प्रियं कुरु । पशूनां गवादीनाम् अधिपतिं कुरु । तनूनां शरीरावयवानाम् अरिष्टिम् आपद्रहितं कुरु । रिष्टिरापत् । आगन्निति गमधातोरन्तर्भावितण्यर्थस्य लोएमध्यमपुरुषैकवचने शपो लुकि ( पा० २ । ४ । ७३ ) "वा च्छन्दसी"ति विकल्पेन सेर्हिरादेशो न सम्भवति । "इतश्चे" ( पा० ६ । ४ । १०० ) तीकारलोपे "हल्ङ्याबि" ( पा० ६ । १ । ६८ ) तिसलोपे "मो नो धातोरिति" मकारस्य नकारः ॥ ५ ॥

मित्रस्य त्वा चक्षुषा प्रतीक्षे ॥ ६ ॥

हे मधुपर्क ! त्वा त्वां मित्रस्य सूर्यस्य चक्षुषा प्रतीक्षे पश्यामि । अहमादित्येन चक्षुर्दानेनानुगृहीतः, त्वां मधुपर्कमभिपश्यामीति वाक्यार्थः ॥ ६ ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां

पूष्णो हस्ताभ्यां प्रतिगृह्णामि ॥ ७ ॥

हे मधुपर्क ! त्वा त्वां प्रतिगृह्णामि । कस्मिन् सति ? सवितुर्देवस्य प्रसवेऽभ्यनुज्ञाने सति । सम्मताविति यावत् । प्र पूर्वः सुवतिरभ्यनुज्ञाने वर्तत इत्युव्वटः । गुणविष्णुश्च । केन (१)ग्रहणम् ? अश्विनोः अश्विनीकुमारयोर्बाहुभ्यां, तथा पूष्णः आदित्यस्य हस्ताभ्यां, तथा च तैरभ्यनुज्ञानादिभिरनुगृहीतोऽहं त्वां प्रतिगृह्णामीति वाक्यार्थः ॥ ७ ॥

नमःश्यावाश्यायान्नशने यत्तऽआविद्धं

तत्ते निष्कृन्तामि ॥ ८ ॥

---

(१) प्रतिग्रहे करणमाहेति तदर्थः ।

मधुपर्क प्रत्याह-हे-नमस्य ! (१)नमस्काराह॑ अवाश्यायानि मिश्रयामि त्वामित्यध्याहार्यम् । किं च ते तव अशने भोजने यत् आविद्धम् उपहितं ( संश्लिष्टम्, अदनीयं ) तत् निष्कृन्तामि अपसारयामि । अवाश्यायानीति आङ्पूर्वात् "श्यैङ्गतावि"त्येतस्माद(२)वपूर्वाच्च । मिश्रणमर्थः । "वर्णागमो वर्णविपर्ययश्चे"ति प्रथमसकारस्थाने शकारः । छान्दसत्वाद्विसर्गश्च ॥ ८ ॥

यन्मधुनो मधव्यं परम९ रूपमन्नाद्यम् ।

तेनाहं मधुनो मधव्येन परमेण रूपेणान्ना-

द्येन परमो मधव्योऽन्नादोऽसानि ॥ ९ ॥

मधुनः यत् मधव्यं (३)मधुरं परममुत्कृष्टम् अन्नाद्यमिव यथा अन्नाद्यमुपभुक्तं बलादिकमादधाति तथा रूपं स्वरूपं, तेन मधव्येन इत्यत्र द्वितीयार्थे तृतीया । तथा च मधुनः मधव्यं परमम् अन्नाद्यं च रूपम् अहं अशानि (४) अश्नानि भक्षयामि । मधव्यमित्यादि पुनर्विशेषणमादरातिशयार्थम् । अहं किम्भूतः ? परमः उत्कृष्टः । मधव्यः मधुरशीलः । अन्नादः । अन्नमत्तीत्यन्नादः ॥ ६ ॥

वाङ्मऽआस्येऽस्तु ॥ नसोर्मे प्राणोऽस्तु ॥

अक्ष्णोर्मेचक्षुरस्तु ॥ कर्णयोर्मे श्रोत्रमस्तु ॥

बाह्वोर्मे बलमस्तु ॥ ऊर्वोर्मे ओजोऽस्तु ॥

अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु ॥ १० ॥

मे मम मुखे वाक् वचनमस्तु । मे मम नसोः नासिकयोः प्राणः श्वासवायुः अस्तु । मे मम अक्ष्णोः गोलकयोश्चक्षुरिन्द्रियमस्तु । कर्णयोः कर्णशष्कुल्योः श्रोत्रमिन्द्रियमस्तु । बाह्वोर्बलं सामर्थ्यमस्तु । ऊर्वोरोजः तेजः । अङ्गानि शिरःप्रभृतीनि अरिष्टानि आपद्रहितानि भवन्तु मे मम तन्वा शरीरेण सह तनूः शरीरावयवाः अरिष्टानि अरिष्टाः सन्तु । अनेन स्पर्शेन मम मुखाद्यवयवेषु वचनादिशक्तिर्भवतु । आपच्छून्यता भवत्विति वाक्यार्थः ॥ १० ॥

---

(१) एतद्व्याख्यानेनान्यथा पाठः प्रतिभाति । वस्तुतस्तु । नमः श्यावास्यायान्नशन इत्येव-पाठः ( एष च पाठो हलायुधेन धृतः ) तथा चायमर्थः । हेजाठराग्ने ! श्यावास्याय कपिशमुखाय ते तुभ्यं नमः । तेतवअन्नशने अन्नाशने अदनीये मधुपर्के इत्येवमर्थः । इश्वरश्छान्दसः ( पा० ३।१।८५ ) शकन्ध्वादित्वात्पररूपं वा ॥ (२) अत्रपञ्चम्यौषष्ठयर्थेऽनेनकृते । छान्दसत्वाच्चनात्मनेपदमिति च । (३) मधुनि साधु । "तत्रसाधुः" ( पा० ४।४।९८ ) इति यत् । "ओर्गुणः" ( पा० ६।४।१४६ ) इति गुणोऽवादेशः । (४) एतद्व्याख्यानमनुपादेयम् । अन्नादोऽसानिभवानीति व्याख्येयम् ॥

माता रुद्राणां दुहिता वसूनाꣳ स्वसादि-

त्यानाममृतस्य नाभिः ॥ प्रनुवोचं चिकितुषे

जनाय मा गामनागामदितिं वधिष्ट ॥

ममचामुष्य च ( उभयोः ) पाप्मा हतः

ओमुत्सृजत तृणान्यत्तु ॥ ११ ॥

अतोऽहं यजमानश्च चिकितुषे जिज्ञासमानाय शुश्रूषवे जनाय(१)प्रनुवोचम् । पुनः पुनरुक्तवानस्मि । अत्र शुश्रूषवे, नोपदेशिषु महत्त्ववति चिकितुषे चेतनवते इत्युक्तं, किं वदसि ? उक्तवानस्मि-गां मावधिष्ट मा हिंसीः । अत्र "न माङ्योग" इत्यडागमनिषेधः । गां किं भूताम् ? अनागाम् अनपराधाम् । अदितिं दितिः खण्डनं हिंसा सा यस्या नास्ति सा अदितिः । किं च यतः सा रुद्राणां माता वसूनां दुहिता आदित्यानां स्वसा अमृतस्य देवानां भक्षस्य घृतादेः नाभिरुत्पत्तिस्थानं, तथा च एतावतापि सर्वथा अहिंस्येति भावः । मम चार्हणीयस्य अमुष्य चार्हणाकर्त्तुः पाप्मा पापं हतः । ओमिति स्वीकारे । अनुपश्चात् उत्सृजत गां, मद्वचनात् मुञ्चतेत्यर्थः । प्रनुवोचमित्यत्र नुशब्द उत्सृजतेत्यत्रान्वेतीति छान्दसत्वादकारलोपः । तदनन्तरं तृणान्यत्तु मुक्ता सती तृणानि खादतु । अत्राशंसा वाक्यार्थः ॥ ११ ॥

( अथ वासःपरिधापनमन्त्राः )

जरां गच्छ परिधत्स्व वासो भवाकृष्टीनाम-

भिशस्तिपावा । शतं च जीव शरदः सुवर्चा

रयिं च पुत्राननुसँव्ययस्वायुष्मतीदं

परिधत्स्व वासः ॥ १२ ॥

हे आयुष्मति ! कन्यके ! जरां गच्छ ( मया सह ) चिरजीविनी भवेत्यर्थः । वासः परिधत्स्व वस्त्रं परिधेहि । वस्त्रविमुक्ता मा कदाचिदपि भवेत्यर्थः । आकृष्टीनां भव(२) आकृष्टी भव । प्रथमायां षष्ठी, आकृष्टी

---

(१) एतत्प्रतीकधारणं पुनः पुनरित्यादि व्याख्यानं पुनश्चानुशब्दमुपादाय व्याख्यानमिति चित्रं प्रतिभाति । वस्तुतस्तु-एवंभूतेयं गौरिति तामुपस्थाय वितर्क्य ब्रवीति-अहं प्रवोचम् । प्रब्रवीमि । नुर्वितर्के । छन्दसि-"व्यवहिताश्चे"ति ( पा० १।४।८२ ) प्रेत्यस्य व्यवहित प्रयोगः । वर्त्तमाने लुङ् ( पा० ३।४।६ ) "बहुलं छन्दस्यमाङ्योगेऽपी" ( पा० ६।४।७५) इत्यड-भावः । "अस्यतिवक्ती"ति (पा० ३।१।५२) च्लेरङि "वच उम्" ( पा० ७।४।२० ) इत्युमागमः ।

(२) वस्तुतस्तु-आकृष्यन्ते कामादिभिरित्याकृष्टयः कामाद्युपहतमनस्का मनुष्यास्तेषाम्मध्ये

मनोहरा। अभिशस्तिपावा। अभिशस्ति शयनं तत्र पावा पवित्रा भव। किञ्च शरदः वर्षाणां शतं जीव। किम्भूता? सुवर्चाः शोभनदीप्तियुक्ता। किञ्च रयिं धनम् अनुसंव्ययस्व संवृणु धारयेत्यर्थः। न केवलं धनं, पुत्रांश्च धारय। अत्राप्याशंसैव वाक्यार्थः॥ १२॥

या ऽअकृन्तन्नवयन्या ऽअतन्वत। याश्च देवीस्त-
न्तूनभितो ततन्थ तास्त्वा देवीर्जरसे सँव्व्यय-
स्वायुष्मतीदं परिधत्स्व वासः॥ १३॥

हे आयुष्मति! या देवीर्देव्यस्तन्तून् अकृन्तन् कर्त्तितवत्यः। याश्च तन्तून् अवयन् ऊतवत्यः। याश्च अतन्वत विस्तारितवत्यः। याश्च ततन्थ तेनुः विस्तारितवत्यः। अभितः सर्वतः ता देवीर्देव्यस्त्वा त्वां संव्ययस्व संव्ययन्तु परिधापयन्तु, अर्थाद्वासः। तथा सति त्वं च इदं वासः परिधत्स्व। किमर्थं? जरसे दीर्घायुष्ट्वाय। अवयन्निति "वेञ् तन्तुसन्ताने" इत्यस्य। देवीरिति प्रथमा बहुवचने रूपं, "वा छन्दसी"ति दीर्घत्वम्। ततन्थेति "तनु विस्तारे" इत्यस्य लिटि। संव्ययस्वेति "तिङां तिङो भवन्ती"ति प्रथमपुरुषबहुवचने मध्यमपुरुषैकवचनम्॥ १३॥

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टि-
रस्मि॥ शतं च जीवामि शरदः पुरूची
रायस्पोषमभिसँव्व्ययिष्ये॥ १४॥

अहं परिधास्यै परिधानं करोमि। यशोधास्यै कीर्त्तिं धारयामि। हेतुहेतुमद्भावो बोद्धव्यः। अनेन परिधानेन यशो भविष्यतीत्यर्थः। किञ्च अनेन परिधानेन शरदः वर्षस्य (१)शतं जीवामि। कथम्भूतः? पुरूची। पुरुभिर्बहुभिःपुत्रधनादिभिरुचः समवायः। "उच समवाये" (दि० प०) घञर्थे कः। सोऽस्यास्तीति, मत्वर्थे इनिः। रायस्पोषम् धनवृद्धिकरम्। एतावद्भिः प्रयोजनैः। अभिसंव्ययिष्ये अभि सर्वतोभावेन सन्धारयिष्यामीत्यर्थः। किं च दीर्घायु(२)त्वाय चिरञ्जीवित्वाय जरदष्टिः। वृद्धोऽस्मि भवामि। "अनेने"ति शेषः, सम्यग्व्ययिष्ये आवरणं करिष्यामीत्युपसंहारः। पुनः पुनरुद्भेद आदरातिशयार्थः। रायस्पोषमिति "सुपां (३)सुपो भवन्तीति" चतुर्थ्या द्वितीया। संव्ययिष्ये "व्येञ् संवरणे" इत्यस्य रूपम्॥

---

अभिशस्तिपावा अभिशस्तिरभिशापोऽपवादस्तस्या आत्मानं मां च पातीत्यभिशस्तिपावा। रक्षणार्थाद्वनिप् (पा० ३।२।७२) कर्त्तरि॥ (१) शतं शरदः। शतवर्षाणीति व्याख्येयम्। (२) "आयुर्जीवितकालो ने"त्यमरे उकारान्तोऽप्ययमस्ति। (३) एतद्व्याख्यानमनादेयम्। द्वितीयान्ततया व्याख्यातत्वात्। अत्र "षष्ठ्याःपति पुत्रे०" (पा० ८।३।५३) स्यादिना सत्वं बोध्यम्।

यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ॥

यशो भगश्च माविदद्यशो मा प्रतिपद्यताम् ॥ १५ ॥

द्यावापृथिवी-द्यावापृथिव्यौ मा मां "छादयेताम्" इतिक्रियापदमध्याहर्त्तव्यम् । केन ? यशसा । किंच इन्द्राबृहस्पती यशसा माच्छादयेताम् । किं च यशः मा माम् अविदत् प्राप्नोतु(१) । न केवलं, यशो, भगश्च सौभाग्यं च मा अविदत् । किं च यशः मा प्रतिपद्यताम् । 'मत्तो माऽपगच्छतु(२) ॥ १५ ॥

समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ ।

सम्मातरिश्वासन्धाता समुदेष्ट्री दधातु नौ ॥ १६ ॥

हे कन्यके ! विश्वेदेवा नौ आवयोः हृदयानि (३)हृदये समञ्जन्तु(४) सं सम्यग्भूता अनुकूलाः आपः पानीयानि च समञ्जन्तु । नौ हृदय इत्यनेन सम्बन्धः । पानीयेनोत्सर्गपूर्वकं दत्तं यत्तत्तव हृदयसम्मतं भवतु । तथा सं सम्यग्भूतोऽनुकूलः मातरिश्वा वायुः आवयोः प्राणभूतः नौ (५) आवां सन्दधातु संयोजयतु । तथा धाता प्रजापतिः नौ आवां सन्दधातु । तथा उदेष्ट्री इच्छाकर्त्री देवता कामदेवः नौ आवां सन्दधातु । अत्र उदे(६)ष्ट्रीति "इषु इच्छायामि"त्यस्य उत्पूर्वस्य तृचि छान्दसत्वादिट् न भवति । देवताभिप्रायेण ङीप् स्त्रीत्वविवक्षायाम् ॥ १६ ॥

अथ कन्यादाने प्रतिग्रहमन्त्रौ ।

कोऽदात्कस्माऽअदात्कामोऽदात्कामायादात् ।

कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ १७ ॥

कः अदात् दत्तवान् ? कस्मै अदात् ? इति अयं प्रश्नः । अत्रोत्तरं कामः अदात् कामाय अदात् । यतः कामो दाता कामः प्रतिगृहीता । अतएव हे काम ! अभिलाष ! एतद्देयं वस्तु कन्यादिकं ते तव । कामशब्देनेच्छाभिधीयते यतः इच्छायामेव सत्यां दीयते प्रतिगृह्यते च । तथा च तत्प्राधान्यप्रतिपादनाय दातृत्वप्रतिगृहीतृत्वं च कामस्यैवोक्तं तेन कामस्तुतिरत्र वाक्यार्थः ॥ १७ ॥

द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ॥ १८ ॥

व्यक्तार्थमेतत् । हे कन्यके ! तवायं पिता आकाशमिव । वृक्षादिद्वारा

(१) "विद्लृ लाभे" लुङ् लोडर्थे । (२) प्रतिरुन्नापार्थे । मयि सर्वदा तिष्ठत्वित्यर्थः । (३) बहुत्वं व्यत्ययेन । (४) गुणातिशयाधानेन संस्कुर्वन्तु (५) वस्तुतस्तु षष्ठ्या द्विवचनमेवेदं । हृदयैक्यकरणमनेनाभिप्रेयते । (६) वस्तुतस्तु उदत्र चार्थे, देष्ट्री धर्मोपदेष्ट्री वाक् चेत्यर्थः । अत्र दिशतिरूपोपसृष्टार्थे वर्तते । ततस्तृच् । ङीप् । पलोपेनोपदेष्ट्रीत्यप्यर्थमाहुः ।

सर्वोपकारकं यथाकाशं तद्वत्पितापि । अहं पृथिवीव यथापृथिवी सर्वाश्रया तथाऽहमपि त्वदाश्रय इत्यर्थः ॥ १८ ॥

अथ विवाहमन्त्राः

यदैषि मनसा दूरं दिशोऽनु पवमानो वा ।

हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु ॥ १९ ॥

हे कन्ये ! यत् मनसा दूरं एषि गच्छसि पितृकुलतो बहिर्भूता सती । कुत्र केन नीयत ? इति मनसा सोत्कण्ठा भवसीति यावत् । तत्र दिशः प्राच्यादिदिशः । पवमानो वायुः । वा शब्दः (१)समुच्चये । हिरण्यपर्णः हिरण्यं पर्णं पतनं रथो यस्य सः हिरण्यपर्णः सूर्यः वैकर्णः विकर्णे कोटरे तिष्ठति वैकर्णः अग्निः स ते दिग्वायुसूर्याग्नयः त्वां मन्मनसां करोतु मद्गतहृदयां कुर्वन्तु । वचनव्यत्ययोऽत्रार्षः । अत्र कन्यकोत्कण्ठानिवृत्तिः स्वहृदयैक्याशंसा वाक्यार्थः ॥ १६ ॥

अघोरचक्षुरपतिघ्न्येऽधि शिवा पशुभ्यः सुमनाः

सुवर्च्चाः । वीरसूर्देवकामा स्योना शन्नो भव

द्विपदे शं चतुष्पदे ॥ २० ॥

हे कन्यके ! अपतिघ्नी एधि भव । किम्भूता त्वम् ? अघोरचक्षुः अघोरं सौम्यं चक्षुः स्वपतिविषये यस्याः सा तथा । किं च पशुभ्यः गवादिभ्यः शिवा कल्याणकरी सुमनाः शोभनमनाः सुवर्चाः शोभनदीप्तिः वीरसूः वीरप्रसवित्री देवकामा देवं देवनं क्रीडनं कामयत इति देवकामा स्योना सुखिनी द्विपदे मनुष्ये चतुष्पदे पशौ शं कल्याणकरी नः अस्माकं भवेति सर्वत्र सम्बध्यते ॥ २० ॥

सोमः प्रथमो विविदे गन्धर्वो विविदऽउत्तरः ।

तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ २१ ॥

---

(१) वस्तुतस्त्विवार्थे । "ववायथातथैवैवंसाम्ये" इत्यमरात् । अत्र "पित्राप्रत्तामादाय निष्क्रामति यदैषीत्यादिने" (पा० २।४)ति गृह्यसूत्रम् । वरः कन्यां वस्त्रान्ते गृहीत्वाऽनेन बहिः शालायां स्थापितमग्निं प्रति गृहमध्यात्पितुर्निष्क्रामति तत्रायं सुयोजनीयः । तेन दिशःअनु—लक्ष्यीकृत्य पवमानो वायुरिव । यत्—यतः मनसानुकूलया चित्तवृत्तया दूरं पितृगृहात्पतिगृहम् एषि गच्छसि चित्तस्य वायुवच्चञ्चलत्वात् । स वायुस्त्वा त्वां मन्मनसां मदेकनिष्ठचित्ताङ्करोतु । किम्भूतः ? हिरण्यपर्णः । हितरमणम् ऊर्जस्तद्वा पर्णं पतनं गमनं यस्य सः । तथा वैकर्णः विशिष्टः कर्णं आश्रयो यस्य स विकर्णः । स एव वैकर्णः । स्वार्थे अण् । वायोः स्वकारणाकाशगुणसम्बन्धाद्विशिष्टाश्रयत्वम् । अत्र वायुः हिरण्यपर्णः सुवर्णपक्षः । वैकर्णः विकर्णाया विनताया अपत्यं गरुत्मांश्चेति गदाधरभाष्यम् ॥

कन्यास्तुतिमाह—हे कन्ये ! त्वां सोमः चन्द्रः प्रथमः प्रथमं (१) जन्मसमय एव विविदे लब्धवान् । उत्तरः द्वितीयः गन्धर्वस्त्वां विविदे लब्धवान् । तृतीयस्त्वाम् अग्निः पतिर्विविदे । तथा च प्रथमं सोमगन्धर्ववह्निभिः स्त्रियः भुक्ताः । अतएव "सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरम् । पावकः सर्वभक्षि-( मेध्य )-त्वं तेन शुद्धा हि योषितः" इत्यभिप्रायः । तथा ते तव तुरीयः पतिर्मनुष्यजाः । (२) अहमित्यर्थः ॥ २१ ॥

सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये ॥

रयिं च पुत्राँश्चादादग्निर्मह्यमथो ऽइमाम् ॥ २२ ॥

तत्किमेतेषामेव स्वत्वविषय ? इत्याशङ्क्याह—सोमः इमां गन्धर्वायाददत् । गन्धर्व इमामग्नये अददत् । अग्निश्च अथाऽनन्तरमिमां मह्यमदात् दत्तवान केवलमिमां किं तु रयिं च धनमपि पुत्रांश्च पुत्रानपि मह्यमग्निरदाद्दत्तवान् ॥ २२ ॥

सा नः पूषा शिवतमामैरय सानऽऊरू उशती विहर ॥ यस्यामुशन्तः प्रहराम शेपं यस्यामु-कामा बहवो निविष्ट्यै ॥ २३ ॥

सा इत्थंभूता सर्वलोकसाक्षिणी देवता ( सूर्यः ) इमां नोऽस्मान् प्रति मैरय मा ईरयतु (३) त्यजतु । किन्तु अनुरक्तां करोतु । किम्भूता ? पूषा वृद्धिकरी । शिवतमा कल्याणतमा । किं च हे वधु ! यस्याम् त्वयि उशन्तः कामयमानाः वयं शेपं (४) शिश्नम् इन्द्रियं प्रहराम क्षिपाम । सा त्वम् ऊरूद्वयं विहर विवृतं कुरु प्रसारय । त्वं किम्भूता ? नोऽस्मान् उशती इच्छन्ती "वश कान्तौ" इत्यस्य उशन्त इति उशती इति च । किंच यस्यामु यस्यामेव(५) कामाः बहवः अभिलषिता(६)निविष्ट्यै निवेशिताः(७) ॥ २३ ॥

सर्वप्रायश्चित्तमन्त्राः स्नानप्रकरणे लिखिताः ॥

---

( १ ) द्वितीयार्थे—प्रथमा । वस्तुतस्तु प्रथम इत्यस्य पतिरित्यनेन सम्बन्धात्प्रथममित्यार्थिकोऽर्थः । पतिः पालकः । स हि सर्वासामोषधीनामधिपतिः श्रूयते । स चास्यामन्नादोषधिरसदानेनायं संवर्धयति । उत्तरो द्वितीयः पतिः पालको गन्धर्वः । शुभवाग्दानात् । अग्निश्च सर्वमेध्यत्वादिदानेन पतिः पालकः इत्यर्थः ॥ ( २ ) अत्र "जनसनखनक्रमगमोविट्" ( पा० ३।२।६९ ) इति जनेर्विटि "विड्वनोरनुनासिकस्यात्" ( पा० ६।४।४१ ) इति नस्यात्त्वम् ॥ ( ३ ) मात्राटौ दर्शनं विभक्त्यदर्शनञ्च छान्दसम् । वस्तुतस्तु सा पूर्वोक्तसकलगुणविशिष्टा प्रसिद्धा वा पूषा देवता ( सूर्यः ) इमां वधूं नोऽस्मान्प्रति ऐरय ईरयतु प्रेरयतु अनुरक्तां करोतु । कथम्भूतामिमां ? शिवतमाम् कल्याणगुणविशिष्टाम् । इत्येवमर्थः । (४) "ये सान्तास्तेऽदन्ताः" इति न्यायाददन्तताऽत्र बोध्या । कोशे तु "मेढ्रो मेहनशेफ(प)सी" । इत्युक्तम् । (५) उत्तरैवार्थोऽव्ययम् । (६) धर्म—पुत्र—धन—सुखरूपाः । (७) एत-

### अथ राष्ट्रभृतोमन्त्राः (१२)

ऋताषाड् ऋतधामाग्निर्गन्धर्व्वः॥

स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा व्वाट् ॥ २४ ॥

योऽग्निर्गन्धर्वः गन्धर्वरूपः तस्मै अग्नये स्वाहा वाट् यत्स्वाहा कृतं सुहुतं तत् वाट् सुष्ठु वहत्वित्यर्थः। किम्भूतः ? ऋताषाट् सत्यसहकृतः (१)। पुनः किम्भूतः ? ऋतधामा-ऋतं सत्यं धाम स्थानं यस्य स ऋतधामा। किमर्थं स्वाहा क्रियत इत्याह— इदं ब्रह्म (२) ज्ञानं, क्षत्रं वीर्यं च स नः पातु—रक्षतु इति ॥ २४ ॥

ऋताषाडृतधामाग्निर्गन्धर्व्वस्तस्यौष-

धयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा ॥ २५ ॥

योऽयमग्निर्गन्धर्वरूपस्तस्याग्नेः गन्धर्वस्य ओषधयो व्रीह्यादयः अप्सरसः। गन्धर्वाणामप्सरसो भवन्ति। किम्भूताः ? मुदो नाम मुदनामान इत्यर्थः। ताभिः सर्वे मोदन्त इति मुदः। ताभ्यः स्वाहा सुहुतं भवतु। तथा च ता अप्यस्माकं ज्ञानं वीर्यं च रक्षन्त्विति वाक्यार्थः॥२५॥

सꣳहितो व्विश्वसामा सूर्य्यो गन्धर्व्वः॥

स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा व्वाट् ॥ २६ ॥

सूर्यो गन्धर्वः संहितः दिवसं रात्रिं च सन्दधातीति संहितः। विश्वसामा सर्वसामवेदमयः। अन्यत् समानम् ॥ २६ ॥

सꣳहितो व्विश्वसामा सूर्य्यो गन्धर्व्वस्तस्य मरी-

चयोऽप्सरसऽआयुवो नाम ताभ्यः स्वाहा ॥ २७ ॥

तस्य सूर्यस्य गन्धर्वस्य मरीचयो रश्मयः अप्सरसः आयुवो नाम ताभ्यः। आयुवोनाम आयुवो नामभ्यः। आयुः उवन्ति योजयन्तीति आयुवः। अन्यत्समानम् ॥ २७ ॥

सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व्वः॥ स नऽइदं

ब्रह्म क्षत्रं पातु तस्मै स्वाहा व्वाट् ॥ २८ ॥

यश्चन्द्रमा गन्धर्वरूपः सुषुम्णः सुषुम्णनामा सूर्यरश्मिश्च। अन्यत्समानम् ॥ २७ ॥

---

द्व्याख्यानमनाकरम्। एतत्प्रयोजनवचनतयाभाष्यकृद्भिर्व्याख्यातम्। किमर्थम् शेषःप्रहरामि ? निविष्टयै अग्निहोत्राद्युपासनयाऽन्तःकरणशुद्धिद्वारा सायुज्यमुक्तये। अयमर्थः। निवेशोनामसुखम्। तदिह निरतिशयंमोक्षलक्षकम्वेदितव्यमिति॥ (१) वस्तुतस्तु सत्यमेव सहते असत्ये कुपितो भवतीत्येवमर्थः सर्वत्र। (२) ब्रह्म ब्राह्मणजातिम्। क्षत्रं क्षतोनाशात्त्रायत इति क्षत्रियजातिम्। इत्यन्य

सुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व्वस्तस्य नक्षत्राण्य-

प्सरसो भेकुरयो नाम ताभ्यः स्वाहा ॥ २९ ॥

तस्य चन्द्रमसः नक्षत्राण्यप्सरसः । किम्भूता ? भेकुरयो नाम(१) २९

इषिरो विश्वव्यचा वातो गन्धर्व्वः ॥

स नऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३० ॥

यो वातो गन्धर्वः इषिरः गमनस्वभावः विश्वव्यचाः सर्वगतः । अपरं समानम् ॥ ३० ॥

इषिरो विश्वव्यचा वातो गन्धर्व्वस्तस्यापोऽ

अप्सरसऽऊर्ज्जो नाम ताभ्यः स्वाहा ॥ ३१ ॥

वातः गन्धर्वस्तस्याप्सरसः आपः जलानि । ऊर्जो नामन्यः ॥ ३१ ॥

भुज्युः सुपर्णो यज्ञो गन्धर्व्वः ॥ स नऽइदं

ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३२ ॥

यो यज्ञो गन्धर्वः । किम्भूतः ? भुज्युः । भुनक्ति पालयति सर्वाणि भूतानि इति भुज्युः । सुपर्णः शोभनगतिरिति यावत् । अन्यत्समानम् ॥३२॥

भुज्युः सुपर्णो यज्ञो गन्धर्व्वस्तस्य दक्षिणाऽ-

अप्सरसस्तावा नाम ताभ्यः स्वाहा ॥ ३३ ॥

यः यज्ञो गन्धर्वस्तस्याप्सरसो दक्षिणाः । किम्भूताः ? स्तावा नाम दक्षिणायां दत्तायां यज्ञस्तोतव्यो भवतीत्यभिप्रायः । अपरं समानम् ॥३३॥

प्रजापतिर्व्विश्वकर्म्मा मनो गन्धर्व्वः ॥ स नऽ-

इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ॥ ३४ ॥

यन्मनो गन्धर्वः प्रजापतिः प्रजानामीश्वरः विश्वकर्मा विश्वकर्मयुक्तस्तद्व्यापारेण विश्वस्य निर्माणात् ॥ ३४ ॥

प्रजापतिर्व्विश्वकर्म्मा मनो गन्धर्व्वस्तस्य

ऋक्सामान्यप्सरसऽएष्टयो नाम ताभ्यः स्वाहा ॥ ३५ ॥

तस्य मनसो गन्धर्वस्याप्सरसः ऋक्सामानि । ऋचः सामानि च एष्टयो नाम अतिशयेच्छानाम । यासाम् आइष्टिः अतिशयेच्छा । तथा च पुत्रादीच्छया यागादिमन्त्रप्रयुक्तपुत्रादिः सम्पद्यत इत्यभिप्रायः ॥ ३५ ॥

अथ जयासंज्ञकाश्चित्तमित्यादित्रयोदश मन्त्राः । यथा—

---

आचक्षन्ते । (१) भाःकुर्वन्तीत्यर्थे पृषोदरादित्वात्साधुः ॥

ओं चित्तञ्च स्वाहा (१) ओं चित्तिश्च स्वाहा (२) ओं आकूतञ्च स्वाहा (३) ॐ आकूतिश्च स्वाहा (४) ॐ विज्ञातञ्च स्वाहा (५) ॐ विज्ञातिश्च स्वाहा (६) ॐ मनश्च स्वाहा (७) ॐ शक्वरीश्च स्वाहा (८) ॐ दर्शश्च स्वाहा (९) ॐ पौर्णमासञ्च स्वाहा (१०) ॐ बृहच्च स्वाहा (११) ॐ रथन्तरञ्च स्वाहा (१२) इति ॥ ३६ ॥

तत्र शेषपठितप्रजापतिर्जयानिन्द्रायेत्यादिमन्त्रे मह्यं प्रजापतिर्जयं ददात्विति आशंसा भविष्यति सैवात्रापि मन्त्रे चकारेण (१) समुच्चिता। चित्तं (२) ज्ञानं "मह्यं ददात्वि"ति शेषः। एवं सर्वत्र। चित्तिः परिच्छेदः। आकूतं चाभिमुख्यम्। आकूतिश्चात्मनो धर्मविशेषो येन मनसः प्रेरणं क्रियते। विज्ञातं ज्ञानम्। विज्ञातिश्च विज्ञातार्थः। मनश्च प्रसिद्धम्। शक्वरी च ऋक् प्रसिद्धा। दर्शश्च प्रसिद्धः। अमावस्या प्रसिद्धा। पौर्णमासं प्रसिद्धम्। बृहद्रथन्तरं च सामविशेषः ॥ ३६ ॥

प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः

पृतनाजयेषु ॥ तस्मै विशः समनमन्त

सर्व्वाः सऽउग्रः स ऽइहव्यो बभूव स्वाहा (१३) ॥ ३७ ॥

प्रजापतिः परमेश्वरः। इन्द्राय जयान् जयकर्तृकान्मन्त्रान् प्रायच्छत् दत्तवान्। किम्भूताय? वृष्णे वृषनाम्ने अभिमतार्थवर्षकाय। प्रजापतिः किम्भूतः? पृतनाजयेषु असुरसेनाविजयाख्यकर्मसु उग्रः विपक्षतेजोऽभिभावी। यतश्च प्रजापतिः उग्रो बभूव सर्वतेजोऽभिभावी बभूव। स इ सच प्रजापतिः हव्यो हव्यद्रव्यवाहो बभूव। एतावद्गुणविशिष्टः प्रजापतिरतो जयं दत्तवान् इति। कथं दत्तवान्? हि यतः कारणात् तस्मै प्रजापतये सर्वा विशः प्रजाः समनमन्त सम्यक् प्रणामं कृतवत्यः। प्रजापतिं स्तौति प्रजापतिर्मह्यं जयं ददात्विति तात्पर्यम् ॥ ३७ ॥

अथाभ्यातानाख्या अष्टादशमन्त्राः १८

अग्निर्भूतानामधिपतिः समावत्वस्मिन्

ब्रह्मण्यस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मण्यस्यां देवहूत्याᳫं स्वाहा ॥ ३८ ॥

---

(१) वस्तुतस्तु चकारोऽप्यर्थे। प्रजापतिर्यथेन्द्राय जयान्प्रायच्छत्तथा चित्तादि अपि मह्यम्प्रयच्छतु इति क्रियां विपरिणमय्योत्तरत्र (१३) मन्त्रे सम्बन्धः। अत एवैषां जयामन्त्रत्वाम्नायः। तथा च तैत्तिरीया श्रुतिः "देवासुराः संयत्ता आसन् स इन्द्रः प्रजापतिमुपाधावत्स तस्मा एताञ्जयान्प्रायच्छत्तानजुहोत्ततो देवा असुरानजयँस्तज्जयानाञ्जयात्वमि"ति, अत्र प्रजापतिर्जयानित्येकेनापि जयालिङ्गेन "छत्रिणो यान्ती"ति न्यायेन त्रयोदशमन्त्रा जया इत्युच्यन्ते॥ (२) वस्तुतस्तु-चित्तं ज्ञानाधारं हृदयं "चित्तन्तु चेतो

अग्निरिति । अग्निर्भूतानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन् क्षत्रे वीर्ये, (१) अस्याम् आशिषि आशास्ये (२) अर्थे अस्यां पुरो धायाम्(३) अस्मिन् कर्मणि विवाहे अस्यां देवहूत्यां देवाह्वाने हूतिराह्वानं तस्यां स्वाहा सुहुतमस्तु ॥ ३८ ॥

इन्द्रो ज्येष्ठानामधिपतिः ॥ ३९ ॥

स मावत्वस्मिन्नित्यादि वाक्यानि स्वाहान्तानि वक्ष्यमाणेषु सप्तदशसु मन्त्रेषु योज्यानि । इन्द्रो ज्येष्ठानामधिपतिः । अन्यत्समानम् ॥ ३९ ॥

यमः पृथिव्या इत्यादि ॥ ४० ॥

वायुरन्तरिक्षस्याधिपतिरित्यादि ॥ ४१ ॥

सूर्यो दिशोऽधिपतिरित्यादि ॥ ४२ ॥

चन्द्रमा नक्षत्राणामधिपतिरित्यादि ॥ ४३ ॥

वृहस्पतिर्ब्रह्मणोऽधिपतिरित्यादि ॥ ४४ ॥

मित्रः सत्यानामधिपतिरित्यादि ॥ ४५ ॥

वरुणोऽपामधिपतिरित्यादि ॥ ४६ ॥

समुद्रः स्रोत्यानामधिपतिरित्यादि ॥ ४७ ॥

स्रोत्यानां नदीनाम् ॥ ४७ ॥

अन्नꣳ साम्राज्यानामधिपतीत्यादि ॥ ४८ ॥

साम्राज्यानामैश्वर्य्याणाम् ॥ ४८ ॥

सोमऽओषधीनामधिपतिरित्यादि ॥ ४९ ॥

सविता प्रसवानामधिपतिरित्यादि ॥ ५० ॥

रुद्रः पशूनामधिमातिः ॥ ५१ ॥

त्वष्टा रूपाणामधिपतिः ॥ ५२ ॥

विष्णुः पर्वतानामधिपतिः ॥ ५३ ॥

मरुतो गणानामधिपतयः ॥ ५४ ॥

पितरः पितामहाः परेऽवरे ततास्ततामहाः ॥
इह मावन्त्वित्यादि ( १८ ) ॥ ५५ ॥

---

हृदयम्" इत्यमरात् । चित्तिस्तत्रत्या चेतना । आकूतञ्चाभिमतम् । आकूतिश्चाभिमानः । विज्ञात शिल्पादिज्ञानम् । विज्ञातिरपरोक्षम् । (१) वस्तुतस्तु—ब्रह्मकर्म्मणि होमादौ । क्षत्रे—क्षत्रकर्म्मणि प्रजापालनादौ । इत्यर्थः । (२) पुत्रादिसुखकामनायाम् । ब्राह्मणैः सम्पादितेष्टाशंसने वा । यथाहुः "आयुरारोग्यमैश्वर्य्यंयशोविद्याबलङ्कुलम् । भगवच्चरणे भक्तिरित्यष्टौमन्तुतेऽनिशम्" इति । (३)पुरो·

पितरः पितामहाः । परे प्रपितामहाः । अवरे प्रपितामहात्पूर्वे । ततास्तस्मादपि पूर्वे । ततामहास्ततोऽपि पूर्वे । एवं षट्पुरुषा उक्ताः । बहुवचनं गौरवार्थं ते मामस्मिंल्लोकेऽवन्त्वित्यादि ॥ ५५ ॥

अथ वैवाहिका आज्यहोममन्त्राः ७

अग्निरैतु प्रथमो देवतानाᳬसोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।
तदयᳬराजा वरुणोऽनुमन्यतां यथेयᳬस्त्री पौत्रमघन्न रोदात्स्वाहा ॥५६॥

अग्निरासमन्तादैतु आगच्छतु । देवतानामिन्द्रादीनां प्रथमो मुख्यः । आगतः सन् सोऽग्निः अस्यै अस्याः कन्यायाः प्रजां पुत्रादिकां, मृत्युपाशात् मृत्युबन्धनात् मरणात् मुञ्चतु । तदयं राजा वरुणः अनुमन्यतां स्वीकरोतु । कथं मोचयतु ? यथेयं स्त्री पौत्रमघं पुत्रभवदुःखं प्राप्य न रोदात् शोकं प्राप्य न रोदिष्यति । तथा च वरुणानुमतोऽग्निस्तथा मोचयतु यथा इयं स्त्री पुत्रवियोगदुःखं नानुभविष्यतीति वाक्यार्थः । रोदादिति "रुदिर् अश्रुविमोचने" इत्यस्य लेटि रूपम् ॥ ५६ ॥

इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु
दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता
पौत्रमानन्दमभिविबुध्यतामियᳬस्वाहा ॥ ५७ ॥

गार्हपत्योऽग्निः इमां त्रायतां रक्षतु । तथा अस्यै कन्यायै(१) प्रजां पुत्रादिकां नयतु प्रापयतु । दीर्घमायुश्च नयतु । तथा सति इयम् अशून्योपस्था अवन्ध्या सफलप्रसवा नित्यं भर्तृयुक्ता वा भवतु । तथा जीवतां दीर्घायुषां माताऽस्तु जीववत्सा भवतु इत्यर्थः । तथा पौत्रं पुत्रभवमानन्दं सुखमभिविबुध्यतां (२)सर्वभावेनानुभवतु ॥ ५७ ॥

स्वस्तिनोऽअग्ने दिवआ पृथिव्या विश्वानि धेह्य-
यथा यजत्र । यदस्यां महि दिवि जातं प्रशस्तं
तदस्मासु द्रविणं धेहि चित्रᳬस्वाहा ॥ ५८ ॥

हे यजत्र ! यजन्तं त्रायत इति यजत्र । अग्ने ! नोऽस्माकं स्वस्ति कल्याणानि धेहि धारय । अयथा-अयथाक्रमम् एकदैवेत्यर्थः । कल्याणानि किम्भूतानि ? विश्वानि सकलानि । दिवि (३)पृथिव्यां च यानि कल्याणानि

---

ग्रेस्थितायाङ्कन्यकायाम् । "स्यात्पुरः पुरतोऽग्रतः" इत्यमरः । (१) षष्ठ्यर्थेऽत्र चतुर्थी पूर्ववद्बोद्धव्या । (२) विशिष्टतया बुध्यतां निद्रासुखेच्छान्त्यजत्वा जागत्वित्यन्ये ॥ (३) दिव आ इति मन्त्रांशस्यायमर्थो न मनोरमः प्रतिभाति । किन्तु दिवो द्युलोकात्स्वर्गादा पृथिव्याः पृथिवीं यावत् । आङत्राभिविधौ । यत् महि यो महिमा तत् तम् अस्मासु धेहि स्थापय इत्येवं, यतस्त्वं सर्वप्रत्यक्षदर्शी अतः नोऽस्माकं विश्वानि सर्वाणि कर्माणि अयथा अन्यथाकृतानि स्वस्ति सम्पूर्णानि यथा स्युस्तथा धेहि—

तानि सर्वाणीत्यर्थः । किं च यत् अस्यां महि मह्यां दिवि स्वर्गे जातमुत्पन्नं प्रशस्तं श्लक्ष्णं द्रविणं धनं तद् अस्मासु धेहि । किम्भूतं? चित्रं नानाविधं गोहिरण्यादि ॥ ५८ ॥

सुगन्नु पन्थां प्रदिशन्नऽएहि ज्योतिष्मद्धेह्यजरन्नऽआयुः ।

अपैतु मृत्युरमृतन्मऽआगाद्वैवस्वतो नोऽअभयं कृणोतु स्वाहा ॥५९॥

हे अग्ने ! नः अस्माकं पन्थां पन्थानं(१) प्रदिशन् उपदिशन् एहि आगच्छ नु इत्यनुनये । पन्थानं किम्भूतं? सुगं सुखेन गम्यत इति सुगस्तम् । किञ्च नोऽस्माकमायुर्जीवनम् धेहि देहि । किंतत्? अजरम् जरारोगादिरहितम्(२) । पुनः किम्भूतम? ज्योतिष्मत्–प्रकाशकञ्च । ऊर्जस्करमिति तदर्थः । किं च त्वय्यागते नोऽस्माकं मृत्युरपैतु अपगच्छतु तथा अमृतं मोक्षः मे मम आगात् आगच्छतु(३) । तथा वैवस्वतः यमः नोऽस्माकम अभयं (४)कृणोतु करोतु । इति आशंसावाक्यार्थः ॥ ५९ ॥

परं मृत्योऽअनु परेहि पन्थां यस्तेऽअन्यऽइतरो

देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि

मा नः प्रजाꣳ रीरिषोमोत वीरान्त्स्वाहा ॥ ६० ॥

हे मृत्यो ! परं पन्थाम् उत्कृष्टं पन्थानम् अनु लक्ष्यीकृत्य परेहि—(५) अपगच्छ । ते तव यः हिंसातोऽन्योऽहिंसात्मक इत्यर्थः । तं पन्थानं परेहि परावृत्य गच्छ । पन्थाः किम्भूतः? देवयानात् इतरः उत्कृष्टः । किं च ते तव एतदेव ब्रवीमि । ते किम्भूताय? चक्षुष्मते सकलव्यवहारं दृष्टवते । शृण्वते सकलव्यवहारं श्रुतवते । किं ब्रवीमि? नोऽस्माकं प्रजां मा रीरिषः मा हिंसीः । उत–अपि च वीरान् पुत्रान् मा रीरिषः मा हिंसीः । अनयाऽऽहुत्या तुष्टस्त्वं रक्षां कुर्वित्यर्थः । रीरिष इति "रिष हिंसायामि"त्यस्य धातोः । लुङि प्रथमपुरुषैकवचने माङ्योगादडागमो न भवति । वीरशब्देन पुत्रोऽभिधीयते इत्यत्र "पुत्रो वै वीर" इति श्रुतिः प्रमाणम् ॥ ६० ॥

अर्यमणं देवं कन्याऽअग्निमयक्षत ॥ स नोऽअर्यमा

---

अनुकूलानि कृत्वा स्थापय । इति ॥ (१) अर्चिरादिमार्गम् । (२) अजरमित्यग्निविशेषणं वा । आयुः पुष्यन्निति तदर्थः । (३) लोडर्थे लुङत्र । (४) त्वत्सम्बन्धेन पापाभावाद्दुःखहेतुभयाभावं कृणोतु करोतु । "कृवि हिंसाकरणयोश्च" (भ्वा० ५०) लोट् । "धिन्विकृण्व्योरच" (पा० ३।१।८०) इत्यकारान्तादेशो धातोरुप्रत्ययश्च । अकारलोपे तस्य स्थानिवत्त्वाद्गुणाभावः । अत्रासन्धिः प्रकृतिभावात् । (पा० ६।१।११५) बोध्यः ॥ एवमग्रेऽपि ॥ (५) यद्वा परा पराङ्मुखो भूत्वा परमन्यं पन्थां पन्थानम् अन्विहि अनुगच्छ । तमेव दर्शयति य इत्यादिना ॥ इतरस्तुच्छः । "इतरस्त्वन्यनीचयोः"

देवः प्रेतो मुञ्चतु मा पतेः स्वाहा ॥ ६१ ॥

इयं कन्या अर्यमणं देवं सूर्यम् अयक्षत (१) पूजयति । किम्भूतं देवम् ? अग्निम् अग्निस्वरूपं, किमर्थं पूजयति ? स अर्यमा देवः इतः पितृकुलात् नोऽस्मान् प्रमुञ्चतु-प्रकर्षेण मोचयतु । पतेः पत्युः सकाशात् मा प्रमुञ्चतु नो प्रमोचयतु । अतः पतिवियोगः कदाचिदपि नो भवत्वित्यर्थः ॥ ६१ ॥

इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मा-

नस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ॥ ६२ ॥

इयं नारी उपसमीपे 'पत्यु'रिति शेषः । ब्रूते वदति । किं कुर्वती ? अग्नौ लाजान् आवपन्तिका आवपन्ती प्रक्षिपन्ती । किं ब्रूते ? मे-मम पतिरायुष्मानस्तु दीर्घायुरस्तु । तथा मम ज्ञातयः एधन्तम् एधन्तां वृद्धियुक्ता भवन्त्विति । एधन्तमिति छान्दसं ह्रस्व (२) त्वम् ॥ ६२ ॥

इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव ।

मम तुभ्य च संवननं तदग्निरनुमन्यतामियँ स्वाहा ॥ ६३ ॥

हे पते ! अहमिमान् करस्थान् लाजानग्नावावपामि-प्रक्षिपामि किम्भूतान् लाजान् ? तव पत्युः समृद्धिकरणं समृद्धिकरान् (३) समृध्यर्थमित्यर्थः । अपि च यत् इदं मम तुभ्य तव च संवननं दृढीकरणं(वशीकरणं) तत् अग्निः अनुमन्यताम्-अनुमोदितं करोतु इत्यर्थः । तुभ्येति षष्ठ्यर्थे चतुर्थी ( पा० २।३।६२ वा० ) 'सुपां सुलुगि' ( पा० ७।१।३९ ) त्यादिना विभक्तिलोपः ॥ ६३ ॥

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या

जरदष्टिर्यथासः । भगोऽअर्यमा सविता पुरन्धि-

र्मह्यं त्वाऽदुर्गार्हपत्याय देवाः ॥ ६४ ॥

---

इत्यमरः । देवयानादर्चिरादिमार्गादन्यः पितृयानाख्यः । पुनरावृत्तिश्रुतेस्तुच्छत्वमस्य । (१) वस्तुतस्त्वयमर्थोऽसङ्गतः । अयक्षतेति भूतकालिकबहुवचनान्तक्रियापदश्रुतेः । किन्तु कन्यापठनीयंमन्त्रं वरः पठति तथैवान्यत्रापि सूत्रसम्मतेः । कन्या मत्पूर्वं ( प्रथमं ) देवं कमनीयमग्निमग्निरूपिणम् अर्यमणं सूर्यम् अयक्षत-अयजन् । पूजितवत्यो "योग्यवरलाभाये"तिशेषः । स अर्यमा देवस्ताभिरिष्टो यतोऽतः नः अस्मान् इदानीं परिणीतां मां ( कन्याम् ) "अस्मदोद्वयोश्च" ( पा० १।२।५९ ) इति एकत्वेऽपि न इति बहुवचनम् । यद्वा अयक्षतेति पदवचनव्यत्ययेन वरस्यैवोक्तिरियं कन्याग्निमित्यसन्निबद्धार्थः । इयं कन्या अयक्षत-अयजत् पूर्वं तेन तुष्टः सोऽर्यमा देवः पतेः पत्युर्मत्तइमां नो प्रमुञ्चतु नप्रमोचयतु अन्तर्भावितण्यर्थः । "मानो नाः प्रतिषेधे" इति । (२) एतच्च हलायुधधृतपाठमनुसृत्य । हरिहर-जयराम-गदाधरैस्तु दीर्घान्त पाठ एव धृतः ॥ (३) अत्रलिङ्गवचनव्य-

तव हस्तं गृभ्णामि गृह्णामि । किमर्थं ? सौभगत्वाय सौभाग्याय । यथा च मया पत्या सह जरदृष्टिः आस वृद्धा भवेत्यर्थः । हस्तग्रहणे कथं तवाधिकार इत्याकाङ्क्षायामाह-भग इत्यादि, त्वा त्वां देवाः मह्यम् अदुः दत्तवन्तः । ते के देवाः ? भगः अर्यमा सविता च । किम्भूतां त्वं ? पुरन्धिः पुरन्ध्री गार्हस्थ्याधिकारिणी । किमर्थम् अदुः ? गार्हपत्याय गृह (१)स्वामिनीत्वाय । गृभ्णामीत्यत्र "हग्रहोर्भश्छन्दसी"ति हकारस्य भकारः ॥६४॥

अमोऽहमस्मि सा त्वꣳसा त्वमस्यमोऽअहम् ।

सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम् ॥ ६५ ॥

तावेहि विवहावहै सह रेतो दधावहै ॥ प्रजां

प्रजनयावहै पुत्रान् विन्द्यावहै बहून् ॥ ६६ ॥

ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्य-

मानौ ॥ पश्येम शरदः शतं जीवेम शरदः

शतꣳ शृणुयाम शरदः शतम् ॥ ६७ ॥

किम्भूतोऽहम् ? अमोऽहमस्मि । न वर्त्तते मा लक्ष्मीरस्येति अमः । तादृशोऽहं, त्वं च सा लक्ष्मीः । तथा च त्वया लक्ष्म्या विना शून्योऽहं त्वं मम लक्ष्मीर्भवेति भावः(२) । सा त्वमस्यमोऽहमिति पुनरभिधानमादरातिशयार्थम् । तथाऽहं साम अस्मि सामवेदोऽस्मि ऋक्त्वम् ऋग्वेदस्त्वम् । अहं द्यौः स्वर्गः त्वं पृथिवी । तथा च उभावपि परस्परान्वययोग्यावित्यभिप्रायः । तथा च एहि अभिमुखी भव । तौ आवां विवहावहै विवाहं करवाव । तथा सति रेतः शुक्रं (३)सह संयुक्तौ भूत्वा दधावहै धारयाव । (४)प्रजां सन्ततिं, प्रजनयावहै उत्पादयाव । बहून्पुत्रान् विन्द्यावहै प्राप्नुवाव । ते च पुत्राः जरदष्टयः सन्तु दीर्घायुषः भवन्तु । किं च आवां शरदः शतं पश्येम, जीवेम शरदः शतं, शृणुयाम शरदः शतम् । आवां किम्भूतौ? संप्रियौ अन्योन्यानुरक्तौ । रोचिष्णू दीप्तियुक्तौ ॥६७॥

आरोहेममश्मानमश्मेव त्वꣳ स्थिरा भव ॥

---

स्यय आर्षः ( पा० ३।१।८५ ) बोध्यः । (१) गृहपतित्वाय । त्वया विना गृहपतित्वं नोपपत्स्यत इति । यद्वा गार्हपत्योऽग्निस्तदर्थं तत्सेवायै । अग्निपरिचरणायेति यावत् । (२) एतद्व्याख्यानं न मनोरमम् । किन्तु अमो विष्णुः । स हि सर्वत्रामति गच्छति जानाति वा सर्वं, यद्वा न मिनाति हिनस्ति अपि तु पालयतीत्यमः । "मिञ् हिंसायाम्" (क्र्या० उ०) "अम् गतौ" ( भ्वा० प० ) पचाद्यच् । सा लक्ष्मीः । एवं सा गौरी अमः शिवः । स हि न कैश्चिन्मीयते दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्त्तय" ॥ इति स्मृत्या तथाभिहितः । "सा च लक्ष्मी बुधैः प्रोक्ता गौरी सा च स ईश्वरः" इत्येकाक्षरी । (३) पुत्रदेहरूपम् । (४) पोषयाव ; "डुधाञ् धारणपोषणयोः" ( जु० उ० ) लोट् ।

अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः ॥ ६८ ॥

हे कन्यके ! त्वम् इमम् अश्मानमारोह आक्राम । किमर्थम् ? अनेनारोहणेन त्वं स्थिरा भव । क इव ? अश्मेव । किं च पृतन्यतः त्वत्प्रतिपत्तया आत्मनः पृतनां सेनामिच्छतः पुरुषान् अभितिष्ठाऽऽक्रम । किं च पृतनया सह आयत आगच्छतः तादृशानेव अवबाधस्व-खण्डय, पृतनायतः (१)इतिलोहितादिगणे पठितः, पृतन्यत इति च ॥ ६८ ॥

सरस्वति प्रेदमव सुभगे वाजिनीवति ॥ यां
त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः ॥ ६९ ॥
यस्यां भूतꣳ समभवद्यस्यां विश्वमिदं जगत् ॥
तामद्य गाथां गास्यामि या स्त्रीणामुत्तमँय्यशः ॥ ७० ॥

हे सरस्वति ! यां त्वा त्वां प्रगास्यामि प्रगायामि उत्कीर्त्तयामि सा त्वमिदं विवाहकर्म प्र अव प्रकर्षेण पालय । सरस्वति ! किम्भूते ? सुभगे ! कल्याणि ! पुनः किम्भूते ? वाजिनीवति ! वाजिनी (२) घोटिका तद्वति । घोटिका यथा शीघ्रं गच्छति तथा त्वमपि कीर्तिरूपा शीघ्रं गच्छसीति । क्वेत्याकाङ्क्षायामाह-विश्वस्य अस्य सर्वस्य भूतस्य प्राणिजातस्याग्रतः । कीदृशायां ? यस्यां सरस्वत्यां भूतं पृथिव्यप्तेजोवाय्वाकाशात्मकं समभवत्सम्यक् अभवत् । तथा तस्यामिदं विश्वं जगत् । तां गाथां गाथात्मिकां सरस्वतीमिदानीं गास्यामि गायामि । कीदृशी गाथा ? या गाथा

(१) पृतनाशब्द इति तात्पर्यम् । किन्त्वेवंसति पृतनया सहायत आगच्छत इति कथं व्याख्यातवानिति चित्रं, पृतन्यत इति चेत्यशुद्धमेव । तत्रहि "कव्यध्वरपृतनस्यर्चिलोपः" (पा०७।४।३९) इति क्यचोऽन्त्यलोपे लटः शतरि रूपम् । पृतनां संग्रामम् (निघ०२।१७।१८) इच्छन्ति पृतन्यन्तित एव पृतन्यन्तस्तान्पृतन्यत इति जयरामगदाधरौ ॥ अत्र लोहितादित्वकल्पने अपृतनाः पृतनाभवन्तीत्यर्थः । लोहितादित्वात्क्यषि ( पा० ३।१।१३) "वाक्यषः" ( पा० १।३।९० ) इति वा परस्मैपदमिति लटः शतरि रूपम्बोध्यम् । अत्र पृतनाभिः सेनाभिर्यन्त इति पृतनायन्तस्तानिति जयरामगदाधरौ ॥ "ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः" इत्यमरः ॥ (२) एतद्व्याख्यानं हेयमेव । श्रुतौ प्रजायामस्याग्रत इति पठ्यते व्याख्यायते च प्रगायाम्यस्याग्रत इति चित्रं प्रतिभाति । वस्तुतस्तु-हेसुभगे ! कल्याणि ! वाजिनीवति ! वाजाः पक्षाः सन्त्यस्या इति वाजिनी हंसी तद्वति तद्वाहने ! ( ब्रह्मसहधर्मिणीत्वात् ) "वाजो निःस्वनपक्षयोः" इति मेदिनी । सरस्वति ! वैखरीवाग्रूपे ! इदं विवाहकर्म वरवध्वात्मकंमिथुनं वा प्राव प्रकर्षेण रक्ष । सर्वप्रकृतिरूपत्वात् । यां त्वा त्वाम् अस्य विश्वस्य सर्वस्य भूतस्य प्राणिजातस्य पृथिव्यादेर्वा प्रजायां प्रकृष्टां जनयित्रीं "मन्त्रा आहुरि"ति शेषः । किंभूताम् ? अग्रतः प्रथमाम् । यद्वा अग्रे सृष्ट्यादौ मन्त्रा आहुरित्यर्थः । तदेव प्रपञ्चयति यस्यामिति । यस्यां प्रकृतिरूपायान्त्वयि इदं सर्वं विश्वं पृथिव्यादिभूतं प्राणिजातञ्च । जगत्—अस्तंगच्छत् ॥ पुनः सृष्ट्यादौ यस्याः सकाशात् समभवत्—संभूतं तस्यास्ते सम्बन्धिनीं ताङ्गाथां गुणप्रभावस्तुतिप्रकाशिकाम् । अद्य अस्मिन्नहनि ( समये ) गास्यामि या श्रुता सती स्त्रीणामुत्तमं

स्त्रीणामुत्तमम् उत्कृष्टं यशः। एवं सरस्वतीं स्तुत्वा सा मामिह विवाह-कर्मणि प्रमादकृताशुद्धमन्त्रपाठतः पालयत्विति आशंसा वाक्यार्थः, प्र-गायामीति गैशब्दे लिट्। गास्यामीति वर्त्तमाने लृट् ॥ ६६ ॥ ७० ॥

तुभ्यमग्रे पर्य्यवहन्त्सूर्य्यां वहतु ना सह ॥ पुनः

पतिभ्यो जायां दाग्ने प्रजया सह ॥ ७१ ॥

हे अग्ने! अग्रे प्रथमं सोमादिः(१) एतां कन्यां सूर्यां सूर्यवत्का(२)न्तिशालिनीं तुभ्यं त्वदर्थं पर्यवहन् पर्यवहत् विवाहि(३) तवानित्यर्थः। एतां त्वया सह पुनर्ना मनुष्यो वहतु-विवाहयतु। पुनश्च(४)पतिभ्यः मनुष्येभ्यः एनां जायां प्रजया सन्तत्या सह दाः देहीति। अयं वा-क्यार्थः—हे अग्ने! असौ प्रथमं त्वया विवाहिता तवैव जाया इदानीं स-न्तत्या सह एनां जायां मनुष्याय पत्ये मह्यमिति यावत्, देहीति। दा इति लोटः सिप् ॥ ७१ ॥

एकमिषे विष्णुस्त्वा नयतु ॥ द्वे ऊर्ज्जे विष्णुस्त्वा

नयतु ॥ त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु ॥

चत्वारि मायोभवाय विष्णुस्त्वा नयतु ॥

पञ्च पशुभ्यो विष्णुस्त्वा नयतु ॥

षड्ऋतुभ्यो विष्णुस्त्वा नयतु ॥ सखे सप्तपदा

भव सा मामनुव्रता भव विष्णुस्त्वा नयतु ॥ ७१ ॥

हे सखे! पत्नि! त्वाम् एकं पदं विष्णुर्नयतु आपयतु। किमर्थम्? इषे अन्नाय। ऊर्ज्जे बलाय। रायस्पोषाय धनपुष्ट्यै। मय एव मायः सुखं तस्य भवः उत्पत्तिस्तस्यै। पश्वादिभ्यस्तत्सुखाय हे सखे! इह मित्रमिव सा त्वं सप्तपदा भूरादिसप्तलोकप्रख्याता भव। मामनुव्रता-ऽनुवर्त्तिनी च भवेति वाक्यार्थः ॥ ७१ ॥

आपः शिवाः शिवतमाः शान्ताः

---

श्रेष्ठं (निष्कलङ्कं) यशः कीर्त्ति"न्ददाती"ति शेषः ॥ (१) अत्र सोमोगन्धर्वाश्चेति व्याख्यातव्य-मग्रे बहुवचनदर्शनात्। बहुवचनस्यैकवचनविपरिणामः प्रौढिवाद एव। (२) नवोद्गलकान्ति नवो-ढामिति यावत्। "देवक्या सूर्यया सार्द्धं प्रयाणे रथमारुहत्" इति श्रीमद्भागवतश्लोकव्याख्यायां श्रीधरस्वामिभिस्तथाव्याख्यातत्वात्। (३) आदरार्थे सोमगन्धर्वयोर्बहुवचनेन श्रुतौ निर्देश इहतु छान्दसो व्यत्यय उन्नीतः। (४) एषोऽर्थः कुतउत्प्रेक्षित इति न प्रतीमः। वस्तुतस्तु—हे अग्ने! अग्रे पूर्वं जननदिनादारभ्य सोमोगन्धर्वाश्च तुभ्यन्त्वदर्थमिमां कन्यां पर्यवहन् परिणीतवन्तः। साम्प्रतं च सूर्यान्नवोढामिमां ना पुरुषो भवान्वहतु जायात्वेन प्रतिगृह्णातु ॥ पुनश्चपतिभ्यः सोमादि-भ्यः सकाशात् जायां जायात्वेन परिगृहीतामिमां प्रजया सन्तत्या सह त्वं मह्यं दाः देहि मन्त्र

शान्ततमास्तास्ते कृण्वन्तु भेषजम् ॥ ७२ ॥

या आपः शिवाः कल्याण्यः शिवतमाः अतिशयेन कल्याण्यः शान्ताः अनुपद्रवाः। अनुपद्रवकारिण्यः। शान्ततमा अतिशयेन शान्तास्ता आपस्ते तव भेषजं रोगनाशनं कृण्वन्तु कुर्वन्तु। कृण्वन्त्विति "कृविहिंसाकरणयोश्च" इत्यस्माद्धातोर्लोटि रूपम् ॥ ७२ ॥

आपो हिष्ठेत्यादिव्याख्यातम् ॥

मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं
ते ऽअस्तु ॥ मम वाचमेकमना जुषस्व प्रजा-
पतिष्ट्वा नियुनक्तु मह्यम् ॥ ७३ ॥

हे कन्ये! तव हृदयं मम (१) व्रते निश्चये दधामि अर्पयामि। मद्व्रतं कारयामीत्यर्थः। तथा सति तव चित्तं हृदयं मम चित्तमन्वस्तु। मम चित्तानुकूलं भवतु। तथा मम वाचं वाक्यम् एकमनाः एकचित्ता सती जुषस्व सेवस्व। मदीयवचनकारिणी भवेत्यर्थः। तथा प्रजापतिर्ब्रह्मा त्वा त्वां मह्यं मत्सेवायै नियुनक्तु नियोजयतु ॥ ७३ ॥

सुमङ्गलीरियं वधूरिमाᳬं समेत पश्यत।
सौभाग्यमस्यै दत्वायाथास्तं विपरेतन ॥ ७४ ॥

हे सख्यः! विवाहदेवताः। इयं वधूः सुमङ्गलीः शोभनमङ्गलयुक्ता। (२) इत्थं भूतामिमां समेत संगच्छत। इमां संगम्य दृष्ट्वा अस्यै सौभाग्यं च दत्वाय अस्तं स्वस्थानं याथ यात गच्छत। (३) न विपरेत-नविमुखतया पराइत अपगच्छत। पुत्रादिमङ्गलमाशास्य पुनरागमनाय व्रजतेति वाक्यार्थः। अत्र दत्वाय(४)इति "रुकौयगि"ति यक्। विपरेतनेति "इण् गतौ" विपरापूर्वस्य मध्यमपुरुषैकवचने तनप् ॥ ७४ ॥

इह गावो निषीदन्त्विहाश्वा ऽइहपूरुषाः ॥ इहो
सहस्रदक्षिणो यज्ञऽइह पूषा निषीदतु ॥ ७५ ॥

इह चर्मणि त्वम् उपविश। त्वया सह गावः। निषीदन्तु। इह अश्वाः। इह पुरुषाः परिजनमनुष्या उपविशन्तु। उशब्दोऽप्यर्थः। इह सहस्रदक्षिणः यज्ञोऽपि निषीदतु। तथा पूषा पुष्टिकारी आदित्यः निषीदतु। तथा चैतैः सह इह बलीवर्दचर्मणि उपविश। एतत्सहवासेन तव कल्याणमस्त्विति वाक्यार्थः ॥ ७५ ॥

---

सन्निकर्षः। (१) वेदेऽस्मच्छब्देन वक्तुरात्माऽभिप्रेयते। तेन वरो ब्रवीति अहं मम आत्मनः व्रते—शास्त्रविहितनियमादौ। इत्यर्थः॥ (२) अत्र मत्वर्थे "छन्दसीवनिपौचे"ति ईप्रत्ययश्छान्दसः॥ (३) व्यत्ययेन लोडर्थे लट्॥ (४) एतदादिव्याख्यानमसङ्गतम् (पा० ३।१।७५) सूत्रविरो-

ध्रुवमसि ध्रुवं त्वां पश्यामि ध्रुवैधि पोष्ये मयि
मह्यं त्वादाद् ॥ बृहस्पतिर्मया पत्या
प्रजावती सञ्जीव शरदः शतम् ॥ ७६ ॥

हे वधु ! त्वं ध्रुवमसि । ध्रुवनक्षत्रवत् अविनाशिनी भवसि । अतः त्वा त्वां ध्रुवं (१) पश्यामि दर्शयामि । किमर्थं ? त्वं मयि ध्रुवा शाश्वती सती पोष्या पोषणीया(२) एधि भव । इत्येतदर्थं, बृहस्पतिस्त्वा त्वां मह्यम् अदात् दत्तवान् । तथा सति त्वं प्रजावती पुत्रादिसहिता मया पत्या सह शरदः शतं शतवर्षाणि जीव । त्वं मयि शाश्वती भवेरित्येतदर्थं, पश्यामीत्यन्तर्भावितण्यर्थः । ध्रुवमिति स्त्रीलिङ्गत्वे प्राप्ते नपुंसकलिङ्गत्वं (३)छान्दसम् ७६

इति विवाहमन्त्रव्याख्यानम् ।

---

अथ चतुर्थीकर्ममन्त्रव्याख्यानम् ।

अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
पतिघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ १ ॥

हे अग्ने ! प्रायश्चित्ते ! सकलदोषापहरणस्वरूप ! त्वं देवानामिन्द्रादीनां प्रायश्चित्तिरसि । दोषापहर्त्ता भवसि । अतः कारणादहं त्वाम् उपधावामि उपसर्पामि । (४)अहं किम्भूतः ? नाथकामः याच्ञा(५)कामः । याच्ञार्थमुपसर्पामि इत्यर्थः । का याच्ञा(६)? अस्यै अस्याः कन्यकायाः या तनूः पतिघ्नी यदङ्गं पतिहिंसकम् अस्यै-अस्याः तां तनूं नाशय (७) अपाकुरु । तदलक्षणमपाकुर्वित्यर्थः । हे अग्ने ! यतस्त्वं देवानामपि दोषापहर्त्ता अतो मदुपसर्पितः सन् अस्यास्तदलक्षणं नाशयेत्यर्थः । अस्यै इति षष्ठ्यर्थे चतुर्थी ॥ १ ॥

वायो प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ २ ॥

---

यात् । (१) तारकाविशेषं, तवरूपमिति हलायुधः । एवं पश्यामि दर्शयामि । (२) मत्प्रजापोष्ट्री वा ॥ (३) तद्रूपताऽध्यारोपे नपुंसकनिर्देश एव युक्त इतीदश्चिन्त्यम् । (४) शरणागतो भवामि । आश्रयामि ( आराधयामि ) । (५) प्रार्थयमानः । आशीः काम ऐश्वर्यकामो वेति परे । "नाथृनाधृ-याच्ञोपतापैश्वर्याशीःषु" ( भ्वा० प० ) ततो भावे घञ् । नाथनं नाथस्तत्कामयत इत्यर्थे "कर्मण्यण्" ( पा० ३।२।१ ) ॥ (६) याच्ञाप्रयोजनमाहेत्यर्थः ॥ (७) अत्र "सविशेषणे हि विधिनिषेधौ सति विशेष्येऽन्वयबाधे विशेषणमुपसङ्क्रामतः" इतिन्यायेन शिखानाशे शिखीनष्ट इतिवत्तद्दोषस्यै-

हे वायो! अस्याः या प्रजाघ्नी सन्तानविरोधिनी (१) तनूः, अन्यत्समानम् ॥ २ ॥

सूर्य प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
पशुघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ३ ॥

हे सूर्य! अस्याः या पशुघ्नी गवादिनाशिनी तनूः। अन्यत्समानम् ॥३॥

चन्द्र प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
गृहघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ४ ॥

हे चन्द्र! अस्याः या गृहघ्नी गार्हस्थ्यविरोधिनी तनूरन्यत्पूर्ववत् ॥४॥

गन्धर्वप्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकामऽउपधावामि याऽस्यै
यशोघ्नी तनूस्तामस्यै नाशय स्वाहा ॥ ५ ॥

हे गन्धर्व! गोः किरणस्य धारक! सूर्य! त्वया प्रकाशकारिताया अस्याः यशोघ्नी यशोनाशिनी तनूरन्यत्पूर्ववत् ॥ ५ ॥

या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी
यशोघ्नी निन्दिता तनूर्जारघ्नीं ततऽएनां
करोमि सा जीर्य त्वं मया सह ॥ ६ ॥

हे कन्यके! या तव निन्दिता दोषावहा तनूः ताम् एनां तनूं ततस्ते नानेनाभिषेचनेन ( सार्वविभक्तिकस्तसिः ) जारघ्नीं जारउपपतिः। तद्घातिनीं (१)करोमि। सा का? निन्दिता तनुः। या पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी। एतच्च व्याकृतमेव। अनेन चाभिषेककर्मणा। सा त्वं मया सह जीर्य जरां प्राप्नुहि दीर्घायुर्भवेत्यर्थः ॥ ६ ॥

प्राणैस्ते प्राणान्त्सन्दधामि ॥ ७ ॥

हे कन्यके! तव प्राणान्प्राणैरस्मदीयैः सन्दधामि संयोजयामि ॥ ७ ॥

अस्थिभिरस्थीनि (१) माꣳसैर्माꣳसानि त्वचा त्वचम् ॥ ८ ॥

अनेन स्थालीपाकप्राशनेन कर्मणा मया सह तव एकप्राणत्वैकास्थित्वैकमांसत्वैकचर्मत्वानि करोमीति वाक्यार्थः ॥ ८ ॥

इति चतुर्थीकर्ममन्त्रव्याख्या ॥ * ॥

---

वापाकरणमनेनोक्तं भवति। तदेवाच प्रार्थ्यते। एवमग्रेऽपि ॥ ।(१) अपत्यविनाशनलक्षणोपेतेत्यर्थः। एवमग्रेऽपि। तत्तदलक्षणनाशनमेव प्रार्थ्यते ॥ (२) उपपत्यादिदोषघातिनीम्।

## अथ गर्भाधानमन्त्रव्याख्या(१)।

यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् ॥
वेदाहं तन्मां तद् विद्यात् पश्येम शरदः शतं
जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ १० ॥

हे सुसीमे ! शोभना सीमा अवयव (२)सन्धिर्यस्याः सा सुसीमा। हे शोभनावयवसन्धे ! अहं ते तव हृदयं वेद जानामि। किम्भूतं हृदयं ? दिवि आकाशे चन्द्रमसि च श्रितं स्थितम्(३)। प्रथमतो हि स्त्रीणां चन्द्रः स्वामीति नियमः। "पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभि-रि"ति। अतस्तदाहितन्ते चित्तमित्यभिप्रायः। इदानीं तद्धृदयं मां विद्यात् पतित्वेन जानातु। किञ्च पश्येम शरदः शतम्, आवां शतं वर्षाणि पश्यावः। एवं जीवेम शरदः शतं, शृणुयाम शरदः शतम्। इयन्तं समयं चन्द्रस्तवपतिरासीत् देवता। तव हृदयं तस्मिन्नाश्रितम्। इदानीमहं तव पतिरिति तव हृदयं जानातु। आवामविकलेन्द्रियौ शतं वर्षाणि जीवाव इत्याशंसा वाक्यार्थः। पश्येम जीवेम शृणुयाम इति "तिङां तिङो भव-न्ती"ति उत्तमपुरुषद्विवचने बहुवचनम् ॥ १ ॥

इयमोषधी त्रायमाणा सहमाना सरस्वती।
अस्याऽअहं बृहत्याः पुत्रः पितुरिव नाम जग्रभत् ॥ २ ॥

इयं बृहती ओषधी व्याधिनाशकरी। किम्भूता ? त्रायमाणा रक्षाकरी। पुनः किम्भूता ? सहमाना उत्पन्नदोषमर्षणकरी। पुनः किम्भूता ? सरस्वती वाक् प्रसादहेतुः। अस्या बृहत्याः कण्टकारिकायाः पुत्रः नाम जग्रभत् प्रकाशत्वं गृह्णातु। किम्भूतं नाम ? पितुरिव पितृ सदृशमित्यर्थः। अत्र पूर्वार्द्धेन बृहतीस्तुतिः। उत्तरार्द्धेन अस्याः पुत्रः प्रकाशत्वं लभताम् इत्याशंसा वाक्यार्थः। जग्रभदिति "ग्रहउपादाने" इत्यस्माद्धातो— "हृग्रहोर्भश्छन्दसी"ति हकारस्य भकारः ॥ २ ॥ इति गर्भाधानम् ॥

## अथ पुंसवनम्।

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः
पतिरेकऽआसीत्। स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥ ३ ॥

हिरण्यगर्भः हिरण्यगर्भाख्यः पुरुषः समवर्त्तत समभवत्। अग्रे

---

(१) अत्र प्राथमिकाः—"पूषाभगम्" "गर्भन्धेहि" "रेतोमूत्रम्" इत्यादित्रयोमन्त्रा उपेक्षितास्तत्रकारणं मृग्यम्। (२) मूर्ध्नि केशमध्ये पद्धतिः। सीमन्त इति यावत्। हेशोभनसीमन्तिनि !॥ (३)

प्रथमं, यो हिरण्यगर्भो जातो जातमात्रो भूतस्य प्राणिजातस्य एकोऽद्वितीयः पतिरासीत् स्वामी बभूवेत्यर्थः। एवम्भूतः स पृथिवीं दाधार धृतवान्। न केवलं पृथिवीम् उत इमां द्याम् अन्तरिक्षम्। एवम्भूताय कस्मै काय प्रजापतये देवाय (१)हविषा हविर्विधेम दद्मः। अत्र स दधार इति प्राप्ते आकारश्छान्दसः। काय इति प्राप्ते स्मायादेशश्छान्दसः। हविषेति द्वितीयास्थाने तृतीया (२)। अयं वाक्यार्थः। यो हिरण्यगर्भ एक एव प्राणिजातस्य प्रभुः पृथिवीमन्तरिक्षञ्च धारयति तस्मै प्रजापतिमूर्त्तये हविरपि दीयते इति प्रजापतेः स्तुतिः ॥ ३ ॥

अद्धय इति व्याख्यातम्।

सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रं
चक्षुर्बृहद्रथन्तरे पक्षौ। स्तोम ऽआत्मा च्छन्दाᳬं
स्यङ्गानि यजूᳬंषि नाम। साम ते तनूर्वामदे-
व्यँय्यँज्ञायज्ञियं पुच्छन्धिष्ण्याः शफाः।
सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत ॥ ४ ॥

सुपर्णः शोभनपर्णः शोभनपक्षः, गरुत्मान् दूरगत्यादिगुणयोगेन प्रशस्तपक्षवान् त्रिवृत्(३) स्तोमः ते तव शिरो मस्तकं, गायत्रं साम ते चक्षुः, बृहद्रथन्तरे सामनी ते पक्षौ, स्तोमः स्तोमाख्यः पञ्चविंशतिः सामानि ते आत्मा स्वरूपं, छन्दांसि अनुष्टुबादीनि ते अङ्गानि, यजूंषि यजुर्वेदः ते नाम संज्ञा। साम ते तनूः शरीरं, कतमं? वामदेव्यं, यज्ञायज्ञियं साम ते पुच्छं लाङ्गूलं, धिष्ण्या अग्नेराश्रयाः ते शफाः नखाः, यतस्त्वं सुपर्णोऽसि गरुत्मांश्च। अतः दिवम् आकाशं गच्छ याहि। स्वः स्वर्गलोकं पत याहि। अयं वाक्यार्थः। तनूर्वामदेव्यं यज्ञायज्ञियं सुपर्णत्वादिगरुडधर्म्ममारोप्य देवमयस्त्वमिति अग्निः स्तूयते। पुंसवने अग्निजलयोः कार्यकारणाभेदाश्रयणेनाग्निस्तुत्या जलमेव स्तुतं गर्भं वीर्यवत्तरं करोति ॥ ४ ॥ इति पुंसवनम्।

---

अथ सीमन्तोन्नयनम्।

अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि।
अया नो यज्ञं वहास्ययानो धेहि भेषजम् ॥ ५ ॥

---

मनसश्चन्द्रेऽधिष्ठितत्वं श्रूयते "मनश्चन्द्रमसि लीयते" इति। (१) अत्र संज्ञाभूतस्यापि स नामत्वमार्षमेव। रूपसाम्यात्। (२) वस्तुतस्त्वयमार्थिकोऽर्थः। वेदे हि विधतिः परिचरणकर्मसु (निघं ३।५।२) पठितः। हविषा करणभूतेन परिचरेमेति शाब्दिकोऽर्थः। (३) "गरुत्पक्षच्छदाः

हे अग्ने ! त्वं अयाश्च असि । प्राणिनां शुभावहोविधिरस्यसि । (१) अपरमनभिशस्तिपाश्च असि । अविद्यमाना अभिशस्तिर्याच्ञा यस्य पुरुषस्य सोऽनभिशस्तिस्तमपि पासि रक्षसि इति अनभिशस्तिपाश्च त्वम् । अयमर्थः । यस्त्वां रक्षणार्थं न याचते तस्यापि त्वं माहात्म्याद्रक्षकोभवसीति । तदित्थम्भूतस्त्वम् अयाः आगच्छ आगत्य च नोऽस्माकं यज्ञं वह यज्ञविरेतद्धुतं तद्देवान् प्रापय । किञ्च त्वं सत्यमित् सत्यमेव अया असि ज्ञाता असि । यत्संसारात् निस्तारोपायं जानासीत्यर्थः । अतः कारणादपि त्वम् अयाः आगच्छ । आगत्य च नोऽस्माकं भेषजं धेहि अस्माकं निस्तारोपायमौषधं परिकल्पय । यद्यपि शुभावह—वाचो अयश्शब्दोऽकारान्तस्तथापि छान्दसः सकारान्तः । सत्यमिदिति इत्शब्दोऽयमव्ययमवधारणार्थः । अयानो यज्ञं वहास्ययानो धेहि भेषजमित्यत्र अया अया इति क्रियापदद्वयमत्यन्तार्थिकत्वद्योतनार्थम् । अत्रायाइति इणगतावित्यस्माल्लिङ् मध्यमपुरुषैकवचनं सिप् "इतश्च लोपः परस्मैपदेष्वि"ति इकारलोपः । धातोर्गुणः "लेटोऽडाटावि"त्याडागमः । आङ्पूर्वः। तस्याकारेण एकारादेशे सति वर्णव्यत्ययाद् ह्रस्वत्वम् , अया इति । सर्वे गत्यर्था इति कृत्वा एति जानातीति असुन्प्रत्ययेन वा रूपम् ॥५॥

भूर्विनयामि ॥ १ ॥

भूर्लोकं विनयामि पृथक्करोमि ॥ १ ॥

भुवर्विनयामि ॥ २ ॥

भुवर्लोकमन्तरिक्षं विनयामि पृथक्करोमि ॥ २ ॥

स्वर्विनयामि ॥ ३ ॥

स्वर्लोकं पृथक्करोमि, पुंसवने हिरण्यगर्भादिद्वयमन्त्रेण नस्यं दत्वा त्रैलोक्यपतिः त्रैलोक्योद्धारकः पुरुषोत्तमो गर्भे आहितः । एतावता गर्भिणीगर्भे त्रैलोक्यमपि वर्त्तते । तथा सति भूरादिलोकत्रयमसंकीर्णमेव त्रिभिः मन्त्रैः केशानां पृथक्करणं क्रियते सीमन्तोन्नयने पृथक्कृतैः केशैर्वेणीं बध्नात्यनेन मन्त्रेण ॥ ३ ॥

अयमूर्जावतो वृक्षऽऊर्जीव फलिनी भव ॥ ४ ॥

हे गर्भिणि ! अयं वृक्षः । ऊर्जावतः ऊर्जो बलं तद्वान् (२)एतद्योगात् ।

---

पुंसी" त्यमरात् प्रशंसायामत्रमतुप् । (१) "अयः शुभावहोविधिरि"त्यमरः । वस्तुतस्तु नयातीत्ययाः। असुन् ( ३४।१८८ ) सर्वत्र बाह्याभ्यन्तरेऽवस्थितः । (२) "शरादीनाञ्चे" ( पा० ६।३।१० ) तिदीर्घः । परमयमूर्जावान् । इत्येव भवितुमर्हति । तथा चाध्याहार्यं मनसि अयमित्यनेनैवानुसंहितोमन्त्रद्रष्टृर्षिणा । तदित्थमस्योर्जावतो वृक्षस्योर्जो फलशाखेव त्वमपि फलिनी बहुपत्या

ऊर्जीव (१)फलिनी। यथाऊर्जी फलयुक्ता तथा त्वमपि फलिनी पुत्रिणी भव। अत्र प्रथमपदेन उदुम्बरस्तुतिः, द्वितीयपदेन गर्भिण्याः पुत्रिणीत्वमाशास्यते। ऊर्जीव (२)इति "सुपां सुपो भवन्ती"ति विभक्तिव्यत्ययेन प्रथमैकवचनस्थाने द्वितीयाबहुवचनम् ॥ ४ ॥

वीणागाथिभ्यां वाद्यमागीयमाने यजमानः स्वयमेताङ्गाथां गायति—

सोमऽएव नो राजेमा मानुषीः प्रजाः।

अविमुक्तचक्रऽआसीरँस्तीरे तुभ्यमसौ ॥ १ ॥

हे असौ! अमुकनदि! तुभ्यं तव तीरे इमाः प्रजाः आसीरन् (३)तिष्ठन्ति। किम्भूताः प्रजाः? मानुषी मानुष्यः(४)। पुनः किम्भूताः? अविमुक्तचक्राः(५) अविमुक्तम् अत्यक्तं चक्रं मण्डलं याभिस्ता अविमुक्तचक्राः। नः अस्माकं प्रजानां सोमः राजा, राजा यथा रक्षकः पोष्टा च एवं नोऽस्माकं सोमश्चन्द्रो रक्षकः पोष्टा च भवत्वित्याशंसावाक्यार्थः। मानुषीरिति "सुपां सुलुगि"ति प्रथमाबहुवचने द्वितीयाबहुवचनम्, तुभ्यमिति षष्ठ्यर्थे चतुर्थी, असाविति सम्बोधनान्तं तत्रस्थितनदीनामोपलक्षणम् ॥१॥

इति सीमन्तोन्नयनमन्त्राः ॥

अथ सोष्यन्तीकर्ममन्त्राः।

एजतु दशमास्यो गर्भो जरायुणा सह।

यथाऽयँवायुरेजति यथा समुद्रऽएजति ॥

एवायं दशमास्योऽअस्रज्जरायुणा सह ॥ २ ॥

दशमास्यः (६)दशमासकालावच्छिन्नोऽयं पूर्णप्रसवकालीन इति यावत्। गर्भः प्रसिद्धार्थः। एजतु कम्पतां, (७)न केवलं गर्भः जरायुणा सह जरायुर्गर्भवेष्टनम्। अवर इति यस्य प्रसिद्धिः। यथा वायुरेजति कम्पते। यथा समुद्र एजति कम्पते। एवमयं गर्भः दशमास्यः सम्पूर्णकालीनः

---

भव भूम्नि मतुप्। (१) अत्र ऊर्ज शब्द उदुम्बरस्यफले शाखायाञ्च वर्त्तते, "छन्दसीवनिपौचे" तिमत्वर्थे ईप्रत्ययः ॥ (पा० ५।२।१२२) उदुम्बरफलशाखेवेतितदर्थः। (२) एतद्व्याख्यानमपार्थकमिवाभाति। किन्तु—ऊर्जावत इति प्रतीकमुपादाय व्याख्यानमेतत्संभवदप्यत्रद्वितीयापदमधिकं, नुमभावश्चार्षं इति च न्यूनमिति प्रतिभाति। (३) लडर्थे लङ् वस्तुतस्तु लुङर्थे। स्थिता इति तदर्थः। (४) यजुर्वल्लभगृह्यसूत्रभाष्ये हे गङ्गादिनदि * तुभ्यं तव सोमरूपायास्तीरे आसीरन् त्वामाश्रित्य स्थिताः। किम्भूते तीरे? अविमुक्तचक्रे अनुल्लङ्घितशास्त्रे। अनेन सप्तम्यन्तपाठः सुष्ठुबोध्यः॥ (५) एतद्व्याख्यानमनादेयम्। अतो—अविमुक्तचक्र इति सप्तमीश्रुतेः। अविमुक्तजलावर्त्त इतितदर्थः। "चक्रःकोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः। राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः। जलावर्त्तेऽपि" इति मेदिन्यभिधानात् ॥ (६) दशमाससम्भूतः। "द्विगोर्यत्" (पा० ५।१।८२) इति भूतार्थे यत्। (७)

जरायुणा सह अस्रत् अधःपाती भवतु । अत्र अस्रदिति "स्रंसुध्वंसु-अधःपतने" अस्माद्धातोराशंसायां लिङ् । प्रथमपुरुषैकवचनं "छन्दस्यपि दृश्यत" इत्यडागमः । आगमशासनस्यानित्यत्वाद् यासुडागमो न भवति । "किदाशिषी"ति लिङः कित्वा "दनिदिता"मिति सूत्रेणानुनासिकलोपः "स्कोः संयोगाद्योरन्ते चे"ति सकारलोपः ॥ २ ॥

इति सोष्यन्तीकर्ममन्त्राः ॥

अवैतु पृश्नि शेवलꣳ शुने जराय्वत्तवे

नैव माꣳसेन पीवरि न कस्मिंश्चनायतनम-

वजरायु पद्यताम् ॥ १ ॥

हेसोष्यन्ति ! तव जरायु गर्भाशयः । नपुंसकत्वमार्षम् । "गर्भाशयो जरायुः स्यादि"त्यमरः । अवैतु अव अवाचीनमधः एतु-आयातु । पतत्वित्यर्थः । किमिव पृश्निः शेवलम् । एतयोरुपादानन्दृष्टान्तार्थम् । एतेनैतदुक्तं भवति यथा पृश्निः (१)पङ्क्तिः शैवलं प्रसिद्धमेवमनेन क्वचिदपि असंलग्नं जलोपरि स्थितं सद्बुद्बुद्भावादिप्रेरणेनाप्ययं गच्छति तथा जरायु सुखेनापगच्छतु । कथं कारणं ? (२)शुने अत्तवे । शुनोभक्षणाय (३) यथा भवतीत्यर्थः । किम्भूतं जरायु ? मांसेन पीवरि (४)पुष्टम् । किं च जरायु कस्मिंश्चन आयतने कुत्राप्यवयवे न अवपद्यतां अजस्रं विलग्नं न भवतु । किम्भूतं आयतनं ? महत् उदरे असंलग्नं जरायु सुखेन पतत्वितिवाक्यार्थः, अत्र शुने इति षष्ठ्यर्थे चतुर्थी, अत्तवे "अद भक्षणे" इत्यतः तुमर्थेसेऽसेनि"त्यादिना सूत्रेण तवेङ् प्रत्यये कृते रूपम् , पीवरीतिलिङ्गव्यत्ययेन स्त्रीत्वम् ॥ १ ॥

इत्यवरावपतनकर्ममन्त्रव्याख्या ।

---

अथ जातकर्म्ममन्त्रव्याख्या ।

( तत्र मेधाजननमन्त्राः )

ॐ भूस्त्वयि दधामि ॥ १ ॥

भूर्लोकम् त्वयि दधामि स्थापयामि ॥ १ ॥

---

स्वस्थानाच्च्यवताम् । (१) वस्तुतस्तु पृश्निशब्दोऽत्र नपुंसकएव श्रुतः । अग्निवर्णमिति तदर्थः । घृणि पृश्णी" ( उ० ४।२२ ) त्यादिना निपातितम् । पुनश्च शैवलम् । पिच्छिलम् । जातोपचितं वेतितदर्थः । (२) किमर्थमिति तदर्थः । (३) तुमर्थेऽश्नतवेन् । ( पा० ३।४।९ ) । (४) वस्तुतस्तु—हेपीवरि । गर्भधारणेन पुष्टगात्रि ? । तज्जरायु मांसेन आयतंसम्बद्धम् । विस्तृतं वा कस्मिंश्चन गर्भोपघातकनिमित्ते सत्यपि अव अधः न पद्यतां नपततु—न-विपद्यतामिति यावत् । इत्यर्थः॥

ॐ भुवस्त्वयि दधामि ॥ २ ॥

भुवर्लोकम् अन्तरिक्षं त्वयि दधामि अर्पयामि ॥ २ ॥

ॐ स्वस्त्वयि दधामि ॥ ३ ॥

स्वर्लोकन्त्वयि दधामि ॥ ३ ॥

ॐ भूर्भुवः स्वः सर्वं त्वयि दधामि ॥ ४ ॥

भूर्भुवः स्वः सर्वं त्वयि। एतल्लोकत्रयोपलक्षितमेतदाश्रितं सर्वं प्रमेयजातन्त्वयि दधामि निदधामीति सर्वत्रैव समानम्। त्रैलोक्यगतप्रमेयजातधारणेन तव मेधा भवत्विति वाक्यार्थः ॥ ४ ॥

( अथायुष्यकरणमन्त्राः )

अग्निरायुष्मान्त्सवनस्पतीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, सोमऽआयुष्मान्त्सौषधीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मऽन्तं करोमि, ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, देवाऽआयुष्मन्तस्तेऽमृतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, ऋषयऽआयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, पितरऽआयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, यज्ञऽआयुष्मान्त्स दक्षिणाभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि, समुद्रऽआयुष्मान्त्स स्रवन्तीभिरायुष्माँस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ १ ॥

हे कुमार! योऽयमग्निरायुष्मान् चिरस्थायी। स वनस्पतिभिर्वृक्षैरिन्धनभूतैरुत अग्नेराश्रयत्वमुपगतैर्वाऽऽयुष्मान् तेनाग्निसंबन्धिना आयुषा त्वा त्वाम् आयुष्मन्तं करोति। सोमश्चन्द्रः ओषधीभिर्व्रीह्यादिभिरमावास्यायाङ्क्षीणश्चन्द्रमा ओषधीषु प्रविष्टो भवति। ततः शुक्लपक्षे ताभिराप्याय्यमानः क्रमेण वृद्धिमासादयन् आयुष्मान् भवति। ब्राह्मणैः प्रसिद्धैः। ब्राह्मणैर्हि शिष्योपाध्यायक्रमेण धार्यमाणो वेद आयुष्मान् भवति। देवा अमृतैरिति च प्रसिद्धार्थं, देवानां हि अमृतं प्राश्यामरत्वम्, ऋषयो मरीच्यादयः, व्रतैश्चान्द्रायणप्रभृतिभिः। ऋषीणां हि तपसैव दीर्घायुष्ट्वं, पितरः अग्निष्वात्तादयः स्वधाभिः पितॄणामन्नैः, यज्ञैः सदक्षिणाभिरिति च प्रसिद्धार्थं, समुद्रः प्रसिद्धः। स्रवन्तीभिर्नदीभिः, अपरञ्च सर्वं समानमेव, वनस्पतीभिरिति "अन्येषामपि दृश्यते" इति दीर्घत्वम्? त्र्यायुषमिति व्याख्यातम्।

अथ दीर्घायुष्य(१)करणमन्त्राः—

दि॒वस्परि॑ प्रथ॒मं ज॑ज्ञे अ॒ग्निर॒स्मद्द्वि॒तीयं॒
परि॑ जा॒तवे॑दाः । तृ॒तीय॑म॒प्सु नृ॒मणा॒ऽ
अज॑स्र॒मिन्धा॑नऽएनं जरते स्वा॒धीः ॥ १ ॥

अग्निर्दिवस्परि आकाशमधिकृत्य प्रथमं जज्ञे जातवान् । जातवेदाः अग्निरेव अस्मत्परि अस्मत्सरणं पुरुषरूपं विष्णुमधिकृत्य द्वितीयं जज्ञे । अप्सु जलेषु तृतीयं जज्ञे । नृमणाः नृषु मनुष्येषु (पालनाय) मनो यस्येति नृमणाः प्रजापतिः । एवम् अग्निम् इन्धानः पुरोडाशादिना दीपयन् अजस्रं पुनः२ जरते जरयति । किम्भूतः प्रजापतिः ? स्वाधीः सु शोभनं आहिता धीर्बुद्धिर्यस्य स स्वाधीः स्वायत्तचित्तः प्रजापतिः जरापर्यन्तं परिचरतीत्यर्थः ॥ १ ॥

वि॒द्मा ते॑ऽअग्ने त्रे॒धा त्र॒याणि॑ वि॒द्मा ते॒
धाम॒ विभृ॑ता पुरु॒त्रा । वि॒द्मा ते॒ नाम॑ पर॒मं
गुहा॒ यद्वि॒द्मा तमुत्सं॒ यत॑ऽआज॒गन्थ॑ ॥ २ ॥

हे अग्ने ! ते तव त्रेधा त्रिप्रकारं त्रयाणि त्रिसङ्ख्याकानि आदित्याग्निवडवानलरूपाणि अग्निवायुसूर्याख्यानि च विद्मा-विद्मः जानीमः । किं च ते धाम धामानि स्थानानि आहवनीयगार्हपत्यदक्षिणाग्निरूपाणि विद्मः । किम्भूतानि ? विभृतानि विशेषेण हृतानि । धाम धामानि आधारभूतानि अपि । किम्भूतानि ? पुरुत्रा पुरुत्राणि पुरुषु बहुषु प्रदेशेषु त्रायन्ते इति पुरुत्रा तानि पुरुत्राणि जगद्रक्षाकारकाणि इत्यर्थः । इति च ते नाम विद्मः । किम्भूतं ? परममुत्तमं, न केवलमुत्तममपि तु यद् गुहा गुहायामवस्थितं गुह्यमिति । अपि च यतः सकाशात् आजगन्थवै घृतरूपेण आगतोऽसि तमुत्सं उत्स्यन्दनं जलरूपं स्थानं तत्वत्संश्रयजनकं वयं विद्मः। अत्र विद्मा इति आकारश्छान्दसः। "द्व्यचोऽतस्तिङ" इति सूत्रेण । धाम इति बहुवचने एकवचनं, विभृतानि पुरुत्राणि इत्यत्र निलोपश्छान्दसः । गुहा इति सप्तम्यां प्रथमा, आजगन्थेति "गम्लृगतावि"त्यस्माद्धातोः लिड्मध्यमपुरुषैकवचने । अनुपदेशत्वात् (२) इट्निषेधः । हे अग्ने ! तव रूपं स्थानं नाम उत्तमप्रकारेण वयं जानीम इति वाक्यार्थः ॥२॥

---

(१) अत्र पारस्कर सूत्रम् "स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशेत्" । ( १।८।१६ ) तत्र "दिवस्परीत्यस्योत्तमामृचं परिशिनष्टि" ( १।९।१६ ) इति सूत्रेण दिवस्परीत्यादिद्वादशसु एकादशैव ऋचः पठनीयाः । (२) "ऋतोभारद्वाजस्ये" ( पा. ७।२।६३ ) विनियमात् ।

समुद्रे त्वा नृमणाऽअप्स्वन्तर्नृचक्षाऽईधे
दिवो अग्नऽऊधन् । तृतीये त्वा रजसि तस्थि-
वाꣳसमपामुपस्थे महिषाऽअवर्द्धन् ॥ ३ ॥

हे अग्ने ! त्वा त्वां नृमणाः (१) प्रजापतिः ईधे दीपयाञ्चकार। किम्भूतस्त्वां ? समुद्रे अप्सु जलेषु अन्तर्मध्ये वाडवाग्निरूपेण विद्युद्रूपेण चावस्थितं, नृमणाः किम्भूतः ? नृचक्षाः नृषु मनुष्येषु (२) चक्षुरस्येति नृचक्षाः । किम्भूतस्त्वां ? दिवः स्वर्गस्य ऊधन् ऊधसि (३) अप्सु जलस्थानीये स्थाने आदित्ये स्थितम् । आदित्यो हि पृथिवीगतं रसं रश्मिभिरादाय पुनर्वर्षासु त्यजति एतावता। अत्र स्वर्गप्रदेशे आदित्यस्तिष्ठति तत्स्थानं स्वर्गस्य ऊध इव ऊधःशब्देनाभिहितम् । एवं तृतीये रजसि रञ्जनात्मके तेजोमण्डले भूमिराकाशं स्वर्ग इति गणनाक्रमेण तृतीयः स्वर्गो भवति। तृतीये लोके स्वर्गे अपाम् उपस्थे उत्सङ्गे च तस्थिवांसं स्थितं त्वां महिषाः महान्तः ( निर्घं-३।३।८ ) 'महेष्टिषच् ( उ० १।१८ ) प्राण वायवः अवर्द्धयन् वर्द्धयाञ्चकुः । अत्र ऊधन् इति उधःशब्दात्सप्तम्येकवचनं तस्य "सुपां सुलुगि" ति लुक् "व्यत्ययो बहुल"-मिति लकारस्य नकारः । महिषाः "प्राणा वै महिषा" इति श्रुतिः प्रमाणम् । समुद्रे वाडवाग्नितया, स्वर्गे आदित्यरूपेण स्थितं त्वामग्निं वायवो वर्द्धयन्त्विति अग्निस्तुतिर्वाक्यार्थः ॥ ३ ॥

अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा
रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो विहीमिद्धोऽअख्यदारोदसी भानुना भात्यन्तः ॥ ४ ॥

अग्निः अक्रन्दत्, क्रन्दति । शब्दं (४) करोति । किं च क्षामा क्षमां पृथिवीं (५) रेरिहत् लेलिहत् पुनः पुनर्लेढि आस्वादयतीत्यर्थः । (६)रलयोरेकत्वस्मरणात् लकारस्य स्थाने रेफः पठ्यते । किं कुर्वन् ? वीरुध ओषधीः ( निघं० ४।३।६ ) समञ्जन् (७) आप्नुवन् । अपि च इद्धः सन्धु-

(१) नृषु मनुष्येषु रक्षितव्यमिति मनोयस्यसः । "अत्वसन्तस्ये ( पा० ६।४।१४ ) तिदीर्घः । (२) वस्तुतस्तु—नॄन् चष्टे पश्यतीत्येवमसुन्नन्ततया व्याख्येयम् । (३) अत्र दिवः अन्तरिक्षस्य ऊधन् ऊधसि उत्सङ्गे ( मध्ये ) विद्युद्रूपेणेति व्याख्येयम् । तथाचप्रथमोभूलोकः । द्वितीयोऽन्तरिक्षलोक आकाशः । तृतीयः स्वर्गलोक इति गणनाक्रमाभिधानात् । तत्राद्ये समुद्रे वाडवाग्निरूपेण द्वितीय आकाशेविद्युद्रूपेण तृतीये स्वर्गे आदित्यरूपेणेति केचिदाचक्षते । (४) लङर्थेलङ् ( पा० ३।४।६ ) विस्फूर्जतीत्यर्थः । (५) क्षमेति पृथिवीनाम ( निघं० १।१।४ ) ततोऽमोलुक् ( पा० ७।१।३९ ) छान्दसो दीर्घः । ( पा० ६।३।१३७ ) । (६) "लिहआस्वादने" ( अ० प० ) यङ्लुगन्ताच्छतृप्रत्ययः । "नाभ्यस्ताच्छतुरि" ( पा० ७।१।७८ ) ति नुमोऽभावः । (७) स्वकीयज्वालासमूहेने-

दीप्तः (१) सन् व्यख्यत् विख्यापयति (२)। किम्भूतः ? सद्यो जज्ञानः तात्कालिकः (३)जायमानः। हिशब्दईशब्दौ पादपूरणार्थौ। किं च रोदसी द्यावाभूमी अन्तर्मध्ये द्यावाभूम्यो (४) र्मध्ये इत्यर्थः। "द्यावाभूमी च रोदसी" इत्यमरः। भानुना रश्मिना (५) आभाति। क इव स्तनयन् ? द्यौरिव, अत्र मञ्चाः क्रोशन्तीति वत् द्यौः शब्देन मेघ उच्यते। एवमुक्तं भवति यथा मेघः स्तनयन् शब्दं कुर्वन् पृथिवीं बिन्दूदकेन लिहति ओषधीर्व्याप्नोति भानुना विद्युद्रूपेण प्रकाशयति एवमग्निरिति, पर्जन्यवत् स्तूयतेऽग्निरत्र ॥ ४ ॥

श्रीणामुदारो धरुणो रयीणां मनीषाणां
प्रार्पणः सोमगोपाः। वसुः सूनुः सहसोऽ
अप्सु राजा विभात्यग्रेऽउषसामिधानः ॥ ५ ॥

वसुरग्नि (६) विभाति प्रकाशते। उषसामग्रे प्रथमं प्रत्यूषसमये इधानः (७)दीप्यमानः। प्रत्यूषसमये हि अग्नीनां प्रादुष्करणं क्रियते। पुनः किम्भूतः अग्निः ? श्रीणां लक्ष्मीणामुदारः (८) आधाता। रयीणां धनानां ( निघं० २।१०।८ ) धरुणः धारयिता। मनीषाणां मनोऽभिलषितानां प्रार्पणः प्रापयिता। "धनमिच्छेद्धुताशनादि" त्यभिप्रायमेतत्। सोमगोपाः सोमं चन्द्रं गोपायति, रक्षति। "गुपू रक्षणे" इत्यस्मात् सोमोपपदात् "सर्वधातुभ्योऽसुन्" इत्यसुन् प्रत्ययः, सहसः बलस्य ( निघं० २।९।१७ ) सूनुः पुत्रः। बलवता समेध्यमानश्चेदुत्पद्यते, अप्सु जलेषु अवस्थितो राजा वरुणरूपः(९)। सर्वमेव श्रीणामुदारः इत्यादिवसुरित्यस्य विशेषणम् ॥ ५ ॥

विश्वस्य केतुर्भुवनस्य गर्भऽआरोदसीऽ
अपृणाज्जायमानः। वीडुं चिदद्रिमभिनत्
परायन् जना यदग्निमयजन्त पञ्च ॥ ६ ॥

---

त्यर्थः। (१) दीप्तः सन्। (२) व्यख्यत्–इदं सर्वं विख्यापयति। अन्तर्भावितण्यर्थोऽत्र ख्यातिः। लडर्थे लुङ्। ( पा० ३।४।६ ) अङि ( पा० ३।१।५३ ) आतः लोपे ( पा० ६।४।६४ ) अडागमः। व्यवहितोपसर्गप्रयोगश्छान्दसः। ( पा० १।४।८२ )। ईमिति निपातः पादपूरणः ( निरु० १।६ )। ( ३ ) लडर्थे लिट्। ( ४ ) षष्ठ्या लुक् ( पा० ७।१।३८ )। ( ५ ) किरणेन। "भानुः करोमरीचिः स्त्री-पुंसयोरि"त्यमरः। आभाति समन्तात्प्रकाशते। (६) सर्वस्य निवासहेतुः। "वसेरुः" (उ० १।१०) अन्तर्भावितण्यर्थोऽत्र वस्धातुः। तथाच मेदिनी "वसुर्नादेवभेदाग्नि–भायोक्त्र वक–राजसु" इति॥ (७) "ञि इन्धी दीप्तौ" ( रु० आ० ) लटः शानच्। छान्दसत्वान्नलोपः। (८) गवाश्वादिसम्पदाम्। उदारः अत्यर्थन्दाता। "उदारोदातृमहतो"रित्यमरः। (९) यद्वा–अप्सु वृष्टिरूपासु राजा

यत् यम् अग्निम् । अमोलुक् ( पा० ७।१।३० ) पञ्च जनाः । चत्वारो ब्राह्मणादयः निषादाख्यः सङ्कीर्णजातिश्चेति पञ्च (१)जना मनुष्याः। अयजन्त पूजितवन्तः । सोऽग्निर्विश्वस्य सर्वप्राणिजातस्य केतुः अग्न्यात्मना प्रज्ञानभूत इत्यर्थः। भुवनस्य भुवनवर्त्तिनो भूतजातस्य गर्भः अन्तर्वर्त्ती प्राणादिवायु (२) रूपेण । आइति उपसर्गोऽपृणादित्यनेन सम्बध्यते। यः अग्निः रोदसी आपृणात् द्यावाभूमी (३) पूरितवानित्यर्थः । ( आदित्यरूपतया) जायमानउत्पद्यमानस्सर्वात्मना प्रकटो भवन् । किं च यः अद्रिं (४) पर्वतम् ( निघं० १।२।१० ) अभिनत् विदारितवान् । किम्भूतं ? वीडुं वीडुशब्दोदृढार्थः (निघं० २।६।१५) (५) चित् शब्दोऽप्यर्थे दृढमपीत्यर्थः । किं कुर्वन् ? इन्द्ररूपेण परायन् परापरतोगच्छन् । एतेनाग्निरेव इन्द्रइत्युक्तम्भवति ॥ केतुरिति "कितज्ञाने" इत्यस्माद्धातोरौणादिक उप्रत्ययः ॥६॥

उशिक् पावकोऽअरतिः सुमेधा मर्त्ये-
ष्वग्निरमृतो निधायि ॥ इयर्त्ति धूममरुष-
म्भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥ ७ ॥

अग्निर्मर्त्येषु निधायि निहितः (६)। किम्भूतः? उशिक् कान्तः (निघं० २।१।६।१२ ) मनोहरः । पावकः पवित्रताकारी। अरतिः अलम्मतिः पर्याप्तमतिरित्यर्थः । सुमेधाः साधुप्रज्ञः । अमृतः अमरणधर्म्मा य एवं भूतोऽग्निः स धूमं धूममण्डलं उदियर्ति ऊर्द्ध्वं गम (७) यति । उदिति व्यवहितमत्र सम्बध्यते । किम्भूतं धूमम् ? अरुषम् अपरुषं रूपवदित्यर्थः । किं कुर्वन् अग्निः ? भरिभ्रत् जगद्धारयन् । अपि च शोचिषा रश्मिना द्याम् आकाशम् इनक्षन् व्याप्नु (८) वन् । किम्भूतेन शोचिषा ? शुक्रेण शुक्लवर्णेन । अत्र उशिक् इति वशकान्तावित्यस्माद्धातोरौणादिक इक प्रत्ययः । अरतिः अलं मतिरित्यस्य "व्यत्ययोबहुलमिति" वचनात् । अत्र तु मकारयोर्लोपः रलयोरैक्यस्मरणात् । भरिभ्रदिति "डुभृञ् धारणे" इत्यस्य "दाधर्ती"त्यादिसूत्रेण निपातनाद्रूपम् ॥ ७ ॥

---

विशुद्रूपेण राजमानः । (१) तथा च निरुक्तम् "पञ्चजनाश्चत्वारोवर्णाः निषादः पञ्चमइत्यौपमन्यवः" (३।८) इति । चत्वारो महर्त्विजो यजमानश्चेति पञ्चजना इति केचित् । (२) स हि प्राणभावेन गर्भवदन्तरवस्थितः । (३) पूरयति । लडर्थेलङि(पा० ३।४।६)ति परे। "द्यावाभूमी च रोदसी"इत्यमरः॥ (४) अदारयितव्यमपीत्यर्थः । अभिनत्–भिनत्तीतिपरे । (५) यद्यपि निघण्टावयं बलार्थे नपुंसकः पठितस्तथापि गुणवचनतया ततोऽस्त्यर्थे मतुपोलुकि (पा० ५।४।१९वा०) तद्वति वर्त्ततेऽतएव पुंल्लिङ्गतया निर्देशः । वीडयतिः स्तम्भनकर्म्मानैरुक्तः ( ५ १६ ) ततउण् । (६) देवैरितिशेषः । अत्र "बहुलंछन्दस्यमाङ्योगेऽपि (पा० ६।४।७५) इत्यडभावः । (७) "इतोवायमूर्ध्वं रेतःसिञ्चति धूमं साऽमुत्रवृष्टिर्भवति" इति श्रुतेः। सा इति विधेयप्राधान्यात्स्त्रीलिङ्गनिर्देशः । (८) इनक्षतिर्व्याप्तिकर्म्मा नैरुक्तोधातुः । ततो लटः शतरि रूपम् ।

दृशानो रुक्मऽउर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ॥ अग्निरमृतोऽअभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः ॥ ८ ॥

अग्निर्व्यद्यौत् विद्योतते । कया ? उर्व्या महत्या दीप्त्या इत्यर्थः । किम्भूतः ? दृशानः प्रत्यक्षतो दृश्यमानः रुक्मः रोचनरूपवानित्यर्थः । न केवलं विद्योतते किं तु यस्य अग्नेः आयुः जीवनं दुर्मर्षं दुःखेन मृष्यते खण्डयितुं शक्यते इति यावत् । सोऽग्निरमृतोऽमरणधर्माऽभवत् भूतः । किं कुर्वन् ? रुचानः "रुचदीप्तावभिप्रीतौच" ( भ्वा० आ० ) हर्षयन् । किमर्थं ? श्रिये लक्ष्म्यै लक्ष्मीं दातुमिच्छन्नित्यर्थः । किं च यदेनम् अपरोक्षनिर्द्देशे । आदित्यं द्यौः आकाशम् अजनयत् जनितवती । किम्भूतः ? सुरेताः शोभनं रेतो यस्य सः । शोभनत्वं च रेतसः एतद्देवत्वेन विश्वस्य द्योतनकारी आदित्यो जनितः । कैरजनयत् ? वयोभिः अन्नैः पशुपुरोडाशप्रभृतिभिः । पश्वादयो हि अग्नौ हुता आदित्योदयभावं भजन्त इत्यभिप्रायः । दृशान इति दृश धातोः कर्म्मणि लिटः शानच् "छन्दस्युभयथे"ति । शानच आर्धधातुकत्वान्मुक् न भवति । व्यद्यौदिति द्युत् धातोर्विपूर्वात् लिङर्थे लेटि, (पा० ३।४।६) शपो लुकि ( पा० २।४।७२ ) इकारलोपे ( पा० ३।४।१०० ) उपधावृद्धिः पदव्यत्ययश्चार्थः ॥ ८ ॥

यस्तेऽअद्य कृणवद् भद्रशोचेऽपूपन्देव घृतवन्तमग्ने ॥ प्रतन्नय प्रतरं वस्योऽअच्छाभि सुम्नं देवभक्तं यविष्ठ ॥ ९ ॥

हे भद्रशोचे ! कल्याणरश्मे ! देव ! देवनादियुक्त ! अग्ने ! यो यजमानः ते तव अद्य इदानीम् अपूपं पुरोडाशवत् कृणवत् करोति(१) । किम्भूतं ? घृतवन्तं घृतेनोपस्तीर्णाभिघारितं, तं यजमानं वस्यः वासोचितं(२) स्थानं प्रणय प्रणयसि प्रापयसि । सिलोपः (३)छान्दसः । किम्भूतं वस्यः ? प्रतरं प्रकर्षेण तीर्यते गम्यते प्रतरं, प्रकर्षार्थश्च अग्निप्रसादेन प्राप्यः । तमपि किम्भूतं ? अच्छं निर्म्मलं निष्पापमित्यर्थः । किं च हे यविष्ठ ! युवतम ! तं यजमानं सुम्नं सुखं ( निघं० ३।६।१६ ) आप्नुप अभिनय सर्वतः सु-

( १ ) "कृविर्हिंसाकरणयोः ।" ( भ्वा० प० ) ततो लेटि रूपम् । ( २ ) अत्र "वसनिवासे" ( भ्वा० प० ) इत्यतोबाहुलकात् कर्म्मणि तृन् । अतिशयेन वस्तृः वसीयः । "तुश्छन्दसि" ( पा० ५।३।५९ ) इतीयसुनि "तुरिष्ठेमेयस्सु" ( पा० ६।४।१५४ ) इति तृचो लोपे छान्दसे च ईलोपे ( पा० ३।१।८५ ) वस्य इति भवति ॥ ( ३ ) वस्तुतस्तु प्रार्थनायां लोट् ।

खाभिमुखं प्रापयेत्यर्थः। किं भूतं सुखं? देवभक्तं देवैः सेवितम्। तथा च हे अग्ने! यजमानः तव पुरोडाशङ्करोति तं यजमानं देवोपभोग्यं सुखाभिमुखं कृत्वा अपूपप्रसादं प्राप्य सुखं स्वर्गं प्रापयेति प्रार्थना वाक्यार्थः। कृणवदिति "डुकृञ् करणे" स्वादिः,(१) "स्वादिभ्यः श्नुः" "इतश्च लोपः परस्मैपदेष्वि"ति तिपइकारलोपे "लेटोऽडाटा"वित्यडागमः उकारस्य गुणः, अवादेशः,। वस्य इति वसधातोः "अमावस्यदन्यतरस्या" मिति व्यवस्थितविभाषया केवलस्यापि धातोर्ण्यतारूपं, विभक्तिव्यत्ययेन द्वितीयैकवचने प्रथमैकवचनम्। अनुस्वार(२) लोपश्छान्दसः॥ ९॥

आ तम्भज सौश्रवसेष्वंग्न उक्थऽउक्थऽआ-
भंज शस्यमाने॥ प्रियः सूर्ये प्रियो ऽअग्ना-
भवात्युज्जातेन भिनददुज्जनित्वैः॥ १०॥

हे अग्ने! तं यजमानम् आभज आसेवस्व। तस्य सन्निहितो भव। त्वयि सन्निहिते किं स्यादित्यपेक्षायामाह—यस्य यजमानस्य उक्थे उक्थे स्तोत्रे स्तोत्रे शस्यमाने (३)सौश्रवसेषु सुष्ठु (साधु) श्रवणीयेषु यज्ञकर्मसु असौ यजमानः सूर्ये सूर्यस्य (४)प्रियः भवाति भवतु। अग्ना अग्नेश्च प्रियः भवाति भवतु। लेट्प्रार्थनायाम्। न केवलमेतावदेव अपि तु जातेन उत्पन्नेन पुत्रेण उदभिनत् उद्भिनत्तु। जनित्वैः जनयितव्यैः जनिष्यमाणैश्च पौत्रादिभिः सह उत्—अभिनत्। उद्भिनत्तु (५)धर्मार्थकामान्, तस्य पुत्रादयोऽपि धर्मकामयुक्ता भवन्तीत्यभिप्रायः। अत्र सूर्य इति "सुपां सुपो भवन्ती"ति षष्ठ्येकवचने सप्तम्येकवचनम्, अग्ना इति षष्ठ्येकवचने सुलुगादिवाक्येन विभक्तिलोपः। वर्णव्यत्ययेन इकारस्याकारः, उदभिनदिति "भिदिर् विदारणे" लेट् "इतश्च" इतीकारलोपः। "लेटोऽडाटा"वित्यडागमः। जनित्वैरिति "जनीप्रादुर्भावे" इत्यस्मात् "कृत्यार्थे तवै केन्केन्यत्वन" इति त्वन्प्रत्ययः। तृतीयाबहुवचनम्॥ १०॥

त्वामंग्ने यजमानाऽअनु द्यून्विश्वा वसु
दधिरे वार्य्याणि॥ त्वया सह द्रविणमिच्छमाना
व्रजं गोमन्तमुशिजो विवव्रुः॥ ११॥

---

(१) वस्तुतस्त्वेतदशुद्धम्। "कृञ् हिंसायामि" त्यस्यैवात्र पाठात्। किन्त्वयन्तनादिस्ततोनुदुर्लभ इति यथोक्तपूर्वकृविधातोरेवेति बोध्यम्॥ (२) अच्छमित्यत्रेतिभावः। एतदप्यशुद्धम्। अच्छेत्याप्तुमित्यर्थेऽव्ययमितिशाकपूणिमतम्। (निघं० ४।२।७८)। (३) सर्वैर्ऋत्विग्भिः सम्यैश्च प्रशस्यमाने। (४) विभक्तिव्यत्ययश्चार्षः। (पा० ३।१।८५) (५) उद्भेद—मुदयं प्राप्नोतु।

हे अग्ने ! यजमानाः त्वां सेवमानाः अनुद्यून् अनुदिवसान् प्रत्यहमिति यावत् । विश्वा विश्वानि गोभूहिरण्यवस्त्रादीनि वसु वसूनि धनानि दधिदुग्धादीनि । विभक्तेर्लुक् ( पा० ७।१।३९ ) दधिरे धारयन्ति । लडर्थे लिट् । किम्भूतानि ? वार्य्याणि वरणीयानि प्रार्थनीयानि । किं च त्वया सह त्वया युक्ताः समग्रं द्रविणं यज्ञफलं मोक्षरूपम् इच्छमानाः (१)कामयमानाः । व्रजं सुकृतिनो व्रजन्त्यनेनेति व्रजस्तं देवयानमार्गं विवव्रुः विभिदुः । रविमण्डले मार्गं कृतवन्त इत्यर्थः । किम्भूतं व्रजम् ? गोमन्तं रश्मिमन्तमादित्यमित्यर्थः(२)। किम्भूता यजमानाः? उशिजः मेधाविनः ज्ञानिनः । ( निघं० ३।१५।१६ ) । तेनैतदुक्तम्भवति त्वां सेवमाना मानाः यदा धनादिकमिच्छन्ति तदा ज्ञानिनो भूता ज्ञानकर्मसमुच्चयादित्यद्वारा मोक्षं प्राप्नुवन्तीति ॥ ११ ॥

पूर्वो ब्रूया(३)त् प्राणेति, व्यानेति दक्षिणो,ऽपानेत्यपर, ऽउदानेत्युत्तरः, समानेति पञ्चमऽउपरिष्टादवेक्षमाणो ब्रूयात् ॥ १ ॥

अथ ते पञ्च ब्राह्मणाः कुमारस्यानुप्राणनं कुर्वन्ति एभिः पञ्चभिर्मन्त्रैः । प्राण–व्यान–अपान–उदान–समान–एतानि पञ्च सम्बोधनानि पदानि । अनेन सम्बोधनेन प्राणाः पञ्च वायवः आस्यभूता अस्मिन् सम्बोधने स्थिरतो भवेयुरित्यभिप्रायः ॥ १ ॥

( अथ कुमारजन्मभूम्यभिमन्त्रणमन्त्रः ) ।

वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ॥
वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतं
जीवेम शरदः शतꣳ शृणुयाम शरदः शतम् ॥ १ ॥

हे भूमे ! अहं ते तव हृदयं वेद जानामि । किम्भूतं ? चन्द्रमसि श्रितं सम्बद्धं, कुत्र ? दिवि आकाशे । तन्मां विद्यात् मामपि तज्-जानीयादित्यर्थः, पश्येम शरदः शतमिति व्यक्तार्थं, व्याख्यातं च गर्भाधाने ॥ १ ॥

( अथ कुमाराभिमर्शनमन्त्रः ) ।

अश्मा भव परशुर्भव हिरण्यमस्तुतं भव ॥
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ १ ॥

---

( १ ) पदव्यत्यय आर्षः । ( २ ) गावो रश्मयोऽस्य सन्तीतिगोमान् । रश्मिमण्डलमध्यगामित्यर्थः ।
( ३ ) अत्र पा० गृ० सू० "प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणिते" ति ॥ ( १।१०।१६ ) ततः परतनमिदं सूत्रम् ॥ अत्र "स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु" । १।१४।१६

हे कुमार! इति सम्बोधनमध्याहार्य्यं, त्वम् अश्मा(१) भव प्रस्तरमिव दृढाङ्गो भव। परशुः कुठार इव विरोधिनां छेदको भव। किञ्च हिरण्यम् (२) अस्तुतं यथा सुवर्णम् (३) अस्तुतम् अक्षरं, तथा त्वमपि भव। किञ्च त्वं मम आत्माऽसि। किम्भूतः? पुत्रनामा मदीयात्मना सह तव पुत्रत्वमिति विशेषः। अपरञ्च सर्वं मया सह तव तुल्यमेवेत्यभिप्रायः। किञ्च शतं शरदः शतवर्षाणि जीवेति वाक्यार्थः स्फुट एव ॥ १ ॥

अथ स्तन्यदानमन्त्रौ।

इमꣳ स्तनमूर्जस्वन्तन्धयापां प्रपीनमग्ने
सरिरस्य मध्ये ॥ उत्सञ्जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳ सदनमाविशस्व ॥ १ ॥

हे अग्ने! अग्निवत्तेजस्विन्कुमार! त्वम् इमम् अपरोक्षं स्तनं, धय पिब "धेट्पाने"। किम्भूतम्? ऊर्जस्वन्तं रसवन्तम्। प्राणहेतुभूतम्। अपाम् अप्शब्देन दुग्ध(४)मुच्यते सादृश्यात्। तृतीयार्थे षष्ठी अद्भिः। प्रपीनं प्रपूरितं कुतइत्याकाङ्क्षायां सरिरस्य लोकस्य। (५) मध्ये वर्त्तमानस्त्वम्। कथम्भूतं स्तनं? उत्सं पयःस्रवन्तं(६)। पुनः किम्भूतं? मधुमन्तम् मधुरं, हे अर्वन्! (७) सर्वदेहगत!। समुद्रियं-समुद्रसम्बन्धि। सदनम् गृहम् शरीरम् "आत्मा वै समुद्र" इति श्रुतेः। आविशस्व प्रविश चिरञ्जीवेति तदर्थः। एतेनैतदुक्तं भवति। यथा समुद्रस्थो (८) वाडवाग्निः सर्वमेव जरयति तथा भवानपि यथाप्राप्तमर्थं जरयतु ॥ १ ॥

यस्ते स्तनः शशयो यो मयोभूर्य्यो रत्नधा
वसुविद्यः सुदत्रः ॥ येन विश्वा पुष्यसि
वार्य्याणि सरस्वति तमिह धातवेऽकः ॥ २ ॥

हे सरस्वति! तं स्तनमिहास्मिन्स्थाने धातवे, धातुं पातुं "धेट् पाने"। तुमर्थे तवे प्रत्ययः, पानार्थम् अकः कुरु। अस्मै पानाय प्रयच्छेत्यर्थः। करोतेर्लोड्र्थे लङि शपि लुप्ते गुणः(९)। तं कं? यस्ते तव स्तनः

इति। (१) मणिरिव दृढः प्रियश्च। (२) हिरण्यवत्तेजोयुक्तः स्पृहणीयश्च। (३) अनभिभूतमच्युतस्वरूपमित्यर्थः। (४) तस्याप्प्रकृतित्वात् पयइत्येव शब्दगम्यत्वाच्च। (५) "इदमेव वै लोकाः सरिरम्" (श० ब्रा० २।५।२।३४) इति श्रुतेः। (६) प्रवहन्तम्। "उत्सः प्रस्रवणं वारिप्रवाह" इत्यमरे वारीति पयोऽर्थमपि कक्षीकरोतीति श्रुतेरभिसन्धिः। "पयः क्षीरं पयोऽम्बुचे"त्यमरोक्तेः। (७) इयर्त्तिसर्वतोगच्छतीत्यर्वा तत्सम्बोधने। चलनशील। (८) अयमर्थः कुतस्त्य इति स एव वेद। (९) "हल्ङ्याब्भ्यः" (पा० ६।१।६८) इति सिलोपेऽडा, गमे रेफस्य विसर्गः।

शशयः। शेते इति शशयः। अच्प्रत्यये द्वित्वम् पूर्वस्यात्वं च छान्दसम्। सुप्तइवास्ते। अन्यैरनुपभुक्तत्वात् "यस्ते स्तनो निहितो गुहायामि"ति श्रुतेः। यश्च स्तनो मयोभूः मयः सुखं भावयति प्रापयति सर्वभूतानामिति मयोभूः। यश्च रत्नधाः रत्नानि दधाति रत्नधाः। रमणीयानां धनानां धारयिता वा। यश्च वसुवित् वसु धनं विन्दति वेत्ति वा वसुवित्। यश्च सुदत्रः सुष्ठु ददातीति सुदत्रः (१) सुदाता। धनवानन्यो दातुं सुखेन न शक्नोति त्वत्स्तनस्तु धनवान् सुदाता चेति अन्येभ्य आधिक्यम्। किञ्च येन स्तनेन विश्वानि सर्वाणि वार्याणि वरणीयानि प्रार्थनीयानि वस्तूनि त्वं पुष्यसि पुष्णासि त्तरसीत्यर्थः। तं स्तनमेतत्पानाय प्रयच्छे-त्यर्थः॥ २॥

अथ शिरःस्थाने जलपूर्णपात्रनिधान(२)मन्त्रः।

आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ॥

एवमस्याँसूतिकायाँसपुत्रिकायां जाग्रथ॥ १॥

हे आपः! यूयं देवेषु जाग्रथ। देवानां रक्षायां निद्रां मुञ्चथ(३)। यथा यूयं देवेषु जाग्रथ एवं तथा अस्यां सूतिकायां जाग्रथ। किं भूतायां? सपुत्रिकायां पुत्रसहितायाम्। हे आपः! यूयं देवेषु जाग्रथेति अपां स्व-स्य प्रसूतकृत्ये अस्याः सपुत्राया रक्षार्थं जाग्रथेति प्रार्थना वाक्यार्थः॥१॥

अथ सूतिकागृहस्य द्वारदेशे होम(४)मन्त्रः।

शण्डामर्काऽउपवीरः शौण्डिकेय ऽउलूखलः॥

मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा॥ १॥

शण्डा(५) शण्डाऽभिधानो बालग्रहः। इत आहुतेर्नश्यतात् नष्टो (६) भवतु। एवं मर्कादयश्च्यवनान्ताः सप्तबालग्रहाः। नश्यतात् इति क्रियापदम् अष्टाभिः सह प्रत्येकं सम्बध्यते। अनया आहुत्या शण्डादयो-ऽष्टौ बालग्रहा नश्यन्त्विति वाक्यार्थः॥ १॥

आलिखन्ननिमिषः किंवदन्तऽउपश्रुति-

र्हर्य्यक्षः कुम्भी शत्रुः पात्रपाणिर्नृमणिर्हन्त्री

(१) बाहुलकात् ष्ट्रन् ह्रस्वश्च। (२) एतच्च प्रागुत्थानाद्भवति। (३) तत्साधनत्वेन तिष्ठथ। (४) द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्सन्धिवेलयोः फलीकरणमिश्रान्सर्षपान-ग्नावावपति शण्डामर्का इति प्रतिमन्त्रम् (पा० गृ० सू० १।२।३।१६)। (५) शृणाति हिनस्तीति शण्डा, मारयतीति मर्कः। एतौ पृषोदरादी। उपघाते वीरः समर्थः। विघ्नकुशल इत्यर्थः। शौण्डिकेय आश्रितपालकः। उलूखलोऽप्रतीकार्यः। मलिम्लुचोऽतिमलिनाशयः। द्रोणासो दीर्घनासः। च्यावय-त्यङ्गानीति च्यवनः। (६) मत्कृताऽऽवपनोपद्रुतो भीतश्च इतोऽस्मात्स्थानान्नश्यतु अपगच्छतु॥

मुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा ॥२॥

आलिखन्नित्यादि ये एकादश बालग्रहाः । अत्रापि नश्यतादिति क्रियापदं प्रत्येकमेकादशभिरेव सम्बध्यते । ते चैकादशैव ॥ २ ॥

अथ बालग्रहशान्तिमन्त्राः । (१)

कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः ॥ चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ यत्ते देवा वरमददुः स त्वं कुमारमेव वाऽवृणीथाः ॥ चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर तत्सत्यम् ॥ १ ॥

कूर्कुरादीनि त्रीणि नामानि । बालं कुमारं बध्नातीति बालबन्धनः । कुमारग्रहः । बालबन्धन इति त्रिभिरेव कूर्कुरादिभिः सह प्रत्येकं सम्बध्यते । चेत् चेदिति वीप्सादर्शनात् । तेन कूर्कुरश्चेद्बालबन्धनः । एतेषां मध्ये यदि कश्चिद्बालबन्धोऽस्ति तदा हे शुनक ! ते तव नमोऽस्तु । त्वं सृज विसृज कुमारंत्यजेत्यर्थः । हे शुनक ! इति कूर्कुरादीनां त्रयाणामेव साधारणमेकं सम्बोधनपदं, (२)किं च सीसरः तेषां पिता लपेत वदेत् । किं वदेत् ? अपह्वर अपगतकौटिल्यो भव । कूर्कुरादीनामेकैकबालग्रहमध्ये यदि तद्वर्गोऽस्ति तदर्थं मदीयनमस्कारेण पूजितः पितुः सीसरस्य वचसा एनं कुमारंत्यजत्विति प्रार्थना वाक्यार्थः । तत्सत्यं यत्तेदेवा इत्यादेरयमर्थः । हे शुनक! यत्ते देवा ब्रह्मादयोवरम्प्रार्थितमर्थम् अदुः दत्तवन्तः । स पूर्वोक्तरूपः त्वं कुमारं बालमेव वरं अवृणीथाः वृतवानसि । ततश्चेदिति वीप्सायाम् । अत्रापि देवैर्वरदानं त्वया च वरत्वेन कुमारस्य वरप्रार्थनम् इत्युभयेन तत् सत्यम् इत्यस्य सम्बन्धो विवक्षितः । यद्यपि तदुभयं सत्यं तथापि ते नमोऽस्तु त्यजेति । यद्यपि त्वया देवेभ्यः कुमारो भक्ष्यत्वेन प्रार्थितः तैश्च दत्तः तथापि मम नमस्कारेण तुष्टः पितृवाक्येनैनं त्यजेति प्रार्थना वाक्यार्थः ॥ १ ॥

यत्ते सरमा माता सीसरः पिता श्याम(ब)शबलौ भ्रातरौ ॥ चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वरेति ॥ २ ॥

---

(१) अत्र पा० गृ० सूत्रम् । "यदि कुमार उपद्रवेत् जालेन प्रच्छाद्योत्तरीयेण वा पिता अङ्कमाधाय जपति कूर्कुरइत्यादि (१।५५।१६) अत्र कुमारपदेन तद्घातको बालग्रह उच्यतइतिभाष्यस्वरसः ।
(२) अत्र कूर्कुरः कर्कशः । स च भीषणः । सुकूर्कुरश्चातिभीषणः । सीसरः अपसारकः । अत्र लपेतापह्वरेति च सम्बोधनपदं जयरामभाष्ये ।

हे शुनक! यस्ते तव सरमा शुनी माता, सीसरः पिता, श्याम-शबलौ भ्रातरौ। ततश्चे (१) त्सत्यम् अत्रापि वीप्सायां प्रयोजनं तदेव तथाऽपि नमोऽस्तु सीसरोलपेतापह्वरेति पूर्ववदेव। तव माता सरमा सीसरः पिता भ्रातरौ श्याम(ब)शबलौ। एतत्सत्यमेव। तथापि मम नमस्कारेण तमेनं कुमारं त्यजेति वाक्यार्थः। वृङ् अपनयने इत्यस्य धातोरपपूर्वस्य लोटि रूपम्॥ २॥

न नामयति न् रुदति न हृष्यति न ग्लायति।

यत्र वयं वदामो यत्र चाभिमृशामसि॥ ३॥

(अथ कुमाराभिमर्शनमन्त्रः)

यत्र कुमारे वयं वदामः। किं वदाम—इत्याकाङ्क्षायांपूर्वोक्तमन्त्रमिति बोद्धव्यम्। यत्र चाभिमृशामसि अभि सर्वतोभावेन यस्याङ्गस्पर्शनं कुर्मः। (२) स कुमारः न नामयति अङ्गनमनन्नकरोति। कुब्जभङ्गुरादिकं, न करोतीत्यर्थः। न रुदति रोदनपीड़ायुक्तो न भवति। न हृष्यति हर्षयुक्तो न भवति(३)। न ग्लायति न दुःखितो भवतीत्यर्थः॥३॥

इति बालग्रहोपद्रवशान्तिः।

नामकर्मणि वैदिकमन्त्रैरनुष्ठानं पारस्करेण नोपदर्शितम् अतोऽस्माभिरपि तदीयव्याख्यानं न कृतमिति समाप्तं जातकर्म॥ *॥

अथान्नप्राशनम्।

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः

पशवो वदन्ति॥ सा नो मन्द्रेषमूर्ज्जं दुहाना

धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा॥ १॥

देवा ब्रह्मादयः (४) यां वाचं वाणीमजनयन्त उत्पादितवन्तः। किम्भूतां? देवीं कान्त्यादिगुणवतीं (५), तां वाचं विश्वरूपाः नानारूपाः ऋषिमुनिब्राह्मणादयः॥ पशवः मनुष्यादिरूपाः (६) वदन्ति सा वाक् धेनुर्भूत्वा अस्मानुपैतु उपगच्छतु। उप इति व्यवहितेन एत्वित्यनेन सम्बध्यते। हेतुगर्भविशेषणमाह–धेनुः किं भूता? नोऽस्माकम् ऊर्जं सामर्थ्यं दुहाना पूरयन्ती। ऊर्जं किं भूतं? मन्द्रेषं मन्द्रो गम्भीरः। अव्यक्त इति यावत् तस्य इषं गमकं ज्ञापकम् इति यावत्। अव्यक्तः परोक्षोऽ-

(१) अत्र किङ्कुर्वन्? चेच्चेत् छुछुशब्दङ्कुर्वन् इति सर्वभाष्यकृतः प्राहुः॥ (२) अत्र "इदन्तोमसि" (पा ७।१।४६) इति मसस्मागमः। "मृश आमर्शने" (तु० प०) अभिमर्शनं स्पर्शः। (३) हर्षं नाभिनयतीत्यर्थः। (४) प्राणादिवायव इति जयरामः। (५) द्युतिमतीं वैखर्याख्याम्। (६) "पशुरेव स देवानाम्" इति श्रुतेः। स मनुष्यादिरूपः। अतएव

ष्यर्थो येनावगम्यते तत्सामर्थ्यमस्माकं पूरयन्तीत्यर्थः। पुनः किं भूता? सुष्टुता सुष्ठु स्तुता(१) ॥ १ ॥

वाजो॑ नोऽअ॒द्य प्रसु॑वाति॒ दान॒ं वाजो॑ दे॒वाँ ऋ॒तुभिः॑ कल्पयाति ॥ वाजो॒ हि॒ मा॒ सर्व॑वीरं जजान॒ विश्वा॒ऽआशा॒ वाज॑पति॒र्जये॑यम् ॥ २ ॥

वाजो अन्नम् ( निघं० २।७।१ ) अन्नाधिष्ठात्री देवता। नोऽस्माकम् अद्यास्मिन्नन्नप्राशनसमये दानं होमरूपं(२)प्रसुवाति प्रसुवतु—अभ्यनुजानातु। प्रपूर्वः सुवतिरभ्यनुज्ञाने वर्त्तते इत्युव्वटः। किं च वाजः देवानिन्द्रादीनृतुभिः समयविशेषैः कल्पयाति कल्पयतु योजयतु। अस्मिन् कर्मणि हुतेनान्नेन देवाश्चिरकालं वर्त्तन्तामित्यर्थः। हि यतः वाजः मा मां सर्ववीरं सर्वकार्येषु वीरं क्षमं जजान कृतवान्। अतः कारणात्। वाजपतिरन्नस्य ईश्वरोऽहं सर्वाः आशा जयेम। प्रसुवाति कल्पयाति इति पदद्वयं लोडर्थे लट्प्रत्यये रूपम् ॥ २ ॥

प्राणेनान्नमशीय स्वाहा ॥ ३ ॥

प्राणेन प्राणवायुना अन्नमदनीयम् अशीय भुञ्जे ॥ ३ ॥

अपानेन गन्धानशीय स्वाहा ॥ ४ ॥

अपानेन अपानवायुना गन्धानशीय भुञ्जे ॥ ४ ॥

चक्षुषा रूपाण्यशीय स्वाहा ॥ ५ ॥

चक्षुषा चक्षुरिन्द्रियेण रूपाणि शुक्लादीनि अशीय भुञ्जे ॥ ५ ॥

श्रोत्रेण यशोऽशीय स्वाहा ॥ ६ ॥

श्रोत्रेण कर्णेन्द्रियेण यशः कीर्त्तिम् अशीय अन्नगन्धरूपयशसाम् अशनमुपभोगमनुभवामीत्याशंसा वाक्यार्थः। अत्र चाशीयेत्युत्तमपुरुषप्रयोगात् कर्त्तृगोचरा आशंसा यद्यपि प्रतीयते तथाऽपि कुमारविषयगोचरैव बोद्धव्या। तथा च श्रुतिः "यां वै काञ्चन यज्ञसमृद्धिम् ऋत्विज आशासते यजमानस्यैव से"ति ॥ ६ ॥

इति अन्नप्राशनमन्त्रव्याख्या ॥ * ॥

---

शिवः पशुपतिरुच्यते स हि मनुष्याणाञ्चतुष्पदाञ्चाधिपतिः ॥ (१) वस्तुतस्तु—सा वाक् नोऽस्मानुपैतु सन्निहिताऽस्तु ) किम्भूता? मन्द्रा हर्षकरी "मदी हर्षे"। सुष्टुता शोभनैर्मन्त्रैस्तद्द्रष्टृभिर्वा स्तुता। अत्र दृष्टान्तः धेनुः "वत्सानिवे"ति शेषः। इषमिष्यमाणरसमिति गदाधरः। ऊर्जम् अन्नादिच ( निघं० २।७।१५ ) दुहाना—अर्पयन्तीत्यर्थः ॥ (२) प्राणाग्निहोत्रार्थमन्नमुपादीयत इति तस्य प्राणादिभ्यः पञ्चभ्यो भ्यन्तरवायुभ्यो दानं होम एव पर्यवस्यति ॥

अथ चूडाकरणमन्त्रव्याख्या ।

उष्णेन वाय ऽउदकेनेह्यदिते केशान्वप ॥ १ ॥

हे वायो ! वायुसम्बोधनेनात्र कार्ये कारणोपचारात् शीतलं जलमेव सम्बोधितं, हे शीतलजल ! हे अदिते ! अखण्डितशील ! त्वम् उष्णेन उदकेन सह इहि आगच्छ सङ्गतिं कुरु । सङ्गत्य च केशान्वप छिन्धि । केशच्छेदनार्थम् उष्णजलशीतलजलयोः सङ्गतिरस्त्विति वाक्यार्थः । अदिते इति "दो ऽवखण्डने" इत्यस्माद्धातोर्नञ्पूर्वात् क्तिन् ॥ १ ॥

सवित्रा प्रसूता दैव्या ऽआप ऽउन्दन्तु ते तनुम् । दीर्घायुत्वाय वर्च्चसे ॥ २ ॥

आपः जलानि ते तव कुमारस्य तनुं देहावयवम् उन्दन्तु क्लेदयन्तु । "उन्दी क्लेदने" लोट् । आपः किम्भूताः ? सवित्रा आदित्येन प्रसूताः जनिताः । पुनः किम्भूताः ? दैव्या दिवि आकाशे उत्पन्नाः । किमर्थमुन्दन्तु ? दीर्घायुत्वाय चिरजीवित्वाय, वर्चसे तेजसे ॥ २ ॥

ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ॥ ३ ॥

हे ओषधे ! कुशतरुण ! त्वम् कुमारं त्रायस्व—रक्ष । हे स्वधिते ! क्षुर ! एनं कुमारं मा हिंसीः मा नाशय । कुशैः कृतरक्षमेनं कुमारं कोऽपि मा हिनस्तु इति वाक्यार्थः ॥ ३ ॥

शिवो नामाऽसि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हिꣳसीः ॥ ४ ॥

हे क्षुर ! शिवो नामासि । नाम नाम्ना "सुपां सुलुगि"ति भाङ्गो लुक् । शिवः कल्याणमसि, शिव इति तव नामेत्यर्थः । किं च स्वधितिः वज्रं ते तव पिता जनकः, वज्रात्तवोत्पत्तिरित्यर्थः । एवम्भूताय तुभ्यं नमोऽस्तु । स त्वं मा मां मा हिंसीः मा विनाशय । स्तुतिपूर्विका याञ्चा वाक्यार्थः । अत्रापि पूर्ववत्कुमारावषयिण्येवाशंसा बोद्धव्या ॥ ४ ॥

निर्वर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ५ ॥

अहं क्षुरं निवर्त्तयामि संयोजयामि, निपूर्वो वर्त्तिः संयोगे । संलग्ने वर्त्तते इति कर्कभाष्यम् । क्षुरस्य कर्मत्वं प्रकरणात् । किमर्थं क्षुरस्य योजनमित्याह—आयुषे जीवनाय, तथा अन्नाद्याय अन्नं च यत् आद्यं चेति अन्नाद्यं तदर्थं, तथा प्रजननाय प्रजननं प्रसवशक्तिः तदर्थ, तथा रायस्पोषाय रायो धनस्य पोषाय पुष्ट्यर्थं, तथा सुप्रजास्त्वाय

शोभनसन्ततिमत्त्वार्थं, तथा सुवीर्याय उत्कृष्टवीर्यवत्त्वार्थं च, अनेन क्षुरकर्मणा कुमारस्यान्नादीनि भवन्त्वित्याशंसा वाक्यार्थः। सुप्रजास्त्वायेति आकारश्छान्दसः (१)। "वर्णागमोवर्णविपर्ययश्चे (२)"ति न्यायात् ॥ ५ ॥

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य

विद्वान् ॥ तेन ब्रह्माणो वपतेदमस्यायुष्यं

जरदष्टिर्यथाऽसत् ॥ ६ ॥

हे ब्रह्माणः! ब्राह्मणाः(३)! सविता सर्वस्य प्रसविता आदित्यः येन तेजोमयेन क्षुरेण सोमस्य राज्ञः चन्द्रस्य(४) अवपत् (राजसूयदीक्षायै) मुण्डितवान्, अर्थात् केशान्। न केवलं सोमस्य किन्तु वरुणस्य च। किम्भूतः आदित्यः? विद्वान् वेदवित्। तेन क्षुरेण अस्य कुमारस्य इदं शिरस्तथा वपत मुण्डयत यथा इदं चूडाकरणं कुमारस्य आयुष्यम् आयुषे हितम्(५) असत् स्यात् भूयात्। अस्तेर्लेटि रूपम्। अयं च कुमारः जरदष्टिः जरत् वार्द्धकमश्नुते व्याप्नोतीति जरदष्टिर्भूयात्, वार्द्धकपर्यन्तमस्यायुर्यथा स्यादित्यर्थः। आदित्येन सोमवरुणयोर्येन क्षुरेण चूडाकर्म कृतं तेन हे ब्रह्माणः यूयमस्य कुरुतेति स्तुत्वा तच्चा(६)स्यायुषे हितं भूयादित्याशंसा वाक्यार्थः। ब्रह्माण इति प्रथमाबहुवचने रूपम्। जरदष्टिरिति अजहल्लिङ्गमेव ॥ ६ ॥

त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् ॥

यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥ ७ ॥

त्रीणि आयूंषि समाहृतानि त्र्यायुषम्। आयुःशब्दश्चावस्थावचनो बाल्ययौवनवार्द्धकमवस्थात्रयम् त्र्यायुषमित्यर्थः। तथाच कश्यपस्य ऋषेः यत् त्र्यायुषं, जमदग्नेः यत् त्र्यायुषं, देवानां यत् त्र्यायुषं तत् त्र्यायुषं नः अस्माकमस्तु ॥ ७ ॥

येन भूरिश्चरा दिवं ज्योक् च पश्चाधि-

सूर्यम् ॥ तेन ते वपामि ब्रह्मणा जीवातवे

---

(१) सुप्रजा इत्यसुजन्तो बहुव्रीहिः। ततो भावे त्वप्रत्यये सुप्रजस्त्वमिति प्राप्नोति ॥ (२) "द्वौचापरौ वर्णविकारनाशौ। धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥" इति शेषः ॥ (३) ब्रह्म तत्त्वे तपोवेदे न द्वयोः पुंसि वेधसि। ऋत्विग्योगभिदोर्विप्रे" इति मेदिनी ॥ (४) "सोमोऽस्माकं ब्राह्मणानां राजे"—ति श्रुतेः। (५) तस्मै हितमित्यर्थे यत्प्रत्ययः। (६) तत्कृतं वपनमस्य कुमारस्यायुषे हितं स्यादित्यर्थः।

जीवनाय सुश्लोक्याय स्वस्तये ॥ ८ ॥

येन ब्रह्मणा वेदमन्त्रेण तपसा वाऽभिमन्त्रितेन साधनभूतेन भूरिश्चन्द्रमा दिवं ज्योकच स्वर्गं सङ्गतोऽभवत्। चन्द्रमाः किम्भूतः? चराः चरः भ्रमणशीलः। सोर्जस व्यत्ययेन। पश्चा(१) पश्चात्स एव चन्द्रमा अधिसूर्यं सूर्ये ज्योक् सङ्गतोऽभवत्। तेन ते तव (शिरः) वपामि त्वां क्षौरयामि। कस्मै फलायेत्याकाङ्क्षायामाह–जीवातवे जीवनौषधार्थं (२)जीवनोपनयनार्थमित्यर्थः। जीवनाय चिरकालजीवनाथ, सुश्लोक्याय(३) सु शोभनं श्लोक्यं यशस्त्वदीययशोलाभार्थम्, स्वस्तये कल्याणार्थम् ॥ ८ ॥

यत् क्षुरेण मज्जयता सुपेशसा वप्त्वा

वाऽवपति केशांश्छिन्धि शिरो माऽस्यायुः प्रमोषीः ॥ ९ ॥

हे क्षुर! तदधिष्ठातृदेव! यत्क्षुरेण येन क्षुरेण एतस्य कुमारस्य केशान् वप्त्वा मुण्डयित्वा आवपति आनडुहे गोमयपिण्डे क्षिपति। क्षौरं समाप्य पुनः क्षुरं वारत्रयं(४) भ्रामयति। ततस्तेन पुनः क्षुरेणाप्यस्य केशांश्छिन्धि। केशान् छेदय, मा अस्य शिरः अस्य शिरश्छेदनं मा कुरु। माऽस्यायुः प्रमोषीः अस्य आयुःखण्डनं मा कुरु। क्षुरेण किम्भूतेन? शिरः मज्जयता शोधयता निष्कल्मषं कुर्वता। पुनः किम्भूतेन? सुपेशसा (५)शोभमानेन। आवपति इति मध्यमपुरुषैकवचने "तिङां तिङो भवन्ती"ति प्रथमपुरुषैकवचनम्, प्रमोषीरिति "मुषस्तेये" लुङ्मध्यमपुरुषैकवचनम्। मज्जयतेति, "टुमस्जो शुद्धौ" शत्रन्तात्तृतीयैकवचनम्, वप्त्वा वेति वा शब्दः समुच्चयार्थः ॥ ९ ॥

इति चूडाकरणमन्त्रव्याख्यानम् ॥

( अथोपनयनम्। )

येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् ॥ तेन त्वा

परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे ॥ १ ॥

बृहस्पतिर्देवानामाचार्यः। येन विधानेनेन्द्राय इदं वासः वस्त्रं पर्यदधात् परिधापितवान्। वासः किम्भूतम्? अमृतम् अहतम्(६), तेन विधानेन त्वा त्वां वासः परिदधामि परिधापयामि। किमर्थम्? आ-

(१) "पश्चपश्चा च छन्दसि" (पा० ५।३।३३) इति निपातितोऽयम्। (२) "जीवातुर्जीवनौषधम्" इत्यमरः। (३) शोभनयशोलब्धये। अत्र "तदर्हती" (पा० ५।१।६३) ति यत्। "पद्ये यशसि च श्लोकः" इत्यमरः॥ (४) एषोऽर्थश्चार्थेन वाशब्देनोपक्षिप्तोऽनेन। (५) शोभनम्पेशोरूपं (निघं० ३।७) यस्य तेनेत्यक्षरार्थः॥ (६) "ईषद्धौतं नव श्वेतं सदशं यन्न धारितम्। अहतं तं विजानीयात्सर्वकर्मसु

युषे जीवनाय। दीर्घायुत्वाय(१) चिरजीवित्वाय। बलाय सामर्थ्याय। वर्चसे तेजसे। पर्यदधात्परिदधामि इतिद्वयमपि अन्तर्भावितणिजर्थम् ॥

इयं दुरुक्तम्परिबाधमाना वर्णं पवित्रं पुनती

म ऽआगात् ॥ प्राणापानाभ्यां बलमादधाना

स्वसा देवी सुभगा मेखलेयम् ॥ २ ॥

इयं मेखला आगात्-आगतवती। किं कुर्वाणा? मे मम दुरुक्तम् अद्याप्ययमनुपवीतीति दुर्वचनम्(२) परिबाधमाना सर्वतोभावेन अपसारयन्ती खण्डयन्ती। अत एव देवी-स्तवादिविषया। पुनः किम्भूता? वर्णं द्विजातित्वं पवित्रम् उत्कृष्टं पुनती धावयन्ती। ईदृशीयं मेखला स्वसा स्वसृवद्भगिनीवन्नित्यमभ्युदयिनी अस्तु। किम्भूता? प्राणापानाभ्यां बलं सामर्थ्यम् आदधाना अर्पयन्ती। पुनः किम्भूता? सुभगा अकर्कशा, सुखस्पर्शेतियावत् ॥ २ ॥

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्य्यत्सहजम्पुरस्तात् ॥

आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ३ ॥

हे माणवक! यज्ञोपवीतं प्रतिमुञ्च धारय। प्रतिपूर्वो मुञ्चतिर्धारणे वर्त्तते। यज्ञोपवीतं किम्भूतम्? आयुष्यम् आयुर्वृद्धिकरम्। अग्र्यं श्रेष्ठं शुभ्रं श्वेतं निर्मलं, परमं पवित्रम् अतिशयेन पवित्रम्, पुनः किम्भूतम्? पुरस्तात्पूर्व प्रजापतेर्ब्रह्मणः सहजं सहजातं, प्रजापतिना सह एकसमये जातमित्यर्थः। एतत्परिधानेन बलमस्तु तेजश्चास्तु इति ॥ ३ ॥

यो मे दण्डः परापतद्वैहायसोऽधिभूम्याम् ॥

तमहं पुनरादद ऽआयुषे ब्रह्मणे ब्रह्मवर्चसाय ॥ ४ ॥

मे मम यो दण्डः अधिभूम्यां भूमेरुपरि परापतत्-पतितः। तं दण्डम् अहं पुनराददे गृह्णामि। किम्भूतः? वैहायसः विहाया आकाशं तत्र भवः। एतावता प्राक्तनजन्मन्यपि अहं द्विज आसम् अस्मिन्नपि जन्मनि दण्डं गृह्णामीति वाक्यार्थः। किमर्थं दण्डं गृह्णामि? आयुषे जीवनार्थं, ब्रह्मणे वेदाय, ब्रह्मवर्चसाय-तेजःप्राप्त्यर्थम् ॥ ४ ॥

---

पावनम्" इति कर्म्मप्रदीपः ॥ (१) आयुःशब्दः उसन्तः क्लीबे। उकारान्तः पुंल्लिङ्ग इत्यमरविवेके महेश्वरः। तथाचामरः "आयुर्जीवितकालोने"स्ति ॥ अयरामभाष्येऽप्येवमेव ॥ (२) वस्तुतस्तु—दुरुक्तं दुष्टं भाषितमसत्याप्रियादिकम्। उपलक्षणमेतत्—कामचार-कामवाद-कामभक्षादिकम् (तज्जमप्रायस्यम्) ॥ तथाच श्रूयते "प्रागुपनयनात्कामचारः कामवादः कामभक्षाः" इति। अत्र भवन्तीति शेषः।

इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यः श्रीअमुकशर्मन् ॥ ५ ॥

हे माणवक! त्वम् इन्द्रस्य परमेश्वरस्य(१) ब्रह्मचारी असि। तवाग्निराचार्यः। सर्वेषामेव द्विजातीनां सामान्येनाग्नेर्गुरुत्वात्। "गुरुरग्निर्द्विजातीना"मिति श्रुतेः। इदानीं तु तवोपनयनकर्त्तृत्वेनाहमाचार्यः ॥ ५ ॥

प्रजापतये त्वा परिददामि, देवाय त्वा सवित्रे

परिददामि, अद्भ्यस्त्वौषधीभ्यः परिददामि,

द्यावापृथिवीभ्यां त्वा परिददामि, विश्वेभ्यस्त्वा

देवेभ्यः परिददामि, सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै ॥ ६ ॥

हे माणवक! त्वा त्वां प्रजापतये ब्रह्मणे परिददामि समर्पयामि। एवं सवित्रे सूर्याय। किम्भूताय? देवाय दानादिगुणयुक्ताय, अद्भ्यः जलेभ्यः, ओषधीभ्यः व्रीह्यादिभ्यः, द्यावापृथिवीभ्याम् आकाशभूमिभ्यां, विश्वेभ्यो देवेभ्यः सर्वेभ्यो देवेभ्य इन्द्रादिभ्यः,भूतेभ्यः राक्षसादिभ्यः परिददामीति सर्वत्रान्वेति। किमर्थम्? अरिष्ट्यै रिष्टिरापत्तदुपशमनाय, रिष्टिरिति 'रिष् हिंसाया'मित्यस्माद् धातोः क्तिनि रूपं, न रिष्टिः अरिष्टिस्तस्यै ॥६॥

अग्ने सुश्रवः सुश्रवसं मा कुरु, यथा त्वमग्ने

सुश्रवः सुश्रवा ऽअसि, एवं माᳫं सुश्रवः सौश्रवसं

कुरु ॥ यथा त्वमग्ने देवानां यज्ञस्य निधिपाऽअसि,

एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ७ ॥

हे अग्ने! सुश्रवः! सुष्ठु श्रवः कीर्त्तिः श्रवणेन्द्रियं वा यस्य स सुश्रवाः तत्संबोधने। तादृशं मां सुश्रवसं सुयशसं शोभनकर्णेन्द्रियं वा कुरु। वेदाध्ययनार्थं मामविकलेन्द्रियं (सफलेन्द्रियं) कुर्वित्यर्थः। एवं हे अग्ने! यथा त्वं सुश्रवः सुश्रवा असि। सुश्रवसि अक्षरादौ सुश्रवाः शोभनकर्णोऽसि। एवं तथा मा मां सुश्रवःसौश्रवसं कुरु, सुश्रवसि यशसि सौश्रवसं शोभनश्रवणजनितज्ञानशालिनं कुरु। तथा हे अग्ने! त्वं यथा देवानां यज्ञस्य निधिपा असि। देवानामिन्द्रादीनां यज्ञस्य यज्ञसम्बन्धेन निधिपा निधिरक्षकोऽसि भाण्डागारिको भवसि। एवमहं मनुष्याणां वेदस्य निधिपो भूयासं, वेदस्य भाण्डागारिको भवेयमित्यर्थः ॥ ७ ॥

अग्नये समिधमाहार्षं बृहते जातवेदसे ॥

---

(१) "इदि परमैश्वर्यं" (भ्वा० प०) रक्प्रत्ययः।

यथा त्वमग्ने समिधा समिध्यसऽएवमहमायुषा
मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन
समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसा-
न्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो
भूयासꣳ स्वाहा ॥ ८ ॥

हे देवाः! अहम् अग्नये समिधमाहार्षम् आहृतवानस्मि। कस्मै? जातवेदसे-सर्वकर्मसाक्षिचैतन्यस्वभावफलदातृत्वेन जातं जातं वेत्ति, जातेषु जातेषु विद्यते, जातान् जातान्विन्ते इति जातवेदास्तस्मै। यद्वा जात उत्पन्नः वेदः वेदोक्तकर्मफलं यस्मात्स जातवेदास्तस्मै(१)। पुनः किम्भूताय? बृहते जाज्वल्यमानाय। हे अग्ने! यथा त्वं समिधा मया त्वदर्थं समाहृतया अनया समिधा समिध्यसे सुप्रकाशो भवसि (ज्वलसि)। एवमहम् आयुषा जीवनेन मेधया बुध्या वर्चसा तेजसा प्रजया सन्तत्या पशुभिर्गवादिभिर्ब्रह्मवर्चसेन ब्रह्मतेजसा समिन्धे सुप्रकाशो भवानि। किं च ममाचार्यो जीवपुत्रः(२) "भवत्वि"ति शेषः। अहं च मेधावी अनिराकरिष्णुः असानि। अग्नीनाधाय याग-स्यानिराकरणकारी अनिराकरिष्णुः, नित्यं यागकारी भवानीत्यर्थः। किं च अहम आयुष्मान्, यशस्वी तेजस्वी ब्रह्मवर्चस्वी वेदाध्ययनवीर्यवान् अन्नादः भूयासं, कदाचिदपि ममाग्निविच्छेदो मा भवत्वित्यर्थः। अनया कामनया अग्नये स्वाहा सुहुतमस्तु ॥ ८ ॥

तनूपाऽअग्नेऽसि तन्वं मे पाह्यायुर्दाऽअग्नेऽस्या-
युर्म्मे देहि वर्च्चोदाऽअग्नेऽसि वर्च्चो मे देहि ॥
अग्ने यन्मे तन्न्वाऽऊनन्तन्म ऽऽआपृण ॥ ९ ॥

हे अग्ने! त्वं तनूः शरीरं तस्याः पाता रक्षकः असि भवसि। अतो मे तन्वं-तनूं शरीरं पाहि रक्ष। आयुर्दा अग्नेऽस्यायुर्मे देहि। हे अग्ने! त्वम् आयुर्दा आयुःप्रदोऽसि। अतः आयुर्मे देहि। वर्च्चोदा अग्नेऽसि वर्च्चो मे देहि। वर्चस्तेजः। अग्ने! यन्मे तन्वा ऊनं तन्मऽआपृण। हे अग्ने! तन्वा शरीरस्य मे यत् ऊनं न्यूनं तन्मे आपृण आपूरय, तन्वमिति तनुशब्दस्य द्वितीयैकवचने इयङुवङ्प्रकरणे "तन्वादीनाञ्छन्दस्युप-सङ्ख्यान"मिति यणादेशः ॥ ९ ॥

---

(१) वस्तुतस्तु जातः वेदः धनं (निघं २। १०।४) यस्मात्तस्मै धनदाय।
(२) दीर्घायुपुत्रवान्।

मेधां मे देवः सविता आदधातु, मेधां मे
देवी सरस्वती आदधातु, मेधां मेऽश्विनौ
देवावाधत्तां पुष्करस्रजौ ॥ १० ॥

अश्विनौ अश्विनीकुमारौ देवौ मे मम मेधाम् धारणावतीं बुद्धिम् आधत्तां कुरुताम्। किम्भूतौ? पुष्करस्रजौ पुष्करं कमलं तन्मयी स्रक् माला ययोस्तौ पुष्कर जौ पद्ममालिनौ। एताः सर्वाः सवित्रादिदेवत्याः प्रार्थना अग्नावेव बोद्धव्याः ॥ १० ॥

अङ्गानि च मऽआप्यायन्तां, वाक्चमऽआप्यायतां, प्राणश्च मऽआप्यायतां, चक्षुश्च मऽआप्यायतां,
श्रोत्रञ्चमऽआप्यायतां यशो बलं च मऽआप्यायताम् ॥ ११ ॥

मे ममाङ्गानि शरीरावयवाः आप्यायन्तां स्फीतानि(१) भवन्तु। न केवलं मेधादिकं किं तु एतदपि भवत्विति वाक्यार्थः। वाक् च मऽआप्यायतामित्यादि निगदव्याख्यातम् ॥ ११ ॥

येऽप्स्वन्तरग्नयः प्रविष्टा गोह्यउपगोह्यो मयूषो
मनोहास्खलो विरुजस्तनूदुषु(२)रिन्द्रियहा ता-
न्विजहामि यो रोचनस्तमिह गृह्णामि ॥ १ ॥

ये अग्नयः अप्सु जलेष्वन्तर्मध्ये प्रविष्टाः कारणत्वेनावस्थितास्तानहं विजहामि(३)। ते के? गोह्यः उपगोह्यः मयूषादयोऽष्टौ यावन्तो दोषावहत्वेन प्रतीयन्ते। अत एतान् विहाय इह जले योऽग्निः रोचनः रोचननामा कल्याणनामा तं गृह्णामि। स्नानार्थं जले गोह्यादीनग्नीन् दोषावहान् त्यक्त्वा कल्याणप्रकाशकाग्निसहितं जलं गृह्णामीति वाक्यार्थः ॥ १ ॥

तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय ॥ २ ॥

तेन(४) जलेनाहं मामात्मानमभिषिञ्चामि। किमर्थम्? श्रियै—लक्ष्मीलाभाय। यशसे—यशोलाभाय। ब्रह्मणे वेदज्ञानलाभाय। ब्रह्मवर्चसाय(५) ब्रह्मतेजोलाभाय ॥ २ ॥

येन श्रियमकृणुतां येनावमृशताꣳसुराम् ॥ येना-
क्षावभ्यषिञ्चतां यद्वां तदश्विना यशः ॥ ३ ॥

---

(१) विवृद्धानि प्राणवन्ति वा। अभ्याततञ्चनं प्यायनं वाऽऽप्यायनमिति भाष्य-
कृतः। धातुपाठे तु "ओप्यायी वृद्धौ" इति। कोट् प्रार्थनायाम्। (२) हुषिरित्यपि पाठः
क्वचित्। (३) अमेध्यत्वादशुभावहत्वाच्च एताभ्योऽद्भ्यः पृथक्करोमि (त्यजामि)॥
(४) रोचनाभिष्ठितेन मङ्गलेन। (५) अत्राच्समासान्तः।

तेनेति पूर्वमन्त्रस्थमनुवर्त्तते । तेन केन ? हे अश्विना(१) अश्विनौ ! युवां येन जलेन श्रियमकृणुतां लक्ष्मीं शोभां कृतवन्तौ(२) । तथा येन सुरां सुराजनितदोषम् अवमृशतां मार्जितवन्तौ(३) । तथा येनाक्षौ अक्षिणी उपमन्योः(४) अभ्यषिञ्चतां अभिषिक्तवन्तौ तथा यज्जलं वां युवयोर्यशः यशोहेतुरभूत्तदनेनाभिषेकेण "ममाप्यस्तु" इत्यध्याहार्यम् ॥ ३ ॥

उदुत्तममिति स्नानप्रकरणे व्याख्यातम्—

उद्यन् भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभि-

रस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा

गमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा

यावभिरस्थात् शतसनिरसि शतसनिं मा

कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिन्द्रो

मरुद्भिरस्थात्सायं यावभिरस्थात् सहस्रसनि-

रसि सहस्रसनिं मा कुर्वाविदन्मा गमय ॥ ४ ॥

इन्द्रः आदित्यः उद्यन् उदयं कुर्वन् अस्थात् स्थितोऽभवत् । किम्भूतः ? भ्राजभृष्णुः भ्राजं रश्मिं बिभर्तीति भ्राजभृष्णुः । प्रातः प्रत्यूषे मरुद्भिर्देवैः सह अस्थात् स्थितोऽभवत् । किम्भूतैर्देवैः ? यावभिर्यावद्भिर्यावन्तो देवास्तैः सह स्थितोऽभवदित्यर्थः । ततः हे आविदन् समन्तात् सर्वान् जानन् आदित्य ! त्वं दशसनिरसि बहुधनोऽसि, अतो मा मां दशसनिम्बहुधनं कुरु । किं च मा मां ब्रह्मचर्यादुत्तीर्णमागमय जानीहि । द्वितीयतृतीययोर्दिवा यावभिः सायं यावभिरिति शतसनिः सहस्रसनिरसि इत्येतावन्मात्रंविशेषः । तत्र दिवा सायमिति प्रसिद्धार्थं शतसहस्रशब्दौ बहुत्ववाचिनावेवान्यत्सर्वं समानम् । एवम् आदित्यं स्तुत्वा हे आदित्य ! मां बहुधनं कुरु, ब्रह्मचर्यादुतीर्णं मां जानीहीति याञ्चा वाक्यार्थः । अत्र यावद्भिरित्यत्र "वर्णागमो वर्णविपर्ययश्चे"ति दकारलोपश्छान्दसः,(५)। आगमय इति कुर्वाविदन्नित्यत्र स्थितेन व्यवहितेन माङा सम्बन्धः ॥ ४ ॥

---

(१) औङो डादेशः । (२) श्रियस्तोयतः (समुद्रात) उत्पत्तेः । (३)वस्तुतः सुराम् अमृतम् ( निघं० १।१२ ) अवमृशतां प्राप्तवन्तौ । अडभावश्छान्दसः । ( पा० ६।४।७० )। ( ४ ) अयमृषेः शिष्योऽन्धो जातोऽश्विभ्यामभिषिच्याक्षिणी सदृष्टी कृता । अथवाऽक्षोऽक्षिपर्यायः । इन्द्रियवचनत्वात् ।

( ५ ) वस्तुतस्तु यातेर्वनिपि यावभिरित्येव । "आतोमनिन्क्वनिब्वनिपश्चे"ति ( पा० सूत्रम् ) यावभिर्गमनशीलैर्नव्यादिसप्तकगणैर्द्वादशभिर्द्वादशमासैर्वा । तथा च

अन्नाद्याय व्यूहध्वꣳ सोमो राजायमागमत् ॥

स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च ॥ ५ ॥

हे वनस्पते ! (१)व्यूहध्वं प्रसिद्धो भव । यं वनस्पतिम् अर्थात् त्वां सोमः चन्द्रमा आगमत् आगतवान् । किम्भूतः ? सोमः वनस्पतीनां राजा प्रभुः । स वनस्पतिर्भवान् इति यावत् । मम मुखं प्रमार्क्ष्यते शोधयिष्यति । केन ? यशसा कीर्त्या, भगेन सौभाग्येन च । किमर्थम् ? अन्नाद्याय अन्नं च तत् आद्यं चेति अन्नाद्यं तस्मै, अत्र व्यूहध्वमिति "ऊहवितर्के" विपूर्वः प्रसिद्धार्थे "तिङां तिङो भवन्ति" इत्येकवचनम्, प्रमार्क्ष्यत इति "मृजूशुद्धौ" इति लृटि रूपम् ॥ ५ ॥

प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय ॥ ६ ॥

भो अनुलेपनसुगन्धद्रव्याधिष्ठातृदेवते ! प्राणापानौ मित्रावरुणदेवताकौ मे मम तर्पय । अन्यत् व्यक्तार्थमेतत् ॥ ६ ॥

पितरः शुन्धद्ध्वम् ॥ ७ ॥

हे पितरः ! यूयं शुन्धध्वं शोधयत "मामि"ति शेषः ॥ ७ ॥

सुचक्षा ऽअहमक्षीभ्यां भूयासꣳ सुवर्च्चा

मुखेन सुश्रुत्कर्णाभ्यां भूयासम् ॥ ८ ॥

अहम् अक्षीभ्यां नेत्राभ्यां सुचक्षाः शोभनदृष्टिः भूयासं, मुखेन सुवर्चाः शोभनदीप्तिः । सुश्रुत् कर्णाभ्यां, सुश्रुत्-शोभनश्रावी ॥ ८ ॥

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि ॥

शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ॥ ९ ॥

अहं परिधास्यै परिधानं करिष्यामि । यशोधास्यै कीर्तिं धारयिष्यामि । हेतुहेतुमद्भावो बोद्धव्यः । अनेन परिधानेन यशो भविष्यतीत्यर्थः । किं च अनेन परिधानेन शरदः वर्षस्य ( वर्षाणां ) शतं जीवामि । पुरूचीः बहुतेजाः सन् रायस्पोषं धनसमृद्धिं संव्ययिष्ये आवरणं करिष्यामीत्यर्थः । रायस्पोषमिति 'सुपां सुपो भवन्तीति' चतुर्थ्यर्थे द्वितीया, संव्ययिष्य इति "व्येञ्संवरणे" इत्यस्य रूपम् ॥ ९ ॥

---

श्रीमद्भागवते—"मधवादिषु द्वादशसु भगवान् कालरूपधृक् । लोकतन्त्राय चरति पृथक् द्वादशभिर्गणैरि"ति । (स्क० ११ अ०) ते त्रिविधाः कालभेदेन प्रातर्यावानः । दिवायावानः । सायंयावानश्चेति ॥ (१) वस्तुतस्तु हे दन्ताः ! यूयमन्नाद्यायान्नादनाय व्यूहध्वम् एकपङ्क्तिनिष्ठा भवत । अयं सोमो राजा वनस्पतिप्रभुः दन्तकाष्ठरूपेण त्वामागमत् आगतः । स एव मुखं प्रमार्क्ष्यते शोधयिष्यति । इत्येवमर्थः ।

यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ॥ यशो
भगश्च माऽऽविद्यशो मा प्रतिपद्यताम् ॥ १० ॥

द्यावापृथिवी आकाशपृथिव्यौ मा माम् "आच्छादयेता"मित्यध्याहार्य्यम् । केन ? यशसा कीर्त्या । किं च इन्द्राबृहस्पती, इन्द्रश्च बृहस्पतिश्च यशसा मा मामाच्छादयेताम् । किं च यशः भगः सौभाग्यं च मा माम् आविदत् प्राप्नोतु । किं च यशः मा मां प्रतिपद्यताम् आगच्छतु । पुनः पुनरभिधानमादराभिधानार्थम् । अत्रानेन वस्त्राच्छादनेन एतानि मम सन्त्विति वाक्यार्थः ॥ १० ॥

या ऽआहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय ॥
ता ऽअहं प्रतिगृह्णामि यशसा च भगेन च ॥ ११ ॥

याः पुष्पस्रजः जमदग्निर्ऋषिः आहरत् आहृतवान् । किमर्थं ? श्रद्धायै श्रद्धार्थम् । एवमेवेति निश्चयः श्रद्धा । कामाय अभिलषितसिद्ध्यर्थम् । इन्द्रियाय चक्षुरादिपर्य्यन्ताय । ताः पुष्पस्रजः अहं प्रतिगृह्णामि । किमर्थं ? यशसा यशसे, (१)भगेन भगाय(२) । तथा चानेन पुष्पस्रग्ग्रहणेनैतत्सर्वं मम भवत्विति वाक्यार्थः ॥ ११ ॥

यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु ॥ तेन
सङ्ग्रथिताः सुमनस ऽआबध्नामि यशो मयि ॥ १२ ॥

इन्द्रः अप्सरसाम् उर्वशीप्रभृतीनां यत् यशश्चकार, रूपवत्तयेति शेषः। किम्भूतं यशः ? विपुलं विस्तीर्णं, पृथु बहुतरं, तेन यशसा संग्रथिताः सम्यग्ग्रथिताः सुमनसः पुष्पाणि ( मालां ) मयि आबध्नामि । किमर्थं ? यशः यशसे । तथा चानेन यशसा सूत्रस्थानीयेन संग्रथितानि पुष्पाणि आत्मन्याबध्नामि । तेन तादृक् यशो मम भवत्विति वाक्यार्थः । यश इति चतुर्थ्यर्थे प्रथमा ॥ १२ ॥

युवा सुवासाः परिवीत आगात्स ऽउश्रेयान्
भवति जायमानः ॥ तं धीरासः कवय ऽउन्नयन्ति
स्वाध्यो मनसा देवयन्तः ॥ १३ ॥

यः युवा सुवासाः शोभनवस्त्रधारी परिवीतस्तेन वस्त्रेण मालया च परिवेष्टितः सन् आगात् आगतवान् द्वितीयं जन्म लभमानः । स उजायमानः श्रेयान् श्रेष्ठो भवति इति वितर्कयामि । तं युवानं धीरासः धीराः

(१)(२) अत्र विभक्तिव्यत्यय आर्षः । एवमग्रेऽपि ।

स्थिरप्रज्ञा विद्वांसः उन्नयन्ति उत्कर्षयन्ति । धीराः किम्भूताः ? कवयः कीर्त्तिवक्तारः(१) । पुनः किम्भूताः ? स्वाध्यः सु शोभनम् आहिता धी येषां ते स्वाध्यः । पुनः किम्भूताः ? मनसा हृदयेन देवयन्तः स्तुवन्तः(२) ॥ १३ ॥

अलङ्करणमसि भूयोऽलङ्करणं भूयात् ॥ १४ ॥

हे कर्णकुण्डल ! त्वम् अलङ्करणमसि प्रसाधनं भवसि इति ते तव स्वभावः । अतः भूयः उत्तरोत्तरम् अलङ्करणं मम कर्णभूषणम् भूयात् भवतु ॥ १४ ॥

वृत्रस्यासि कनीनकश्चक्षुर्दा ऽअसि चक्षुर्मे देहि ॥१५॥

हे अञ्जन ! त्वं वृत्रस्य वृत्रनाम्नः शक्तिशालिनोऽसुरस्य कनीनकः कनीनिका अक्षितारका असि भवसि । अत एव चक्षुर्दा असि चक्षुर्दायको भवसि । तस्मान्ममापि चक्षुर्देहि । तथा च यतः कारणाद्वृत्रस्याक्षितारकोत्पन्नमञ्जनं त्वमसि अतोऽन्येषां चक्षुर्दाता असि अतस्तवाञ्जनेन मम चक्षुः प्रकाशो भवत्विति याच्ञा वाक्यार्थः ॥ १५ ॥

रोचिष्णुरसि ॥ १६ ॥

हे दर्पण ! त्वं रोचिष्णुरसि प्रकाशनशीलोऽसि । अतो मामपि प्रकाशयेत्यभिप्रायः ॥ १६ ॥

बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि

तेजसो यशसो मामन्तर्द्धेहि ॥ १७ ॥

हे छत्र ! त्वं बृहस्पतेर्देवाचार्यस्य छदिः अपवारण(३)मसि भवसि । अतः मां पाप्मनः पापात् अन्तर्द्धेहि आवृतं कुरु, यथा मम पापसम्बन्धो न भवेत् तथा कुर्वित्यर्थः । न केवलं पापात् किं तु तेजसः आदित्यतापादिरूपात् मामन्तर्द्धेहि किमर्थं ? यशसे यशोऽर्थं, तथा च हे छत्र ! यतस्त्वं बृहस्पतेरपि पापसन्तापादिवारकोऽतस्ततोऽपि यशस्विनं मां कुर्वित्याशंसा वाक्यार्थः । यशस इति चतुर्थ्यर्थे षष्ठी ॥ १७ ॥

प्रतिष्ठे स्थो विश्वतो मा पातम् ॥ १८ ॥

हे उपानहौ ! काष्ठपादुके ! युवां प्रतिष्ठे स्थः । उपक्रान्तगतिक्रियायाः अत्यागः प्रतिष्ठा । तन्निमित्तत्वात् युवामेव प्रतिष्ठे स्थः भवथः । अतश्च मा मां पातं रक्षतम् । कुतः ? विश्वतः सर्वतः सर्वस्माद्गतिविरोधिनः कण्टकादेः । यतो युवां प्रतिष्ठानिमित्ते अतस्त्वत्प्रसादात् मम कुत्रापि

(१) क्रान्तदर्शिना इति दुर्गाचार्याः । (२) दीव्यतिस्तुत्यर्थोऽपि ।
(३) "छद अपवारणे" (भ्वा० प०) "इसुसर्वधातुभ्यः" इतीन्प्रत्ययः ।

गतिप्रतिबन्धो माऽस्त्विति वाक्यार्थः ॥ १८ ॥

विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः ॥ १९ ॥

हे वैणवदण्ड ! मा मां परिपाहि सर्वतो भावेन रक्ष । कुतः ? नाष्ट्राभ्यः नाशकारिणीभ्यः, विश्वाभ्यः सर्वाभ्यः राक्षससर्पशृङ्ग्यादिभ्य इत्यर्थः । सर्वतः सर्वासु दिक्षु इत्यर्थः ॥ १९ ॥

इति श्रीशत्रुघ्नकृतमन्त्रार्थदीपिकायामुपनयनमन्त्रव्याख्यानम् ॥ * ॥

---

अथ प्रतिष्ठामन्त्रौ ।

एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे ॥

तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ १ ॥

हे सवितर्देव ! दानादिगुणयुक्त ! एतम् यज्ञं ते त्वदीयं प्राहुः (मन्त्रज्ञा वदन्ति) किं च बृहस्पतये बृहस्पतिनिमित्तं, किम्भूताय बृहस्पतये ? ब्रह्मणे देवानां सर्वकर्माधिष्ठात्रे । मानुषोऽपि तदधिष्ठित एव कर्मणि ब्रह्मा भवति । तेन हेतुना हे सवितः ! यज्ञं अव रक्ष, तेन यज्ञपतिं यजमानम् अव, तेन माम् ऋत्विजम् अव । तथा च त्वदीयोऽयं यज्ञ इति यज्ञसाधनं सर्वं रक्षेति वाक्यार्थः । अयं मन्त्रः कुत्रचिदेव प्रसिद्धः ॥१॥

मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं

तनोत्वरिष्टं यज्ञꣳ समिमं दधातु ॥

विश्वे देवास इह मादयन्तामों प्रतिष्ठ ॥ २ ॥

मनः आज्यस्य(१) रसं जुषतां सेवतां, मनः किंभूतं ? जूतिः (२)अतीतानागतवर्त्तमानेषु गन्तृ । किं च बृहस्पतिः सुराचार्यः इमं यज्ञं तनोतु विस्तारयतु । स एव इमं यज्ञम् अरिष्टं हिंसारहितं कृत्वा सन्दधातु । "रिषहिंसायां" कर्मणि क्तः । न रिष्टमरिष्टं(३) । किं च विश्वेदेवासः विश्वेदेवाः सर्वे देवाः इह यज्ञे मादयन्तां हर्षं (४)कुर्वन्तु, स्वार्थिको णिच् । ओमिति अवतेर्व्याप्नोतेर्वा ओं । यथा च (५)रक्षित्वाऽ-

---

(१) आज्यस्येति कर्म्मणि षष्ठीति महीधरः । (२) "जुगतौ" "ऊतियूति" इत्यादिना क्तिन्नन्तो निपातः । स्त्रीत्वं छान्दसमत्र । अतीतानागतवर्त्तमानकालगतपदार्थेषु गमनशीलं हि मनः । जवते शीघ्रं गच्छतीति । (३) इडाभक्षणेन हि मध्ये यज्ञो विच्छिद्यते । (४) मदतृप्तौ (चु०) तृप्यन्तामिति महीधरः । मनसश्चन्द्रमसि लयः श्रूयते "मनश्चन्द्रमसि लीयते" इति ॥ (५) वस्तुतस्तु—ओमित्यङ्गीकारे तथास्तु । प्रतिष्ठ प्रयाणं कुरु । समिदाधानकाले यजमानस्याभिप्रेतं प्रयाणमवगम्य सविता देवोऽङ्गीकृत्य प्रयाणे प्रेरयतीत्यर्थः ।

प्नोति वा। इह प्रतिष्ठाप्रकरणे तिष्ठेत्यर्थः ॥ २ ॥

अथ बर्हिर्होममन्त्रः।

देवा गातुविदो गातुँवित्त्वा गातुमित ॥
मनसस्पतऽइमं देव यज्ञꣳस्वाहा वातेऽधाः ॥१॥

अस्याः पूर्वार्द्धेन देवता विसृजति—हे देवाः! गातुविदो यज्ञविदः। गातुरिति यज्ञनाम प्राचीनं, (१)गातुं यज्ञं वित्त्वा अस्मदीयोऽयं यज्ञः प्रवृत्त इति ज्ञात्वा नो यज्ञम्प्रति इत आगच्छत। तथा च यज्ञपरम्परासु विच्छिन्ना मम न भवत यूयमित्यर्थः। एवं देवान् विसृज्य इदानीं चन्द्रमसमाह—हे मनसस्पते चन्द्रमः! देव! इमं यज्ञं वाते वायौ अधाः धारय, वाते हि यज्ञोऽवतिष्ठते। तथा च श्रुतिः "वायुरेवाग्निस्तस्याद्य देवाध्वर्युकर्म करोत्यथैतमेवाप्येती"ति ॥ १ ॥

अथ स्वस्त्ययनमन्त्राः।

स्वस्ति नऽइन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा
विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ॥ १ ॥

इन्द्रः नः स्वस्ति कल्याणं दधातु, पूषाऽपि। किंभूतः इन्द्रः? वृद्धश्रवाः बहुधनः। श्रवःशब्दो धनवचनः कीर्तिवचनो वा। महद्यशा वा। वृद्धश्रावी वा। यूयं किंभूताः? विश्ववेदाः सर्वधनाः सर्वयज्ञा वा। तार्क्ष्यो गरुडः नः स्वस्ति दधातु। तार्क्ष्यः किंभूतः? अरिष्टनेमिः अनुपहिंसितास्त्रः अनुपहतचक्राधारः। बृहस्पतिश्च नः स्वस्ति दधातु ॥१॥

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो
विदथेषु जग्मयः ॥ अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा ऽअवसाऽऽगमन्निह ॥ २ ॥

इत्थम्भूताः मरुतो देवाः अवसा अन्नेन हविर्लक्षणेनाहूताः सन्तः इह यज्ञे नः अस्मान् आगमन्—आगच्छन्तु(२)। किंभूताः मरुतः? पृषदश्वाः पृषतो हरिता अश्वाः येषां ते। पुनः किंभूताः? शुभंयावानः शुभं कर्तुं जनान् ये यान्ति ते शुभंयावानः। यातेर्वनिप्। पुनः किंभूताः? विदथेषु यज्ञेषु जग्मयः गमनशीलाः। ये अग्निजिह्वा हुतभोक्तारश्चतुर्दश मनवस्ते च इहागमन्। ये च सूरचक्षसः आदित्यदर्शनाः विश्वेदेवास्ते च इहागमन् ॥ २ ॥

---

(१) नैघण्टुकम्। (२) लोडर्थे लुङ्।

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ३ ॥

हे देवाः! कर्णेभिः कर्णाभ्यां(१) भद्रम् अनुकूलं वयं शृणुयाम। अक्ष(२)भिरक्षिभ्यां भद्रं पश्येम। देवाः किंभूताः? यजत्राः यजन्तं त्रायन्त इति(३)। किं च स्थिरैरङ्गैर्दृढैः शरीरावयवैः तुष्टुवांस(४)स्तुवन्तो वयम् अर्थाद्भवन्तम्। देवहितं देवैर्निहितं स्थापितं, यद्वा देवानां हितं देवपरिचरणयोग्यं यदायुर्जीवितं शतवर्षान्तमित्यर्थः। तत्तनूभिः शरीरैः भार्यापुत्रादिभिः सह वा व्यशेमहि व्याश्नुवीमहि(५) ॥३॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ॥ पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ४ ॥

हे देवाः! शरदः शतमित् वर्षशतमपि अर्थात् आयुः अन्ति— अन्तिके स्वल्पकालमेवेत्यभिप्रायः। यत एवमतो ब्रूमः। नः अस्माकम् आयुर्मध्या मध्ये शतवर्षाभ्यन्तरे मा रीरिषत मा हिंसिष्ट, किं च गन्तोः गन्तृ(६) "मा भवत्वि"त्यध्याहार्यम्। आकालिक एव मा गच्छत्विनत्यर्थः। यत्रा यत्र। शरदां शते नोऽस्माकं तनूनां जरसं जरां चक्रा कृतवन्तः जरानिमित्तां शक्तिमपि कृतवन्तः। अर्थात् भवन्त एव। किं च यत्र शरदः शते नः पुत्राः पितरो भवन्ति। पुत्राः अग्नयस्ते यजमानजनिता भवन्ति हितकारिणश्च भवन्ति। अथ वा पुत्रा एव पितॄणामौर्ध्वदेहिकं कुर्वाणाः पितरो भवन्ति। पोषकत्वात् पितर इव भवन्ति। तथा च यस्यामवस्थायामेयमत्तमता भवति सा मय्येव माऽस्त्वित्यभिप्रायः। तदुक्तं "सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य ॥ वर्षाम्बु सिक्ताइव चर्मदण्डाः सर्वे प्रयत्नाः शिथिलीभवन्ति" इति ॥ ४ ॥

---

(१) एतच्चानेकव्यक्त्यभिप्रायेण। अत्र "बहुलं छन्दसि" (पा० ७।१।१०) इतिभिस ऐसभावेन एत्वम् (पा० ७।३।११० )। (२) अत्र "बहुलं छन्दसि" (पा० ७।१।४६) इति हलादावप्यक्षिशब्दस्यानङ् ॥ (३) यजमानपालकाः ॥ (४) लडर्थे लिट्। (५) व्याप्नुयाम, "अशू व्याप्तौ" (स्वा० २) लिङ्। बाहुलकात् (पा० ३।१।८५) विकरणव्यत्ययः। (६) गमनशीलम्। एतदायुर्विशेषणतयैवोवटमहीधरादिभिर्व्याख्याय "सञ्चिन्त्य" इति श्लोकेन व्याख्यानमस्योपसंहृतम्। अनेन स्वव्याहृत्य व्याख्यातमित्यकाण्डताण्डवम् ॥ अत्र यत्रा इति "निपातस्य चे" (पा० ६।३।१३६) ति दीर्घः। चक्रा इति तु "द्व्यचोऽतस्तिङः" (पा० ६।३।१३५) इति दीर्घेण बोध्यम् ॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता
स पिता स पुत्रः॥ विश्वेदेवाऽअदितिः
पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम्॥ ५॥

द्यौः स्वर्गः अदितिः अस्तु। न विद्यते दितिः खण्डनं यस्याः सा अदितिः, अविघ्नकारिणी भवत्वित्यर्थः। एवं सर्वत्रान्वयः। पञ्चजनाः(१) कुबेरः। किं बहुना जातमुत्पन्नप्राणिजातं, जनित्वं जनिष्यमाणं सर्वमदितिरेव। यद्वाऽदितिर्मन्त्रेण नोच्यते द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितिः अदितीनि अदीनानि महाभाग्ययुक्तानि सन्तु॥५॥

अपो ऽअद्यान्वचारिषꣳ रसेन समसृक्ष्महि॥
पयस्वानग्नऽआगमं तं मासꣳ सृज वर्चसा
प्रजया च धनेन च॥ ६॥

हे अग्ने! यत् याः अपः कर्म अहम् अद्य अन्वचारिषम् अनुचरितवानस्मि, अवभृथादावित्यर्थः। यज्जलस्य रसेन वयं समसृक्ष्महि संसृष्टाः स्म। यश्च पयस्वान् पयोयुक्तः सन् अत्राहमागमम् आगतवानस्मि। अतस्त्वं मा मां वर्चसा तेजसा संसृज संयुक्तं कुरु। प्रजया पुत्रादिना धनेन च संसृज॥ ६॥

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी
शान्तिरापः शान्तिरोषधयः शान्तिः॥
वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म
शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः
सा मा शान्तिरेधि॥ ७॥

द्यौरित्यादिषु सर्वत्र विभक्तिव्यत्ययः। तथा च या दिवि शान्तिः या अन्तरिक्षे शान्तिः सा शान्तिः मा मां प्रति एधि भवतु॥ ७॥

इति शत्रुघ्नविरचितायां मन्त्रार्थदीपिकायां दशकर्मपरिच्छेदः॥ *॥

---

अथ नवग्रहमन्त्रव्याख्यानम्।

तत्र आकृष्णेनेति (२)देवपूजायामुक्तः।

इमं देवाऽअसपत्नꣳसुवध्वं महते क्षत्राय

(१) अत्र मूलम् मृग्यम्। निषादपञ्चमाश्चत्वारो वर्णा इति निरुक्तम्॥ (३।२।७) मनुष्या इति भाष्यकृतः। (२) सूर्यमन्त्रः॥ एवमग्रेऽक्रमशश्चन्द्रादीनाम्मन्त्राज्ञेयाः॥

महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्ये-
न्द्रियाय ॥ इममुमुष्य पुत्रममुष्यै पुत्रमस्यै
विश एष वोऽमी राजा सोमोऽस्माकं
ब्राह्मणानाᳪ राजा ॥ १ ॥

हे देवाः ! इमं राजानम् असपत्नं शत्रुरहितम् सुवध्वं जनयत । महते क्षत्राय ( रक्षणाय )। महते ज्यैष्ठ्याय ज्येष्ठत्वाय। महते जानराज्याय जनसम्बन्धिराज्याय(१)। इन्द्रस्य इन्द्रियस्य (२)इन्द्रियाय वीर्याय सुवध्वमिति सर्वत्रान्वेति। इमं कम् ? अमुष्य पुत्रम् अर्थात् अस्य यजमानस्य पितुः(३)। अमुष्यै(४) अर्थात् अमुष्याश्च यजमानमातुः पुत्रम् इमं यजमानमित्यर्थः। असपत्नत्वादिकरणे हेतुमाह—वः युष्माकं विशः जनपदजातेः एष राजा अस्तु। अस्माकं ब्राह्मणानाम् पुनः अमी असौ(५) सोमो राजा। यद्वा हे कुरवः! वः युष्माकमेष कौरव्यो राजाऽस्तु ॥ तस्माद्भवदर्थं प्रार्थना क्रियते न तु स्वार्थमित्यभिप्रायः ॥ १ ॥

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या
ऽअयम् ॥ अपाᳪरेताᳪसि जिन्वति ॥ २ ॥

अग्निः स्तूयते—योऽयमग्निः दिवः मूर्द्धा आदित्यात्मना द्युलोकस्य मूर्धा भवति। अयमेव ककुत् महान् "ककुद" इति महन्नामसु पठितम्। अन्तलोपे कृते एतद्रूपम्। अयमेव महानात्मा जगत इत्यर्थः। अयमेवाग्निः पृथिव्याः पतिः ईश्वरः। तापपाकप्रकाशादिभिः सर्वाः प्रजाः अनुगृह्णातीत्यभिप्रायः, किं चायमेव अपां रेतांसि जिन्वति। रेतः कारणमुच्यते, या एता आपः द्युलोकात्पतन्ति तासाम् अपां कारणानि जिन्वति, जिन्वतिः प्रीतिकर्मा। पुष्णातीत्यर्थः। आहुतिपरिणामेन सो वृष्टिं जनयति इति दर्शितम्। यद्वा अयमिति कुज उच्यते कुजोऽपि दिवो मूर्द्धेत्यर्थः। तेन कुजप्रकाशकत्वमस्य सम्भवति ॥ २ ॥

उद्बुध्यस्वाग्ने प्रति जागृहि त्वमिष्टापूर्त्ते
सᳪसृजेथामयं च ॥ अस्मिन्त्सधस्थेऽअध्युत्तर-
स्मिन् विश्वे देवा यजमानश्च सीदत ॥ ३ ॥

---

( १ ) जनानामिदं जानं जानञ्च तद्राज्यञ्चेति कर्म्मधारयः। जनाधिपत्यायेत्यर्थः।
( २ ) आत्मज्ञानसामर्थ्यायेतिमहीधरः ॥ ( ३ ) पितृभूतस्य पुत्रमित्यर्थः ॥ ( ४ ) षष्ठ्यर्थे चतुर्थी (पा० २।३।६२) ॥ ( ५ ) वचनव्यत्ययः। (पा० ३।१।८५) षष्ठीरूपभ्रंशो वा ॥

हे अग्ने ! उद्बुध्यस्व उद्बुद्धो भव । सुप्रकाशो भव । एनं यजमानं प्रति जागृहि, त्वं जागरणशीलश्च भव । ततश्चेष्टापूर्ते संसृजेथाम् । अर्थात् यजमानेन सह । अयं च अयं यजमानोऽपि इष्टापूर्त्ताभ्यां संसृष्टो भवत्विति शेषः, । इष्टं यागादि, पूर्तं तडागादि । यद्वा अयं बुधः तथा च अयं बुधोऽप्युद्बुद्धो भवत्वित्यर्थः । तेन बुधप्रकाशकतास्य मन्त्रस्य भवति । ततः अस्मिन् सधस्थे सहस्थाने देवैः समानस्थाने आदित्यलोके । विश्वेदेवा यजमानश्च सीदत सीदतु तथा च यजमानस्य विश्वेदेवैः समानलोकता प्रार्थ्यते । आदित्यलोके किंभूते ? अध्युत्तरस्मिन् सर्वोत्कृष्टे ॥ ३ ॥

बृहस्पते॒ऽअति॒ यद॒र्यो॒ऽअर्हा॑त् द्यु॒मद्वि॒भाति॒
क्रतु॑म॒ज्जने॑षु ॥ यद्दी॒दय॒च्छव॑सऽऋतप्रजात॒ तद॒-
स्मासु॒ द्रवि॑णं धेहि चि॒त्रम् ॥ ४ ॥

हे बृहस्पते ! हे ऋतप्रजात ! ऋतात् सत्यात् प्रजापतेः सकाशात् प्रजातं प्रकृष्टं जातं जन्म यस्य इति ऋतप्रजातः तत्सम्बोधने रूपम् । अस्मासु द्रविणं धनं धेहि आधेहि धारय । यजमानेषु स्थापय देहीत्यर्थः । द्रविणं किंभूतं चित्रं नानाविधम् । तत्किं यत् धनम् अति अतिशयेन । अर्य्यः ईश्वरः(१) अर्थात् पूज्येत् । यच्च द्युमत् द्युतिमत् विभाति शोभते । यत् जनेषु क्रतुमत् यज्ञवत् अभीष्टजनकत्वेन विभाति । यच्च शवसः शवसा बलेन दीदयत् दीप्यते (२)यस्य रक्षितारो भवन्तीत्यभिप्रायः ॥४॥

अन्ना॒त्परि॒स्रुतो॒ रस॒म्ब्रह्म॑णा॒ व्यपि॑बत् क्ष॒त्रं
पय॒ः सोमं॑ प्र॒जाप॑तिः ॥ ऋ॒तेन॑ स॒त्यमि॑न्द्रि॒यं
वि॒पान॑ꣳ शु॒क्रमन्ध॑स॒ऽइन्द्र॑स्येन्द्रि॒यमि॒दं पयो॒ऽमृतं॒ मधु॑ ॥ ५ ॥

प्रजापतिः प्रथमशरीरी । अन्नात् अन्नस्य हविर्लक्षणस्य रसं परिस्रुतः । स्वधायाश्च रसं ब्रह्मणा त्रयीलक्षणेन व्यपिबत् विविच्य पीतवान् । पयः सोमं च व्यपिबत् वशीचकार । क्षत्रं च व्यपिबत् । अत्र पानं वशीकरणम् । सर्वमेतत् सत्यम् । अनेन च ऋतेन तत्सत्यं सञ्जातं यत्सोमम् इन्द्रियं वीर्यं सञ्जातं किंभूतं वीर्यं सञ्जातं ? यत्सोमम् इन्द्रियंवीर्यं सञ्जातं, किंभूतं वीर्यं ? विपानं लोहितात् विविक्तम्, यद्वा विपानं शेषेण पानयोग्यम् । एवं च अन्धसः अन्नस्य शुक्रं रेतो भिन्नम्

(१) "अर्य्यः स्वामिवैश्ययोः" इति पाणिनिः स्मरति । (२) महीधरस्तु—दीदयत् दापयति पोषयति वा धनान्तरम् । तद्धनं देहीत्यर्थः' "दयदानगतिहिंसारक्षणेषु" अस्माण्णिजन्ताल्लुङि रूपमडभाव आर्षं इत्याह ।

अङ्गात्सम्भूतमित्यर्थः। अथ इदं पय इन्द्रस्य इन्द्रियम् अमृतं मधु च भवतु ॥ ५ ॥

शन्नोदेवीति श्राद्धे व्याख्यातः।

कयानश्चित्रऽआभुवदूती सदावृधः सखा ॥

कया शचिष्ठया वृता ॥ ६ ॥

चित्रः चायनीयः इन्द्रः। कया ऊती ऊत्या केन पुनरवनेन तर्पणेन। नः अस्माकं सदावृधः सदाकालं वर्धयिता(१)। भुवत् (२) भूयात्। कया च आवृता (३)कर्मणा (परिपाट्या) नः अस्माकं सखा सहायश्च आभुवत् आभिमुख्येन भवेत्। यद्वा वर्त्तत इति वृत् तया वृता वर्त्तमानया, किंभूतया? शचिष्ठया "शची"ति कर्मनाम। ( निघं०२।५ ) अतिशयेन शची शचिष्ठा'तया अतिशयेन कर्मवत्या(४)। कीदृश इन्द्रः? चित्रः विचित्रः पूज्यो वा ॥ ६ ॥

केतुं कृण्वन्नकेतवे पेशो मर्याऽअपेशसे ॥

समुषद्भिरजायथाः ॥ ७ ॥

हे केतो! अकेतवे न विद्यते केतुः ज्ञानं यस्य सोऽकेतुः तस्मै अज्ञानाय। केतुं ज्ञानं ( निघं० ३।९।२ ) कृण्वन् कुर्वन्। उषन्ति हविर्दहन्ति(५)ते उषन्तोऽग्निहोत्रकर्त्तारो यजमानाः। अपेशसे अरूपाय अधनाय वा। मर्याः मर्याय (६)मनुष्याय। पेशः रूपं ( निघं० ३।७।१० ) हिरण्यं वा। (निघं० १।२।६ ) किङ्कुर्वन्? कृण्वन् कुर्वन्। तैस्त्वं प्रार्थितः एवमजायथा उत्पन्नोऽसि ॥ ७ ॥

इति नवग्रहमन्त्राः ॥

अथाधिदेवतानां मन्त्राः।

त्र्यम्बकं यजामहे इति नीलसूक्ते व्याख्यातः। श्रीश्चत इति उत्तरनारायणसूक्ते व्याख्यातः ॥

यदक्रन्दः प्रथमं जायमानऽउद्यन्त्समुद्रादुत वा पुरीषात् ॥ श्येनस्य पक्षा हरिणस्य बाहूऽउपस्तुत्यं महि जातं तेऽअर्वन् ॥ ८ ॥

हे अर्वन् अश्व! ते तव महि महत् उपस्तुत्यं स्तवहेतुः तत् संजातम्, किं? श्येनस्य पक्षाविव लुप्तोपममेतत्। हरिणस्य बाहू बाहू इव

( १ ) इगुपधलक्षणः कः ( पा ३।१।१३५ ) कित्त्वाद् गुणाभावः। ( २ ) "इतश्च लोपः" ( पा० ३।४।९७ ) इति तिपः इलोपः। अपरञ्चाप्युसे क्तिवे गुणाभावः।
( ३ ) "आवृत्परिपाटी अनुक्रमः" इत्यमरः। ( ४ ) यागक्रिययेति यावत्।
( ५ ) "उष दाहे" (भ्वा०प०) लटः शतरि रूपम्। ( ६ ) मर्याः मनुष्याः ( निघं०

अत्र बाहुशब्देनाग्रचरणद्वयमुच्यते। तथा च यथा पक्षाभ्यां श्येनः प्रस्थानाय शौर्येण गच्छति तेन तौ तस्य स्तुतिहेतू। एवं च तथा तवापि। यत्प्रथमं जायमानः सन् अक्रन्दः हेषा शब्दमकरोः। आश्वमेधे कर्मणि साधुत्वेन विशिष्टसाधनमहमित्येवं प्रकारेण। किं कुर्वन्? समुद्रात् अन्तरिक्षात् उदधेर्वा उद्यन् उद्गच्छन्। अथ वा पुरीषात् जलात् ( निघं० १।१२ ) पशोः (१)सकाशाद्वा उत्पद्यमानः ॥ ८ ॥

विष्णोरराटमिति पूजायां व्याख्यातः—

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा

राष्ट्रे राजन्युः शूरऽइषव्योऽतिव्याधी महारथो

जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः

पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवाऽस्य

यजमानस्य वीरो जायतां निकामे निकामे

नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः

पच्यन्तां योगक्षेमो नः कल्पताम् ॥ ९ ॥

हे ब्रह्मन्! अस्य नः अस्माकं यजमानस्य राष्ट्रे देशे ब्राह्मणः ब्रह्मवर्चसी आजायतां, ब्रह्मणो वर्चः ब्रह्मवर्चसं वेदाध्ययनादिजं तेजः तदस्यास्तीति ब्रह्मवर्चसी वेदाध्ययनादितेजोवानित्यर्थः। आजायतामिति सर्वत्र सम्बध्यते। वेदसाध्या सर्ववैदिकक्रिया इति प्रथमं स एवास्य प्रार्थ्यते। किं च राजन्यः क्षत्रियः शूरः आजायताम्, इषव्यः इषुषु साधुः (कुशलः)। अतिव्याधी अत्यन्तं शत्रुव्यधनशीलः। महारथश्च आजायतां, महारथः(२) ( रथेन जितः शत्रूनित्यादिप्रतिवादिनः ) किं च यजमानस्य राष्ट्र इति सर्वत्रान्वेति। अनड्वान्वृषभो वोढा वहनशील आजायताम्। सप्तिरश्वः आशुः शीघ्रगामी आजायताम्। योषा स्त्री पुरन्धिः

२।३।११ ) विभक्तिवचनव्यत्यय आर्षः। ( १ ) "पुरीषं पृणातेः पूरयतेर्वे"ति निरुक्तम् (२।१।२२) तेनात्र पुरीषः पशुर्व्याख्यातः महीधरेणापि। मन्त्रार्थस्तु यत्—यदा प्रथमं जायमानः समुद्रात्पशोर्वा उद्यन्नुत्पन्नमात्रस्त्वमाश्वमेधिके कर्मणि प्रतिविशिष्टसाधनमहमेवेति मन्यमानोऽक्रन्दो हेषाशब्दमकार्षीः। तदा ततश्च श्येनस्य पक्षिविशेषस्य पक्षौ हरिणस्य बाहू क्रमेण ते शौर्येण वेगेन च जिताविति शेषः॥ महि महत्त्वम्। उपसङ्क्रम्य स्तुत्यं स्तवनीयमृषिभिर्जातम्। चजिताविति शेषः।

( २ ) "एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। स महारथ आख्यातः" इति परिभाषितः। इति पाठोऽत्र युज्यतेऽस्म॥ अत्र कोष्ठाङ्कितः पाठः केनोपक्षिप्त इति न

पुरं शरीरं सर्वगुणसम्पन्नं दधाति पुरन्धिः। रथे तिष्ठन्तीति रथेष्ठाः क्विप्। सप्तम्या अलुक्। रथे स्थितो नरो (युयुत्सुर्नरो) जिष्णुः जयनशीलो युवा आजायतां युवा आ अस्येति पदच्छेदः। अस्य यजमानस्य युवा समर्थः। सभेयस्सभायां योग्यो वीरः पुत्रो जायतां, सभायां साधुः सभेयः, "ढश्छन्दसी"ति सभाशब्दात्तत्र साधुरित्यर्थे ढप्रत्ययः। तस्येयादेशः। किं च नः अस्य यजमानस्य निकामे निकामे(१) देशे देशे पर्जन्यः मेघः अभिवर्षतु। किं च ओषधयः यवाद्याः फलवत्यः सफलाः पच्यन्ताम्, किं च योगः क्षेमश्च कल्पतां भवतु, अलब्धलाभो योगः, लब्धस्य परिपालनं क्षेमः। स क्लृप्तो भवत्वित्यर्थः॥ ९॥

सजोषाऽइन्द्र सगणो मरुद्भिः सोमं पिब
वृत्रहा शूर विद्वान्॥ जहि शत्रूँ १॥ ऽरप मृधो
नुदस्वाथाभयं कृणुहि विश्वतो नः॥ १०॥

हे इन्द्र! यस्त्वं सजोषाः समानपात्रभोजनः अर्थात् देवैः सह। तं ब्रवीमि मरुद्भिः सह सगणः समानगणः। भूत्वा—मिलित्वा सोमं पिब। अतस्त्वं वृत्रहा वृत्रनाशको भविष्यसि। हे शूर! विद्वान् जानानः त्वं सोमं पीत्वा शत्रून् वृत्रप्रमुखान् जहि मारय। अपमृधो नुदस्व मृधः संग्रामात् अपनुदस्व क्षिप। युद्धं निवर्त्तयेत्यर्थः। अर्थात् हतावशिष्टान् शत्रून् पलायनाथ प्रेरयस्व। एवं रिपुं विनाश्याथानन्तरं नः अस्माकं विश्वतः सर्वतः अभयं कृणुहि कुरु॥ १०॥

असि यमो ऽअस्यादित्योऽअर्वन्नसि त्रितो
गुह्येन व्रतेन॥ असि सोमेन समया विपृ-
क्तऽआहुस्ते त्रीणि दिवि बन्धनानि॥ ११॥

हे अर्वन्! अश्व! त्वं यमोऽसि। आदित्योऽसि। त्रितः त्रिस्थानात् इन्द्रश्च त्वमसि। केन निमित्तेन? गुह्येन व्रतेन प्रकृष्टेन कर्मणा, यज्ञेनेति यावत्। किं च त्वं सोमेन सह समया(२) मध्यतो विपृक्तः संपृक्तः(३), व्यतिभिन्नः सोमङ्गतोऽभिन्न इत्यर्थः। तथा च ते तव(४) दिवि स्वर्गे त्रीणि बन्धनानि ऋग्यजुःसामात्मकत्रयीलक्षणानि(५) आहुः वदन्ति, ब्रह्मवादिन इति शेषः। एवमश्वः स्तूयते॥ ११॥

---

प्रतीमः। (१) नितरांकामोऽभिलाषो निकामः। निकामशब्दो देशवचनोऽनेनैव इहः प्रतिभाति॥ (२) "समयान्तिकमध्ययोः" इत्यमरः। (३) एकीभूतः एताभिर्देवताभिस्तव सायुज्यजातमित्यभिप्राय इत्युवटः। (४) आदित्यात्मनाध्वस्थितस्य। (५) मण्डकान्तरपुरुषार्चींषि।

काविरसि इति कातीयस्नानप्रकरणे व्याख्यातः—

चित्रावसो स्वस्ति ते पारमशीय ॥ १२ ॥

चित्रावसुशब्देन रात्रिरुच्यते, "रात्रिर्वै चित्रावसुरि" तिश्रुतेः, हे चित्रावसो रात्रे! स्वस्ति कुशलमस्तु। स्वस्त्या च ते पारं समाप्तिम् अशीय व्याप्नवानीत्यर्थः ॥ १२ ॥

अथ प्रत्यधिदेवतानां मन्त्राः।

अग्निं दूतमिति व्याख्यातः देवपूजायाम्—

अप्स्वन्तरमृतमप्सु भेषजमपामुतप्रशस्तिष्वश्वा भवत वाजिनः ॥ देवीरापो यो वऽऊर्मिः प्रतूर्त्तिः ककुन्मान्वाजसास्तेनायं वाजः सेत् ॥ १ ॥

अश्वानभिषिञ्चति—अप्सु अन्तः अपां मध्ये अमृतम् अवस्थितं वर्त्तते, अप्सु अन्तः भेषजं(१) अवस्थितं वर्त्तते। हे अश्वाः! तेन यूयं वाजिनः अन्नवन्तो भवत। वाजमन्नम् ( निघं० २।७।२ ) उत पक्षान्तरे—अपां प्रशस्तिषु प्रशस्तेषु पवित्रेषु भागेष्वपि भवत। किं च हे देवीः (२)आपः! यो वः ऊर्मिः (३)कल्लोलः। तेनायमश्वो वाजमन्नं सेत् सम्भजेत्। यद्वा सनुयात् बध्नीयात्। सनोतेः सिनोतेर्वा एतद्रूपम्। लिङ्। कल्लोलः किंभूतः? प्रतूर्तिः प्रकर्षेण त्वरणशीलः। ककुन्मान् उन्नतः। ककुत् उन्नतो वृषस्कन्धप्रदेशः तत्तुल्यत्वात् ककुच्छब्देनोन्नत उच्यते। बहुभिरुदकैः वृतइत्यर्थः। वाजसा ( ४ ) वाजमन्नं तस्य दाता ॥ १ ॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म सप्रथाः ॥ २ ॥

हे पृथिवि! नः अस्माकं स्योना सुखरूपा भव। अनृक्षरा च भव, न विद्यते ऋक्षरो यस्याः सा अनृक्षरा। ऋक्षरः कण्टकः। निवेशनी च भव साध्ववस्थितिर्भवेत्यर्थः। यच्छा नः शर्म सप्रथाः। नः अस्मभ्यं शर्म शरणं यच्छ देहि। त्वं किंभूता? सप्रथाः सर्वतः पृथुः(५) ॥२॥

इदं विष्णुरिति श्राद्धप्रकरणे व्याख्यातः॥

त्रातारमिन्द्रमवितारमिन्द्रः हवे हवे सुहवः शूरमिन्द्रम् ॥ ह्वयामि शक्रं पुरुहूत-

---

( १ ) आरोग्यपुष्टिकरमौषधम्। ( २ ) देव्यो दीप्यमानाः। ( ३ ) "भङ्गस्तरङ्ग-ऊर्मिर्वास्त्रियां वीचिरथोर्मिषु। महत्सूल्लोलकल्लोलौ" इत्यमरः। ( ४ ) 'षणुदाने' विट् पा० ३।२।६७ नस्यात्वम् ( पा० ६।४।४१। )। ( ५ ) प्रथनं प्रथः। "प्रथप्रख्याने" असुन्। प्रथसा सह वर्त्तमानाः सप्रथाः॥

मिन्द्रँ स्वस्ति नो मघवा धात्विन्द्रः ॥ ३ ॥

अतो हेतोरहम् इन्द्रं ह्वयामि । यत इन्द्रं त्रातारं रक्षितारं कथयन्ति जनाः । किंभूतम्? अवितारम् प्रीणयितारम् । किञ्च हवे हवे आह्वाने आह्वाने प्रतियज्ञं सुहवं शोभनाह्वानं, शूरं विक्रान्तं, शक्रं समर्थम् । पुरुहूतं बहुभिराहूतम् । पुरुशब्दो बहुवचनः । स च इन्द्रः आहूतो नः अस्माकं स्वस्ति कल्याणं धातु दधातु । किंभूतः इन्द्रः? मघवा मघं धनं तद्वान् ॥ ३ ॥

नियुत्वान्वायवागह्ययँ शुक्रोऽअयामि ते ।

गन्तासि सुन्वतो गृहम् ॥ ४ ॥

हे वायो ! यतः सुन्वतः अभिषवं कुर्वतः यजमानस्य गृहं गन्तासि गमनशीलोऽसि अतः त्वां ब्रवीमि । नियुत्वान् ऐश्वर्यवान् (१)भूत्वा आगहि आगच्छ । अयमपि शुक्रो ग्रहः ते त्वां प्रति अयामि अयतु आगच्छतु । लकारवचनव्यत्ययश्छान्दसः । तथा च शुक्रादीनां ग्रहाणां त्वमेव स्थानमित्यभिप्रायः ॥ ४ ॥

प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि

परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽ

अस्त्वयममुष्य पिताऽसावस्य पिता वयँ

स्याम पतयो रयीणाँ स्वाहा ॥ ५ ॥

हे प्रजापते ! त्वत् त्वत्तः अन्यः देवताविशेषः ता तानि एतानि विश्वा रूपाणि विश्वानि सर्वाणि (२)रूपाणि न परिबभूव परिभवितुं परिभवं । कर्तुं (३)शक्तो न बभूवेत्यर्थः । अतः यत्कामा (४)वयं ते त्वामुद्दिश्य जुहुमः नः अस्माकं तदस्तु । किं च तेन असावस्य पितेति यथायथमेव नामग्रहः । यथाऽसौ दशरथोऽस्य रामस्य पितेति । सर्वथा सपुत्रा वयं रयीणां धनानां पतयः स्याम भवेम ॥ ५ ॥

---

(१) नियुत्वान् इतीश्वरनामसु पठितम् ( निघं० १।२२।३ ) अत्र नियुद्गुणक इति उवटव्याख्यानम् । अश्ववानितिमहीधरीये पाठः । आगहीति—आङ्पूर्वाद्गमेर्लोटि शपो लुकि ( पा० २।४।७३ ) मलोपः ( पा० ६।४।३७ ) सेरपित्त्वेन ङित्वात् ॥ (२) नानाजातीयानि वर्तमानभूतभविष्यकालविषयाणि । (३) परिभवः स्वेष्टरूपेणु-पकल्पनम् । कर्तुं संहर्तुंमाप्यवसन्न इत्यर्थः । (४) या कामो येषान्ते, येन कामेन त्वामुद्दिश्य जुहुमः । तत्कामरूपफलंनोऽस्तु । अयममुष्य पितेति—पुत्र पित्रोर्मुख्य सची-कीम मुक्तामि । अयं ( स्वपितुः ) पुत्रोऽमुष्य, यजमानस्य पिता । असौ वा यजमानः अस्य पुत्रस्य पिता । इति यथापुरुषोनामग्रहः ।

नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। येऽअ-

न्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः॥ ६॥

तेभ्यः सर्पेभ्यो नमोऽस्तु। ते के? ये केचन पृथिवीम् अनु पृथिव्यां, ये च अन्तरिक्षे, ये च दिवि स्वर्गे सन्ति। तेभ्यः सर्पेभ्यः नमः। आदराथ पुनर्ग्रहणम्॥ ६॥

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः

सुरुचो वेनऽआवः। स बुध्न्याऽ उपमाऽ

अस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ ७॥

ब्रह्म आदित्यरूपं प्रथमं पुरस्तात् प्राच्यां दिशि जज्ञानं जायमानं ततोनन्तरं सीमतः सीमातो मर्यादातः मध्यस्थानात्सुरुचः सुरोचमानान् इमान् लोकान् स्वप्रकाशेन वि आवः व्यावः व्यावृणोति विवृतान्क(१)रोति। स बुध्न्या इति। स एवादित्यः बुध्न्या(२)दिशः। उपमाः व्यावृणोति। बुध्नमन्तरिक्षं तत्र भवा बुध्न्याः, उपमीयन्ते आसु स्थितानि भूतानि इत्युपमाश्च विवृणोति। प्रकाशयति, वृणोतेः शपि लुप्ते लङि गुणे च व इति रूपम्। अडभाव आर्षः। "बहुलं छन्दस्यमाङ्योगेपी"ति वचनात्। दिशः किंभूताः? विष्ठाः। अस्य जगतः विष्टा विविधं तिष्ठन्त्यास्विति विष्ठाः। किं च सतः विद्यमानस्य असतः अमूर्तस्य योनिं स्थानं विवः। अमूर्तस्याप्रत्यक्षस्य वाय्वादेः। आदित्यः किंभूतः? वेनः कान्तो मेधावी वा। एवं दिशः लोकं भूतानि वा आदित्य एवाभिव्यनक्ति नान्य इति सूर्यः स्तूयते॥ ७॥

अथ लोकपालानां मन्त्राः।

त्रातारमिति व्याख्यातः। अग्निं दूतमित्यपि, इममग्न इत्यपि, असि यम इत्यपि।

एष ते निर्ऋते भागस्तं जुषस्व स्वाहा॥ ८॥

हे निर्ऋते! देव! एषः ते तव भागः। तं भागं जुषस्व सेवस्व। इदं च स्वाहा सुहुतमस्तु॥ ८॥

वातो वा मनो वा गन्धर्वाः सप्तविंशतिः।

तेऽअग्रेऽश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः॥ ९॥

अश्वं युनक्ति। वा शब्दः समुच्चयार्थः। हे अश्व! एते त्वां युञ्जन्तु

(१) अत्र लङर्थे लड्यमभिप्रेति। उवटमहीधरौतु व्यावः व्यावृणोत् स्वप्रकाशेन विवृतानकरोदित्येवं व्याख्यातवन्तौ। (२) बुध्नमन्तरिक्षं (निघं० १।४।३)

इत्यध्याहा , ते के ? वातों वा वातश्च मनश्च गन्धर्वाः (१)सप्तविंशतिश्च नक्षत्राणीत्यर्थः। त्वयि जवं चादधातु। तत्र हेतुः ते अग्रे प्रथमं अश्वम् युञ्जन् रथे योजितवन्तः। ते अस्मिन् जवं वेगं चादधुः आहितवन्तः। तथा च वातादयः एव पूर्वमश्वमयुञ्जन् त एव तत्र वेगमादधुः। अतस्त एव तत्र भवन्तम् युञ्जन्तु ते च त्वयि जवम् आदधतु। इति वाक्यार्थः ॥ ६ ॥

कुविदङ्ग यवमन्तो यवं चिद्यथादान्त्यनु पूर्वं
वियूय। इहेहैषां कृणुहि भोजनानि ये बर्हिषो
नमऽउक्तिं यजन्ति ॥ १० ॥

कुवित् इति बहुनाम (निघं० ३।१)अङ्गेति क्षिप्रनाम (निघं० ५।१।७) चिदिति वितर्के। हे सोम! यथा यवमन्तः (२)बहु यवसम्पन्नाः कृषीवलाः गृहीतयवाः कुवित् बहुसंख्यकं सर्वयवमयं सस्यं चित् वितर्क्य अङ्ग क्षिप्रं दान्ति लुनन्ति "दाप्लवने" लट्। किं कृत्वा अनुपूर्वम् आनुपूर्व्येण वियूय पृथक्कृत्य निश्चित्येत्यर्थः। तथा एषां यजमानानां सम्बन्धीनि भोजनानि वस्तूनि इह अस्मिन्नेव यजमाने कृणुहि-कुरु। केषां? ये बर्हिषो बर्हिष उपरि स्थिताः यजमानाः नमउक्तिं यजन्ति। नमः अन्नं (निघं० २।७। २२) हविर्लक्षणं गृहीत्वा उक्तिं याज्यां स्वाहादिकां विधाय यजन्ति यागं कुर्वन्ति ॥ १० ॥

तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे
हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे
रक्षिता पायुरदब्धः स्वस्तये ॥ ११ ॥

वयं तम् ईशानं रुद्राधिपतिम् अवसे (३)अवनाय तर्पणाय हूमहे आह्वयामः। ईशानं किंभूतं? जगतः जङ्गमस्य तस्थुषः स्थावरस्य च पतिं पालकं, पुनः किंभूतं? धियंजिन्वं, धिया बुध्या जिन्वति प्रीणातीति धियं(४)जिन्वस्तम्। यद्वा धिया कर्मणा (निघं०२।१) जिन्वतीति तथा। यथा येन प्रकारेण पूषा सूर्यः नः अस्माकं वेदसां धनानां वृधे वर्धनाय असत् अस्तु-भवतु। किं च अदब्धः केनापि अनुपहिंसितः सन् रक्षिता पालकोऽस्माकमसत् अस्तु भवतु। पायुः पुत्रादीनां पालयिता च भवतु। स्वस्तये च भवतु ॥ ११ ॥

---

तत्रभवाः। (१) गोभूमेधर्त्तारः। (२) भूम्नि मतुप्। "अयवादिभ्यः" (पा० ८।२।९) इति निषेधान्मतुपोमस्य वत्वंन। (३) तुमर्थे असेप्रत्ययः (पा० ३।४।९)। (४) वृद्धिसन्तोमकारकम्। अम्लुकृच्छान्दसः।

नमोऽस्त्विति व्याख्यातः, ब्रह्मजज्ञानमिति च ।

विश्वकर्मन्हविषा वर्द्धनेन त्रातारमिन्द्रमकृ-
णोरवध्यम् । तस्मै विशः समनमन्त पूर्वी-
रयमुग्रो विहव्यो यथासत् ॥ १२ ॥

हे विश्वकर्मन् ! अग्ने ! अनेन हविषा महाव्रतीयलक्षणेन वर्द्धनेन वर्द्धयित्रा वा त्वम् इन्द्रं त्रातारं जगत्स्रष्टारम् अवध्यं हन्तुमशक्यम् अप्रतिभटं च अकृणोः कृतवानसि। तस्मै चैवंभूतरूपायेन्द्राय पूर्वीः विशः पूर्वं मनुष्याः वसिष्ठप्रभृतयः समनमन्त सन्नताः। इदानीन्तना अपि च। यथा यतः। पञ्चम्यर्थे थाल्प्रत्ययः। यतः कारणात् अयमिन्द्रः उग्रः उद्गूर्णवज्रः, विहव्यः असत् विविधेषु कार्येषु हूयते आहूयत इति विहव्यस्तस्माद्धविःसामर्थ्यात् इन्द्रस्यायं प्रभाव इत्यभिप्रायः ॥ १२ ॥

इति दशदिक्पालदेवतामन्त्रा व्याख्याताः।

अथ विनायकादिपञ्चकस्य मन्त्रा व्याख्यायन्ते ।

गणपतिदुर्गावाय्वाकाशान्यश्विनौ चेति, वातो वेति तिस्र ऋचो व्याख्याताः ॥

ऊर्द्ध्वाऽअस्य समिधो भवन्त्यूर्द्ध्वा शुक्रा शोचीᳬ᳡-
ष्यग्नेः । द्युमत्तमा सुप्रतीकस्य सूनोः ॥ १३ ॥

अस्याग्नेः प्रजापतिरूपेण संस्तूयमानस्य ऊर्ध्वा देवमार्गगामिन्यः। समिधो भवन्ति। शोचींषि तेजांसि अपि ऊर्द्ध्वानि भवन्ति। कीदृशानि शोचींषि ? शुक्रा शुक्राणि शुक्लानि शुद्धानि। पुनः किंभूतानि ? द्युमत्तमा (१)द्युमत्तमानि विश्वप्रकाशकानि। अग्नेः किंभूतस्य ? सुप्रतीकस्य सूनोः (२)सुप्रतीकस्य सुमुखस्य अर्थात् यजमानस्य सूनोः पुत्रस्य (३)स ह्येनञ्जनयति तेनास्यैष सूनुः। एवंभूतं वह्निं वयं स्तुम इति वाक्यशेषः ॥ १३ ॥

अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि ॥ १४ ॥

भिषक् वैद्यस्तस्य कर्म भैषज्यम्। अश्विनोर्देवभिषजोः अश्विनीकुमारयोः भैषज्येन भिषक्कर्मणा त्वामभिषिञ्चामि। किमर्थम् ? तेजसे ब्रह्मणे ब्रह्मवर्चसाय वेदाय ॥ १४ ॥

इति विनायकादिपञ्चकमन्त्रव्याख्या।

---

(१) द्यौः प्रकाशो येषान्तानि द्युमन्ति। अत्यन्तं द्युमन्ति द्युमत्तमानि। (२) "अङ्गं प्रतीकोऽवयवः" इत्यमरेणाङ्गमात्रे प्रतीकउक्तस्तथात्र प्राधान्यान्मुखमण्डलमेव श्रुतौ गृहीतम्। (३) "स यदेनं जनयति तेनास्यैष सूनुरि"ति श्रुतेः।

अथ चन्द्रप्रकाशकमन्त्रव्याख्या ।

अषा॑ढँय्युत्सु पृत॑नासु पप्रि॑ꣳ स्व॒र्षाम॒प्सां
वृ॒जन॑स्य गो॒पाम् ॥ भ॒रे॒षु॒जाꣳसु॑क्षि॒तिꣳ
सु॒श्रव॑सं॒ जय॑न्तं॒ त्वामनु॑मदेम सोम ॥ १५ ॥

हे सोम ! जयन्तं त्वाम् अर्थात् परसैन्यम् । अनुमदेम उत्साहयाम । त्वां किंभूतम् ? अषाढम् असहनम्, अनभिभूतं वा । युत्सु-युद्धेषु पृतनासु सेनासु पप्रिं परिपालयितारं "पृपालनपूरणयोरि"त्यस्यैवैतद्रूपं, स्वर्षां स्वः स्वर्गं सनोति सम्भजतीति स्वर्षास्तं स्वर्षाम् अप्साम् अपो जलानि सनोतीत्यप्सास्तम् । वृजनस्य बलस्य (निघं० २।७) गोपाम्-गोप्तारम् । भरेषुजां संग्राम-(१)जेतारं, जयतेरेतद्रूपं सुक्षितिं सुनिवासं, सुश्रवसं कल्याणक(२)र्तृत्वेन प्रसिद्धम् ॥ १५ ॥

सोमो॑ धे॒नुꣳसोमो॒ अर्व॑न्तमा॒शुꣳ सोमो॑
वी॒रं क॑र्म॒ण्यं॑ ददाति । सा॒द॒न्यं॑ वि॒द॒थ्यꣳ स॒भेयं॑
पि॒तृ॒श्रव॑णं॒ यो॒ ददा॑शदस्मै ॥ १६ ॥

सोमस्तस्मै धेनुं ददाति । आशुं शीघ्रगतिमन्तमर्वन्तमश्वं च । सोम एव वीरं पुत्रं ददाति । किंभूतं पुत्रं ? कर्मण्यं कर्मसु साधुम्(३) । सादन्यं सदने गृहे साधुम्, विदथ्यं विदथे यज्ञे साधुम्, सभेयं(४) सभायां साधुम्, पितृश्रवणं पितुरनुशासने स्थितं विनीतम् । तस्मै कस्मै ? यः यजमानः अस्मै ददाशत्(५) ददाति "हवि"रिति शेषः ॥ १६ ॥

त्वमि॒मा ओष॑धीः सोम॒ विश्वा॒स्त्वम॒पो
अ॑जनय॒स्त्वं गाः ॥ त्वमा त॑तन्थो॒र्व॑न्तरि॑क्षं॒ त्वं
ज्योति॑षा॒ वि तमो॑ ववर्थ ॥ १७ ॥

हे सोम ! त्वम् इमाः विश्वाः सर्वा ओषधीः अजनयः जनितवानसि । त्वमपस्त्वं गा जनितवानसि । त्वं उरु विस्तीर्णमन्तरिक्षम् आततन्थ आत-

(१) भर इति संग्रामनाम ( निघं० २।१७ ) हियन्तेऽत्र योद्धारः । "ऋग्रहोर्भश्छन्दसि" इतिहस्यभः । (२) श्रव इति कीर्तिनाम "अवश्याच्छामघुमच्च यूथम्" ( ऋ० सं० ३।७।११।५ ) अत्र "अवश्याच्छ कीर्त्तिश्चाभिसन्धायेति भाष्यम्" तेन सुकीर्त्तिमित्यर्थः । (३) "तत्रसाधुः" ( पा० ४।४।८८ ) इतियत् प्रत्ययः । (४) "ढश्छन्दसि" ( पा० ४।४।१०६ ) इतिढस्येयः । (५) "दाश्दाने" "बहुलंछन्दसी" ( पा० २।४।७६ ) ति शपः श्लुक्लिस्वम् "इतश्चलोपः परस्मैपदेषु" (पा० ३।४।९७) ति तिप इलोपः "लेटोऽडाटौ" ( पा० ३।४।९४ ) इत्यडागमः ॥

ततवानसि विततवानसि । त्वं ज्योतिषा तेजसा तमः अन्धकारं विववर्थ (१)विवृणोषि । आदित्यात्मना सर्वं तमोऽपनयसीति सर्वात्मा त्वमित्यर्थः । एवं सर्वात्मत्वेन स्तुतिः ॥ १७ ॥

देवेन॑ नो मन॑सा देव सोम रायो भागꣳ सहसावन्नभियु॑ध्य ॥ मा त्वात॑नदीशि॑षे वीर्य॑स्योभये॑भ्यः प्रचि॑कित्सा गवि॑ष्टौ ॥ १८ ॥

हे देव सोम ! हे सहसावन्(२) । सहस्वन् ! बलवन् ! देवेन देवसम्बन्धिना मनसा सह रायो धनस्य भागम् । नः अस्मभ्यम् अभियुध्य । युध्यतिर्गतिकर्मणां मध्ये पठ्यते ( निघं० २।१४ ) अन्तर्भावितण्यर्थोऽत्र गृह्यते तेन अभियुध्य अभिगमय । देहीत्यर्थः । एवं दानप्रवृत्तं त्वां मा कश्चित् आतनत् आतनोतु प्रतिबध्नातु । तनतिः प्रतिबन्धार्थः । कुतस्त्वमेवमुच्यसे ? इति चेत् यतस्त्वं वीर्यस्य स्वकीयवीरकर्मणः(३) ईशिषे ईश्वरोऽसि । किं च उभयेभ्यः उभयलोकप्राप्त्यर्थं प्रचिकित्सा(४) व्याध्यपगमं कुरु । गविष्टौ गोशब्देनात्रामुष्यलोक उच्यते । तथा च स्वर्गैषणायां विषयभूतायां त्वमस्मान् प्रचिकित्स दैवं मनः प्राप्य लब्धधनाः अरोगाश्च यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः ॥ १८ ॥

इति श्रीमहामहोपाध्यायश्रीशत्रुघ्नमिश्रविरचितायां मन्त्रार्थदीपिकायां नवग्रहादिमन्त्रव्याख्यानपरिच्छेदः समाप्तः ॥*॥

अथ ज्ञानकाण्डमिदानीं प्रस्तूयते—

दध्यङ्ङाथर्वण ऋषिः सुशिष्यं गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीतवेदमुत्पादितपुत्रम् यथाशक्त्यनुष्ठितयज्ञमपापं निस्पृहं यमनियमवन्तमतिथिपूजोपनीतकल्मषं मुमुक्षुमुपसन्नं पुत्रवत् शिक्षयन्नाह—

ई॒शा वा॒स्य॑मि॒दꣳ सर्वं॒ यत्किञ्च॒ जग॑त्यां॒ जग॑त् ॥
तेन॑ त्य॒क्तेन॑ भुञ्जीथा॒ मा गृ॑धः॒ कस्य॑ स्वि॒द्धन॑म् ॥ १ ॥

"ईशऐश्वर्ये" क्विपि तृतीयान्तस्यैतद्रूपम् । सर्वमिदम् ईशा ईशित्रा परमेश्वरेण स्वेनात्मना वास्यं वासनीयमाच्छादनीयं "ममेदमित्यनेन(५)

---

( १ ) "बभूथाततन्थजगृम्भववर्थेति निगमे" ( पा० ७।२।६४ ) इति निपातः । अत्र वितमोववर्थेति—उवटव्याख्यानम् । वितमस्तमसोऽभावं ववर्थ विवृणोषीति तदर्थः साधुः प्रतिभाति । ( २ ) आकार आगमश्छान्दसः । सह इति बलनाम ( निघं० २।९ ) ततो मतुप् । मस्य वः । ( ३ ) "अधीगर्थदयेशाङ्कर्मणि" ( पा० २।३।५२ ) इति षष्ठी । ( ४ ) सांहितिको दीर्घः । उभयलोकप्रतिबन्धकं विघ्नं निवर्त्तयेत्यर्थः । ( ५ ) ममेदमित्यनया भावनयेत्युवटः । परमात्माऽहमेवेदं सर्वमितिपरमार्थसत्यरूपेणात्मना सर्वमिद-

ज्ञानेने"ति शेषः । "वसआच्छादने" इत्येतस्यतद्रूपम्(१) । इदमिति प्रत्यक्षतो निर्दिशति । यत्किञ्चेति शब्दो भिन्नक्रमः । तथा च न पुनरेतत् प्रत्यक्षगोचरमात्रं किं च किञ्चित् यत् जगत्यां पृथिव्यां जगत्-जङ्गमादि स्वस्वामिसम्बन्धाभिगीतं(२) वर्तते तत्सर्वमेव । तथा च तेन ममताज्ञानेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसम्बन्धेन भुञ्जीथाः(३) "भोगमि" तिशेषः । अतश्च मा गृधः । ममेदमिति बुध्वा माऽभिकाङ्क्षीः(४) । "गृधु अभिकाङ्क्षायाम्" । माकाङ्क्षां मा कृथाः(५) । तत्र हेतुमाह—कस्य स्विद्धनमिति । स्विदिति निपातो वितर्कवचनः । कस्य पुनरेतद्धनं ? न कस्य चिदपीत्यभिप्रायः । सर्वाण्ययथार्थानि हि वस्तून्युत्पद्यन्ते । तथा हि स्त्रियं पतिरन्यथा भुङ्क्ते, अन्यथा पुत्रः, अन्यथा पित्रादिः । एवं कटककेयूरादीन्यलङ्करणानि अन्यं चान्यं च पुरुषमुपतिष्ठमानानि साधारणान्येव दृश्यन्ते । असाधारणेष्वेव ममता बुद्धिर्भवितुमर्हतीत्यभिप्रायः । तथा च सर्वार्थेषु वस्तुषु यः स्वस्वामिसम्बन्धो ममेदमिति बुद्धिः । सा अविद्या । तन्निवृत्तौ स्पृहानिवृत्तिः । निःस्पृहस्य च योगेऽधिकार इति वाक्यार्थः ॥ १ ॥

> कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ॥
> एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

निःस्पृहस्यापि योगिनो ज्ञाननिमित्तं कर्मण्यधिकार इत्येतद्दर्शनार्थमाह—कुर्वन्नेवेहेति । मुक्तिसाधनानि कर्माणि इह लोके कुर्वन्नेव शतं समाः जिजीविषेत् । जिजीविषेरिति पुरुषव्यत्ययः कार्यः । पुरोवर्तिविषयत्वादस्य मन्त्रस्य । जीवितुमिच्छेः । योगोचितपथ्यहितमितभक्षणेन । शतं समा इति पुरुषायुषोपल(६)क्षणार्थम् । एवं त्वयि (७) तव । "मुक्तिरस्तो" तिशेषः । नान्यथेतोऽस्ति । इतः प्रकारात् अन्यथा मुक्तिर्नास्तीत्यर्थः । यथा स्वयंप्राप्तेर्नाना प्रकाराः सन्ति तथा नात्रेत्यर्थः । ननु कर्मणः फलेन भवितव्यं तत्कथं मुक्तिरित्याशङ्क्याह—न कर्म लिप्यते नरे । नहि मुक्त्यर्थं कर्म क्रियमाणं नरे मनुष्ये लिप्यते सम्बध्यते । मुक्तिप्रदानेनोपक्षीणशक्तित्वादित्यर्थः ॥ २ ॥

---

अमृतमाच्छादनीयम् । परमात्माहमेवास्मि नान्यदस्तीति चिन्तनीयमित्यर्थ इतिमहीधरः । (१) "अहलोऽन्त्यस्य" (पा० ३।१।१२४) इति ण्यति उपधावृद्धौ सत्याम् ॥ (२) अभिलषितम् । (३) भोगमनुभवेः । तथा च भोगमिति शेषोऽपार्थक एव । (४) लुङि माङ्योगेऽडभावः (पा० ६।४।७४) । (५) "ममेदमितिधियं त्यजेत्यर्थः । (६) यावदायुः पर्यवसानमित्यर्थः । (७) अत्र विभक्तिव्यत्ययः । (पा० ३।१।८५) ।

कामनिन्दार्थं (१) मन्त्रमाह—

असुर्या नाम ते लोका ऽअन्धेन तमसाऽऽवृताः॥

ताँस्ते प्रेत्यापि गच्छन्ति ये के चात्महनो जनाः॥ ३॥

अत्र परमात्मस्व(२)रूपमजानन्तो देवादयोऽपि असुरा उच्यन्ते तेषां स्वभूताः असुर्याः। नामशब्दोऽनर्थको निपातः (३)। लोक्यन्ते दृश्यन्ते भुज्यन्ते कर्मफलान्यत्रेति लोकाः स्वर्गादयः। तथा च असुर्याः असुरसम्बन्धिनः। ते प्रसिद्धा लोकाः स्वर्गादयः। अन्धेन तमसा अज्ञानलक्षणेन तमसा। आवृताः सर्वत आच्छादिताः। तान् लोकान् ते जनाः प्रेत्य मृत्वा अपि(४)गच्छन्ति। ते के? ये के(चन)जनाः। आत्महनः काम्यकर्मकर्तारः। आत्मानं हि ते घ्नन्ति ये स्वर्गादिप्राप्तिहेतुभूतानि कर्माणि कुर्वन्ति। ते हि जनित्वा म्रियन्ते, मृत्वा च जायन्त इत्येवमहर्निशं विनाशं प्राप्नुवन्ति॥ ३॥

इदानी(५)मारब्धयमनियमवतां मुमुक्षूणां यथाभूतं परं ब्रह्म त(६)-त्त्वेनोपास्यं तदाह—

अनेजदेकं मनसो जवीयो नैनद्देवाऽआ-

प्नुवन्पूर्वमर्शत्॥ तद्धावतोऽन्यानत्येति

तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति॥ ४॥

अनेजत् स्थिरं (७)तत्स्वरूपमास्ते। एकमद्वितीयं विज्ञानघनरूपेण, मनसो जवीयः। मनस्तावच्छीघ्रं भवति तस्मादपि जवीयः,(८) शीघ्रतरं "प्रसा-

---

(१) काम्यकर्म्मपराविन्दतीत्यर्थः। (२) अद्वैतम्। असुषु प्राणेषु रमन्त इत्यसुराः प्राणपोषणपराः। तेषामिमेऽसुर्याः। (३) वस्तुतस्तु प्रसिद्धार्थः "नाम-प्रकाश्यसम्भाव्यक्रोधोपगमकुत्सने"ष्वित्यमरः। अयन्तु ते प्रसिद्धा इत्याह। वस्तुतस्तु ते-ये। यत्तदोरत्र व्यत्ययः। ये लोकाः दृश्यमानकर्म्मफलाः स्वर्गादयस्ते सर्वेऽपि असुर्या असुराणां प्राणपोषकाणां देवासुरमनुष्यादीनां स्वभुता एवेत्यर्थः। (४) अपिरत्र युक्तपदार्थे। यद्गच्छन्ति तद्युक्तमित्यर्थः। तथा च विश्वः। "अपि सम्भावनाप्रश्न-शङ्कागर्हासमुच्चये। तथा युक्तपदार्थे च कामचारक्रियासु चे"ति॥ (५) अत्रावस्त-भयमनियमवतामित्युवटभाष्ये पाठमनुसन्धायानेनारब्धेत्याद्युक्तम् महीधरस्तु मुमुक्षुभि-र्बोध्यं ब्रह्मात्मत्वेनोपास्यं, यस्याज्ञानात्संसारस्तदात्मस्वरूपमाहेत्येवमवतारयामास। (६) आत्मत्वेन। (७) स्वावस्थाप्रच्युतिः कम्पनम्। तद्रहितम्। सदैकरूपमित्यर्थः। (८) अत्र—जवोऽस्यास्तीतिजववत्। अत्यन्तं जववज्जवीयः। ईयसुनि मतुपो लुक्। (पा० ५।३।६५) नन्वनेजद्वेगवतोर्विरोधः। नैवम्। निरुपाधित्वेनानेजत्। सङ्कल्पविक-ल्परूपान्तःकरणस्योपाधेरनुवर्त्तनाज्जवीयः। देहस्थस्य मनसो दूरस्थब्रह्मलोकादिसङ्क-ल्पनं क्षणमात्राद्भवतीति मनो वेगवत्तरं लोके प्रसिद्धम्। मनसि दूरगच्छत्यात्मचैतन्य-

ददानेने"तिशेषः। नैनद्देवा आप्नुवन्पूर्वमर्शत् (१)वेगवन्मनसोऽपि प्रथमं गच्छत् एनत्—एतत्। देवाः प्राणाः (२) न आप्नुवन् न प्राप्तवन्तः सूक्ष्मत्वात्। एतत् किंभूतं ? पूर्वं सर्वस्य कारणत्वेनादिभूतम्। यद्वा पुनः किंभूतम् ? अर्शत् अविनश्यत्। रिशतिर्हिं(३)सार्थः (तु० प०) अनादिनिधनमित्यर्थः। तद्धावतोऽन्यान् (४) मनोवागिन्द्रियप्रभृतीन् अत्येति अतिक्रामतीव। कीदृशम् ? तिष्ठत् स्वयमक्रियमेव सद् गच्छतीव। व्यापकत्वादित्यर्थः। तस्मिन्नप इति। अपः (५)कर्माणि मातरिश्वा वायुः तस्मिन् दधाति स्थापयति। मातरि अन्तरिक्षे श्वसितीति मातरिश्वा। समिष्टयजुषि वायौ सर्वाणि यज्ञदानहोमकर्माणि स्थाप्यन्ते "स्वाहा वातेधाः" इति (८—२१) वायुप्रतिष्ठात्वाभिधानात् समष्टिव्यष्टिरूपोऽह्यसाविति वायुरपि यस्मिन् कर्माणि स्थापयति। यागहोमदानादीनां परमं निधानमित्यर्थः॥ ४॥

एवं कारणरूपमात्मानमुद्दिश्याथेदानीं कार्यरूपेणोपदिशति—

तदे॑जति॒ तन्नैज॑ति॒ तद्दू॒रे तद्व॑न्ति॒के ॥
तद॒न्तर॑स्य॒ सर्व॑स्य॒ तदु॒ सर्व॑स्यास्य बाह्य॒तः ॥ ५ ॥

तदेव सर्वकार्यरू(६)पेणावस्थितं सत् एजति क्रियावद्भवति। "एजृ कम्पने,"। तदेव च नैजति स्थावररूपेणावस्थितं सत्(७)। तद्दूरे वर्षकोट्याप्यविदुषामप्राप्यत्वात् दूर इव। तद्वन्तिके। उशब्द एवकारार्थः, तदेव चान्तिके समीपे। विदुषामात्मत्वेन भासमानत्वात्। अथ वा तत्

---

वभासः प्रथमप्राप्तइव गृह्यतेऽतो मनसो जवीय इत्युक्तम्॥ (१) "अशृगतौ" इति महीधरः। (२) द्योतनात्मकाश्चक्षुरादीन्द्रियाणीति महीधरः। एतत् प्रकृतमात्मतत्त्वम्। (३) "रिश्हिंसायाम्" (तु० प०) लटः शतरि धातोरिकारलोपश्छान्दसः। ततोनञ् समासः। (४) अत्रोवटः। तदः स्थाने यदोवृत्तिरुद्देश्यत्वात्। पश्चात्मतत्त्वं धावतोऽन्यान्पुरुषादीनत्येत्यतिक्रम्य गच्छतीव। नित्यचैतन्यस्वभावे आत्मतत्त्वे कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि यः सूत्रसंज्ञः सर्वस्य जगतो विधारयिता सर्वप्राणभृत्क्रियात्मकः। सोऽपि वायुः प्राणिनां चेष्टालक्षणानि अग्निरविमेघादीनां ज्वलनदहनप्रकाशाभिवर्षणादीनि च कर्माणि यस्मिन्ब्रह्मणि सत्यवद्दधाति विभजति धारयति वा। "भीषास्माद्वातः पवते, भीषोदेति सूर्यः" इत्यादिश्रुतेः। (तै० मा० ८।८) सर्वा हि कार्यकारणादिक्रियाः सर्वास्पदे नित्यचैतन्यरूपे ब्रह्मणि सत्येव भवन्तीत्यर्थः इत्येवम्महीधरव्याख्यानमत्र द्रष्टव्यम्॥

(५) आप्यन्ते-प्राप्यन्ते सुखदुःखानि याभिस्ता अपः कर्माणि। "आप्नोतेर्ह्रस्वश्च" (उणा० २।५८) इति क्विप् धातोर्ह्रस्वश्च। तानि कर्माणि यज्ञहोमादीनि।

(६) सर्वप्राणिरूपेणेत्युवटः। (७) अत्र महीधरः। तदात्मतत्त्वं स्वतो नैव चलति। अचलमेव सत् मूढदृष्ट्या चलतीवेत्यर्थः।

दूरे—आदित्यनक्षत्रादिरूपेण। तदेवान्तिके—पृथिव्यग्न्यादिरूपेण। "सर्वं खल्विदं ब्रह्मे"त्येतद्दर्शनार्थोऽयं ग्रन्थः। तदन्तरस्य सर्वस्य। तदेवास्य सर्वस्य प्राणिजातस्य विज्ञानघनरूपेणान्तः अ(१)न्तर्वर्ति। तदेवास्य प्राणिजातस्य बाह्यतः जडरूपेण शरीररूपादिनाऽवतिष्ठते, चेतनाचेतनरूपमनन्तं ब्रह्मेत्यर्थः॥ ५॥

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति॥
सर्वभूतेषु चात्मानं ततो न विचिकित्सति॥ ६॥

यस्तु सर्वाणि भूतानि आत्मन्नेवानुपश्यतीति। तु शब्दो मायापेक्षया व्यावर्त्तनार्थः। यः पुनः सर्वाणि भूतानि चेतनाचेतनरूपाणि आत्मन्ने(२)वानुपश्यति आत्मैवेति पश्यति भूतानि न मद्व्यतिरिक्तानि किं तु अहमेव परं ब्रह्म सर्वमिति पश्यति। सर्वभूतेषु चात्मानं, तद्व्यतिरिक्तं न किंचिदनुपश्यति। स ततो न विचिकित्सति न विचारे (संशये) प्रवर्तते। एवं पश्यतो हि योगिनः परब्रह्मरूपाध्यात्मविज्ञानघनानन्दैकत्ववेदिनः कुतो विचारः प्रवर्त्तताम्, ततो निरन्तरात्यन्तविशुद्धात्मदर्शनात् न विचिकित्सतीति(३)॥ ६॥

ननु शोकमोहौ दृश्येते तत्कथमेकत्वमुपपद्यते आत्मनो नानात्वे हेतोः सम्भवत इत्यत आह—

यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः॥
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥ ७॥

यस्मिन्नवस्थाविशेषे सर्वाणि भूतानि चेतनाचेतनानि आत्मैवाभूत् (४)आत्मैव भवति न भिन्नानि। "आत्मैवेदं सर्वं" "सर्वं खल्विदं ब्रह्म" तिजानाति। तत्र तस्मिन्नवस्थाविशेषे एतद्विजानतः पुरुषस्य योगिनः को मोहः कः शोकः? न कोऽपीत्यर्थः। हेतुमाह—एकत्वमनुपश्यतः। तथा च श्रद्धाञ्चितस्य शास्त्रविदितैकदृष्टेरात्मनो नानात्वाभावं निर्णीतवतः तथा शोकमोहहेत्वभावात् कथं शोकः कथं वा मोह इत्यर्थः॥ ७॥

अथ व्यपगतरागद्वेषविचिकित्सस्य कर्मवत एकत्वमनुपश्यतः किं(५) भवतीत्यत आह—

सपर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्॥
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्

(१) मध्येऽवतिष्ठते। (२) डेर्लुक्छान्दसः। (३) नसंशेते।
(४) परमार्थदर्शनादात्मैव संवृत्तः। (५) एवं भूतात्मज्ञस्य फलमाह।

व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥

स इति। य एवमात्मानं पश्यति स ईदृशं ब्रह्म पर्यगात् परिगच्छति(१)। तत्किंभूतं? शुक्रं, शुक्लं शुद्धं निर्मलं विज्ञानघनानन्दस्वभावमचिन्त्यशक्ति। अकायं, न विद्यते कायः शरीरं यस्य तत्। अत्र कायरहितत्वादेव अव्रणमक्षतं क्षतशून्यम्। अत एव च अस्नाविरं स्नायुरहितम्। शुद्धं सत्त्वरजस्तमोऽभिरनुपहतम्। अपापविद्धं, क्लेशकर्मविपाकाशयैः पापैरसंसृष्टम्। अकायमव्रणमस्नाविरमिति पुनरुक्तमपि न दोषाय "अभ्यासे भूयांसमर्थं मन्यन्ते" इति यास्कोक्तेः (निरु०१०। ४२)। एतादृशं ब्रह्मैव प्रतिपद्यत इत्यर्थः। अथात्मोपासनस्य फलमाह—कविर्मनीषीत्यादि। यश्च कविः क्रान्तदर्शनः आत्मोपासनायुक्तः स याथातथ्यतोऽर्थान् व्यदधात् यथास्वरूपमर्थान् विहितवान्। त्यक्तस्वस्वामिसम्बन्धैरर्थैः(२)रुपभोगं कृतवान्। शाश्वतीभ्यः समाभ्योऽर्थाय अनन्तवर्षप्राप्तये च "कर्म कृतवानि"त्यध्याहारः। स किंभूतः? मनीषी मनसा सूक्ष्माणामर्थानां विशेषज्ञः। परिभूः परिसर्वतो भावेन ज्ञानवान् भवतीति परिभूः। स्वयम्भूः। स्वयं ज्ञानबलात् तेन रूपेण (३)भाविना अवस्थितः। ननु यः कर्माविष्टो लोकः सोऽन्तराले(४)भवति तत्कथं प्राप्तिरिति चेत्सत्यम् आत्मसंस्कारजनकं कर्म ब्रह्मभावजनकं भवति तस्मात्सोऽपि परिगच्छति शुक्रमकायमव्रणं ब्रह्मेति ॥ ८ ॥

अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ॥

ततो भूयऽइव ते तमो यऽउसम्भूत्याᳪंरताः ॥ ९ ॥

तत्र प्रथमं लोकायतिका निन्द्यन्ते येषामेतद्दर्शनं जलबुद्बुदवज्जनाः, मदशक्तिवत् विज्ञानमिति। ये असम्भूतिम् उपासते। मृतस्य सतः सम्भवो जन्म नास्ति। शरीरादस्मान्मुक्तिरेव। न हि विज्ञानात्मा कश्चिदनुच्छित्तिधर्माऽस्ति यः शरीरान्तरेण सम्बध्यते। एवं य उपासते ते अन्धन्तमः अज्ञानलक्षणं तमः प्रविशन्ति। ततो भूय इव ते तमः। ते पुनः ततोऽपि बहुतरं तमः प्रविशन्ति। इवशब्दोऽनर्थकः। उकारोऽवधारणार्थः। तथा च ये सम्भूत्यामेव रताः। सम्भूतिरात्मा(५)। आत्मैवास्ति नान्यत् किञ्चिदस्ति कर्मादि, इति तत्पराङ्मुखाः स्वबुद्धिलाघवमजानाना आत्मज्ञानमात्ररताः। कर्मकाण्डज्ञानकाण्डयोः सम्बन्धो नास्त्येवेति येषामभिप्रायस्त इत्यर्थः ॥ ९ ॥

---

(१) प्राप्नोतीत्यर्थः। (२) चेतनाचेतनैः। (३) भवरूपेण। (४) संसृतौ (प्रेत्यभावपरम्परायाम्) मृत्वोत्पद्यते। उत्पद्य च म्रियते। (५) सम्भवत्यस्या इति सम्भूतिरात्मा। तत्रैव रता मायिकाः।

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ॥
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

सन्तो बुद्धिफलं नाना विभावयन्ति तदाह—सम्भ(१)वात्—आत्मज्ञानात् अन्यदेव(२) फलमाहुः, आत्मज्ञानवतामुत्कृष्टं फलमित्यर्थः। अन्यच्च फलमसम्भवात् असम्भ(३)वपरिज्ञानादाहुः इति शुश्रुम वयं श्रुतवन्तः धीराणां वचांसि। के धीरास्ते? ये नः अस्माकं तत्(४) ब्रह्म विचचक्षिरे व्याख्यातवन्तः ॥ १० ॥

सम्भूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ॥
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ॥ ११ ॥

समस्तस्य जगतः सम्भवहेतुं सम्भूतिम् ईश्वरं परं ब्रह्म, विनाशं(५) च। विनाशि शरीरं च। तत् उभयं सह एकीभूतम्। आत्मज्ञानहेतुत्वेन यो योगी वेद—जानाति। आत्मज्ञानोत्पत्तिहेतुकर्माणि करोतीति यावत्। स विनाशेन—विनाशिना शरीरेण मृत्युं संसारं तीर्त्वा उत्तीर्य सम्भूत्या—आत्मपरिज्ञानेन अमृतत्वम् अश्नुते प्राप्नोति। केवलं ज्ञानमेव नार्थसिद्धये किं तु कर्मापीत्याहुः ॥ ११ ॥

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥
ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ १२ ॥

ते अन्धम्—अज्ञानलक्षणं तमः प्रविशन्ति ये अविद्यां स्वर्गाद्यर्थानि कर्माणि उपासते—अनुतिष्ठन्ति। ते तु ततोऽपि भूयः बहुतरं(६) तमः प्रविशन्ति ये विद्यायामेव रताः। उकार एवकारार्थः। आत्मज्ञान एव रताः, त्यक्तकर्माण इत्यर्थः ॥ १२ ॥

अन्यदेवाहुर्विद्यायाऽअन्यदाहुरविद्यायाः ॥
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

सन्तः विद्यायाः आत्मज्ञानात् अन्यदेव फलमाहुः। अविद्यायाः कर्मणः अन्यच्च फलमाहुः। 'इति शुश्रुम' इति व्याख्यातम् ॥ १३ ॥

विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ॥ अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ १४ ॥

---

(१) सम्भवपरिज्ञानात् कार्यब्रह्मोपासनात्। (२) पृथगेवाणिमाद्यैश्वर्यलक्षणम्। (३) अव्याकृतोपासनात् अन्यदेव फलमुक्तम्। "अन्धन्तमः प्रविशन्ति" इति तदेतत्प्रकृतिलय इति पौराणिकोक्तम्। (४) पूर्वोक्तसम्भूत्यसम्भूत्युपासनाफलमिति महीधरः। (५) मत्वर्थीयोऽत्राच्प्रत्ययः। (६) इवशब्दोऽप्यर्थकः।

विद्यां चात्मज्ञानं च अविद्यां कर्म च यस्तदुभयं सह वेद एकीभूतं जानाति, ज्ञानातिशयेन कर्मकाण्डं ज्ञानकाण्डस्य गुणीभूतं जानातीत्यर्थः। एककार्यकारित्वमेकत्वमिह विवक्षितम्। सोऽपि अविद्यया कर्मकाण्डेन मृत्युं तीर्त्वा उत्तीर्य विद्यया परब्रह्मज्ञानेन अमृतं मोक्षम् अश्नुते—प्राप्नोति ॥ १४ ॥

इदानीमित्थं कृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरं यद्भवति तदाह—

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥
क्रतो स्मर, क्लिबे स्मर, कृतꣳ स्मर ॥ १५ ॥

अत्र वायुग्रहणं सप्तदशक(१)लिङ्गोपलक्षणार्थम्। वायुः प्राणवायुः अनिलं स्वकीयां प्रकृतिं(२)"भजते" इति शेषः। कमनिलम्? अमृतं, यो न विनश्यति(३)तम्। अन्तःशरीरचारी वायुः प्राणः स्व(४)भावेनावतिष्ठते। अथापगतप्राणस्य शरीरस्य कथमवस्थानमित्यत आह—अथेदं भस्मान्तं(५)शरीरं "भवती" त्यध्याहार्यम्। मुक्तस्य पुनः शरीरसम्बन्धो न भवतीति ध्वनितम्। अथ (६)सङ्करतो यस्य विशिष्टस्थानप्रतिपत्त्यर्थमग्नावाश्रयेऽवस्थानं भवति, यस्य वायुरनिलममृतमथेदं भस्मान्तं शरीरं भवति तमात्मानम् ओमिति आमन्त्रयते। हे क्रतो! सङ्कल्पात्मक! स्मर।(७)क्लिबे स्मर। क्लिबे—कल्प्यते भोगायेति क्लिपलोकः तस्मै स्मर। जश्त्वादेश आर्षः (पा० १।४।२० वा०) पदान्तत्वात् उपधाया इत्वञ्चार्षम् (पा० ३।१।८५) मयास्मै योऽयं लोको दातव्यस्तस्मै क्लृप्ताय लोकाय स्मर। कृतं स्मर। यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर। स्मरेत्यभ्यास आदरार्थः ॥ १५ ॥

पुनरनेन मन्त्रेण मार्गं याचते—

अग्ने नय सुपथा राये अस्मान्विश्वानि
देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराण-
मेनो भूयिष्ठान्ते नमऽउक्तिं विधेम ॥ १६ ॥

---

(१) इन्द्रियाण्येकादश, महाभूतानि पञ्च, जीवात्मैक एवं सप्तदशकम्। (२) प्रकृतिं भजते स्वप्रकृतिरूपतामापद्यते। (३) परब्रह्मलक्षणम्। तद्धि तद्विज्ञाय सम्पद्यत इत्युवट:, (४) ब्रह्मभावेन। (५) भस्मैव भवति कृतप्रयोजनकत्वात्। (६) इदानीं योगिने आलम्बनभूतमक्षरमुच्यते—ओमिति—ब्रह्मणः प्रतिमा नाम वा। तथाच—ओं—प्रतीकात्मकत्वात्सत्यात्मकमग्न्याख्यं ब्रह्माभेदेनोच्यते—हे ओम्! हे क्रतो!। इति। (७) स्मर। यन्मम स्मर्तव्यं तस्यायङ्कालः प्रत्युपस्थितोऽतः स्मर। यत्सर्वं ब्रह्मचर्यंगार्हपत्येषमया परिचरितस्तत्स्मर।

हे अग्ने! अस्मान् सुपथा शोभनमार्गेण नय प्रापय, राये धनाय यज्ञफलाय(१)। किं च हे देव! दानादिगुणयुक्त! विश्वानि सर्वाणि वयुनानि प्रज्ञानानि। "धेहि मयी"ति शेषः। त्वं किंभूतः? विद्वान् सर्वं जानानः। न हि तव ज्ञानशक्तीनां परिमाणमस्तीत्यभिप्रायः। किं च अस्मत् अस्मत्तः एनः पापं युयोधि(२)पृथक् कुरु। "युञ्मिश्रणे"। एनः किंभूतम्? जुहुराणं कुटिलं(३)कर्त्तुमिच्छत् "हुर्च्छाकौटिल्ये" सन्नन्तः(४) "हुर्च्छतेः सनो लुक् लोपश्चे"ति शानच्प्रत्ययः। तथा च क्रियासु हुर्च्छितुमिच्छति कुटिलं कर्तुमिच्छति यत् एनः। अभिलषिते मम क्रियाप्रतिबन्धकं यत्पापं तदित्यर्थः। तत्र हेतुमाह—भूयिष्ठान्ते नमउक्तिं विधेम। ते तव भूयिष्ठां बहुतमां नमउक्तिं नमस्कारं विधेम—करवाम। यद्वा नम इत्यन्ननाम उक्तिर्वचनं, तथा च नमः हविर्लक्षणेनोपस्थितेन यत् पुरोऽनुवाक्या याज्यावचनं सा नमउक्तिः तामित्यर्थः(५)॥ १६॥

आदित्यं प्रार्थयते(६)—

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्॥
योऽसावादित्ये पुरुषः सोऽसावहम्॥ १७॥

हिरण्मयेन हिरण्य(७)मयेन पात्रेण(८)ज्योतिर्मयेनेति यावत्। स्वार्थे मयट्। सत्यस्यादित्यमण्डलान्तर्वर्तिनः पुरुषस्य मुखं स्वरूपम् अपिहितमाच्छादितं वर्त्तते। अतो न दृश्यत इति यावत्। अतः हे पूषन्! तथा तेन प्रकारेण द्वारमपावृणु पुरुषेऽपि प्रकाशं कुरु यथा योऽसौ आदित्ये रविमण्डले(९) पुरुषः सोऽसौ प्रत्यक्षः(१०) अहमिति पश्यामीति। मण्डलान्तर्वर्त्ती पुरुषः स ह्यमृतेन ज्योतिषा पिहितो न दृश्यते। तत्र श्रु-

---

(१) मुक्तिलक्षणाय। कर्म्मफलभोगायेत्यर्थः। (२) बाहुलकत्वाच्छपः श्लुर्हित्वे हेर्धिः। (३) वञ्चनात्मकम्। (४) वस्तुतस्तु नात्र सन्, किन्तु-लटः शानचि जुहोत्यादित्वेन रूपम्, इतिमहीधरः। (५) एतद्व्याख्यानमनादेयं भाष्यकृद्भिर्महीधरोवटादिभिर्नमस्कारोक्तेरेव विधानाभिधानात्। इदानीं सपापत्वात्तव परिचर्यां कर्त्तुं न शक्नुमः। ततस्त्वया पापनाशे कृते शुद्धा वयन्नमस्कारेण त्वां परिचरेमेति तदाशयः॥ (६) इदानीमादित्योपासनामाह इत्युवटोऽवतारयामास। एवमेव महीधरोऽपि॥ (७) "ज्ञाविडनायने" (पा० ६।४।१०४) त्यादिना निपातः। (८) पिबन्ति यत्र स्थिता रश्मयो रसानिति पात्रं मण्डलम् तेन तेजोरूपेण मण्डलेन। (९) पुरुषाकारत्वात्। पूर्णमनेन प्राणबुध्यात्मना जगत्समस्तमिति वा पुरुषः। पुरिशयनाद्वा पुरुषः। (१०) स मण्डलस्थः पुरुषः, असौ दूरे दृश्यमानः। "इदमस्तु सन्निकृष्टे समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्।" इति। प्रत्यक्षः कार्यकारणसंघातप्रविष्टोऽहमस्मीत्येतामुपासनां कुर्यादित्यर्थः।

तिः प्रमाणम् । तथा हि "स एष एव मृत्युर्यऽएष एतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्चिर्दीप्यते तस्मान्मृत्युर्न म्रियते मृते ह्यन्तस्तस्मादु न दृश्यतेऽमृते ह्यन्तरि"ति । तदुक्तम्—हिरण्मयेन पात्रेणेत्यत्र यच्चोक्तमनेजदेकमित्यतः प्रभृति तदेत(१)द्ब्रह्म खमाकाशं प्रतिभाति ॥ १७ ॥

हलायुधेऽमा उवटेऽपि चार्थास्ततो विधेयो मयि माऽवलेपः ॥
रत्नाकरे किं मणयो न सन्ति ततः समाकर्षति यः स धन्यः ॥ १ ॥

इति श्रीमहाराजाधिराजधर्मचन्द्रकारितमहामहोपाध्यायशत्रुघ्नकृतमन्त्रार्थदीपिकायां ज्ञानकाण्डव्याख्यानं समाप्तम् ॥ १७ ॥

---

ॐ श्रीगणेशाय नमः ॥

ततो मण्डलब्राह्मणस्य पठनं कात्यायनप्रणीतत्रिकण्डिकास्नानसूत्रपरिशिष्टे मध्याह्नसन्ध्योपस्थाने "मण्डलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्योपविशेदि"त्यभिहितं तदेव सायनाचार्यकृतभाष्यसहितं प्रख्याप्यते ।

अथ मण्डलब्राह्मणं लिख्यते ।

यदेतन्मण्डलन्तपति तन्महदुक्थन्ताऽऋचः
सऽ ऋचां लोकोऽथ यदेतदर्चिर्दीप्यते
तन्महाव्रतं तानि सामानि स साम्नां लोकोऽथ
यऽएष ऽएतस्मिन्मण्डले पुरुषः सोऽग्नि-
स्तानि यजूꣳषि स यजुषां लोकः ॥ १ ॥

अथ मण्डलब्राह्मणभाष्यं लिख्यते ।

सूर्यमण्डलार्चिःपुरुषत्रयस्याऽधिदैवाधियज्ञाऽध्यात्मपरत्वेनार्थ उच्यते-तत्राधिदैवमयमर्थः । चयनगतबृहदुक्थमहाव्रताग्नित्रयं क्रमेण मण्डलार्चिःपुरुषरूपत्वेनोपासनीयमिति । अधियज्ञमयमर्थः । चयनगतरुक्मपुष्करपर्णहिरण्यपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनम् । अथाध्यात्ममपि-मण्डलादित्रयमेव दक्षिणाक्षिगतशुक्लकृष्णवर्णतदन्तर्वर्त्तिपुरुषाणां मण्डलादित्रयरूपत्वेनोपासनमिति । लोचने हि शुक्लरूपं कृष्णरूपं चास्ति तदन्तर्वर्ती पुरुषश्च दृश्यते । एतत्प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसम्पादनम् । अथ पुरुषस्य मृत्युत्वमुपजीव्य मृत्युगतैकत्वबहु-

---

(१) अत्र "ओंखम्ब्रह्म" इत्यन्ते पाठमभिप्रेत्य व्याख्याति तदेतदिति । महीधरस्तु ॐ खम्ब्रह्मेतियजुषी । ओमितिनामनिर्देशो ब्रह्मणः । खम्ब्रह्मेति आकाशरूपमन्ते ब्रह्म ध्यायेत् । ( अनुक्रम० ४-६ ) यद्यपि ब्रह्म चेतनमाकाशस्त्वचेतनस्तथाप्येकदेशे सादृश्यम् । नभोवद्व्यापकं ब्रह्म ओमिति जपन्ध्यायेदित्यर्थः । सूर्यमण्डलस्थः पुरुषोऽहमेवेत्यभेदेन चिन्तयेत् ।

त्वान्तिकदूरत्वमीमांसा तस्यैव पुरुषस्य बहुधोपासनं तत्फलमिति मण्डलब्राह्मणप्रतिपादितार्थसंग्रहः।

अथाक्षरार्थो व्याख्यायते-बृहदुक्थं मण्डलत्वेन ध्येयम्। एवं महाव्रतचित्याग्नी अर्चिःपुरुषात्मना ध्येयौ वेदत्रयस्याग्निवायुसूर्यात्मकत्वेन त्रयो वेदा दैवतानीति वक्तुं प्रयुज्यते अतो मण्डलस्य बृहदुक्थद्वारा ऋग्वेदात्मत्वोपासनमिति। उत्तरत्राधियज्ञपर्याये ऋक्सामादयो यज्ञावयवविशेषा इति नाध्यात्माधियज्ञयोस्तेषामुपास्यार्थना यन्महदुक्थं ता ऽऋचः स ऽऋचां लोकः। इति उ थस्य ऋक्सङ्घातात्मकत्वात्तस्य च मण्डलात्मत्वोपासनादृचां लोकः। ऋग्वेदरूपेण मण्डलमुपासनीयं, मण्डलरूपेण वा ऋग्वेद उपासनीयः, तदुभयात्मना महदुक्थमुपासनीयम् उभयथा व्याख्यातत्वात्। एवमुत्तरत्र महाव्रतं सामात्मकमर्चीरूपमिति सामवेदात्मना वा ध्यानमर्चिषः। अग्निर्मण्डलश्च पुरुषरूपः। अग्निश्च यजुर्मन्त्रसाध्य इति तस्य पुरुषस्योक्त्या यजुर्वेदात्मकत्वम्। एवमुक्थमहाव्रतचित्याग्नीनां मण्डलार्चिःपुरुषात्मकत्वेन तस्य मण्डलादित्रयस्य ऋग्यजुःसामरूपत्वम् ॥ १ ॥

सैषात्रय्येव विद्या तपति तद्धैतदप्यविद्वाꣳसऽ आहुस्त्रयी वा ऽएषा विद्या तपतीति वाग्घैव तत्पश्यन्ती वदति ॥ २ ॥

त्रयी वेदत्रयमेव तपति। उक्तार्थे लोकसम्मतिमाह-तद्धैतदप्यविद्वांसऽआहुरिति। ह प्रसिद्धम्। अविद्वांसोऽप्येतदाहुरेषा त्रय्येव विद्या तपतीति। तदुक्तमर्थस्वरूपं पश्यन्ती पर्यालोचयन्ती वाग्वदति त्रय्येव विद्या तपतीति ॥ २ ॥

अथ मण्डलस्थपुरुषस्य मृत्युरूपत्वमर्चिषोऽमृतरूपत्वञ्चाह—

स ऽएषऽ एव मृत्युर्, य्यऽ एषऽ एतस्मिन्मण्डले पुरुषोऽथैतदमृतं यदेतदर्च्चिर्द्दीप्यते तस्मान्मृत्युर्न म्रियतेऽमृते ह्यन्तस्तस्माद् न दृश्यतेऽमृते ह्यन्तरं ॥३॥

यऽ एष उ एतस्मिन्मण्डले पुरुषः स मृत्युः। यत् एतदर्चिर्दीप्यते तदमृतं यतोऽमृते मरणरहिते अर्चिषि अन्तर्मध्ये वर्त्तते अतो मृत्युर्न म्रियते। नहि अमृतमध्यवर्त्ती विनश्यति तस्यापि विनाशेऽमृतत्वप्राप्तिरुक्तमफलत्वेनोपन्यसितुमयुक्तेति तात्पर्य्यम्। अन्तर्वर्तित्वमेव विशदयति—तस्माद् न दृश्यतेऽमृते ह्यन्तरिति। मृत्युरूपः पुरुषोऽमृतरूपेऽर्चिष्यन्तर्वर्तते शक्त्युक्तेऽर्थे अर्चिराश्रयमण्डलस्य पुरुषाधिष्ठितत्वम् ॥ ३ ॥

तदेष श्लोको भवत्यन्तरं मृत्योरमृतमि-

त्यवरᳪ᳖ ह्येतन्मृत्योरमृतं मृत्यावमृतमाहि-
तमित्येतस्मिन् हि पुरुषऽएतन्मण्डलम्प्रतिष्ठितं
तपति मृत्युर्व्विवस्वन्तं व्वस्तऽइत्यसौ वाऽ
आदित्यो व्विवस्वानेष ह्यहोरात्रे व्विवस्ते
तमेष व्वस्ते सर्व्वतो ह्यनेन परिवृतो मृत्यो-
रात्मा व्विवस्वतीत्येतस्मिन्हि मण्डलऽएतस्य
पुरुषस्यात्मैतदेष श्लोको भवति ॥ ४ ॥

पुरुषार्चिषोरुभयोर्यस्य तमेव प्रतिष्ठेत्येतस्मिन्नर्थे मन्त्रं संवादयति–त-देष इति श्लोको मन्त्रः पादबद्धत्वसाम्यात्। मन्त्रपाठस्त्वेवम्–"अन्तरं मृ-त्योरमृतं मृत्यावमृतमाहितम्। मृत्युर्विवस्वन्तं वस्ते मृत्योरात्मा विवस्व-ती"ति। अयमर्थः। मृत्योः पुरुषस्यामृतममृतरूपार्चिरधिकरणं मण्डलम् अन्तरम् अवरं तदपेक्षया परस्तात्, मृत्यौ पुरुषे अमृतममृतरूपार्चिर-धिकरणं मण्डलमाहितं प्रतिष्ठितं विवस्वन्तम् अहोरात्रे विवासयति इद-महरेषा रात्रिरिति विभजति, पुनः पुनः करोतीति वा विवस्वानादि-त्यमण्डलमित्यर्थः। तन्मृत्युं वस्ते–आच्छादयति। सर्वतः स्वतेजसा परि-वृणोति। मृत्योः पुरुषस्यात्मा विवस्वति मण्डले प्रकाशते इति। अत्र वे-दान्तिनो मण्डलस्थपुरुषईश्वर इति मण्डलं केवलं न तपति किं तु तन्मध्य-वर्त्तिपुरुषतेजसेति प्रतिपादयन्ति। ईश्वरः स च मृत्युरूपत्वम् अतस्त-द्धर्मोपदेशात् ज्योतिषाभावाच्च अत्र चराचरग्रहणात् इत्येतैरधिकरणैः। अत्रापि तन्मतानुसारेण मण्डलवर्तिनः पुरुषस्य मृत्युरूपत्वं, मण्डलं च तेनाधिष्ठितं तस्य च मण्डलमेव प्रतीतिस्थानत्वेन प्रतिष्ठेति पूर्वमुक्तं मन्त्रं प्रतिपादमनूद्य व्याचष्टे–अन्तरं मृत्योरमृतमित्यवरं ह्येतन्मृत्योरमृतमि-त्यादिना। अवरमधस्तादित्यर्थः सिद्धः। अनेनामृतमध्यवर्तित्वमुक्तमि-त्यर्थः। द्वितीयपादगतामृतं यदेतदर्चिरधिकरणं मण्डलमुच्यते तत्पुरुष-प्रतिष्ठितं तपति तेन सहितस्य मण्डलस्य जगत्प्रकाशकत्वमस्ति। तृती-यपादगतं विवस्वत्पदं निर्वक्ति एष ह्यहोरात्रे विवस्ते इति। एतेन विव-स्वता सर्वतः परिवृतो वेष्टितः। चतुर्थपादं व्याचष्टे–एतस्मिन्विवस्वति मण्डले पुरुषस्यात्मा "प्रतीयते" इति शेषः। एतदेव श्लोको भवतीति निगमनम् ॥ ४ ॥

तयोर्व्वाऽएतयो, रुभयोरेतस्य चार्च्चिषऽएतस्य
च पुरुषस्यैतन्मण्डलम्प्रतिष्ठा तस्मान्मह-

दुक्थम्परस्मै न शꣳसेन्नेदेताम्प्रतिष्ठाञ्छिनदा
ऽइत्येताꣳ ह सप्रतिष्ठाञ्छिन्ते यो महदुक्थम्परस्मै
शꣳसति तस्मादुक्थशꣳसम्भूयिष्ठं
परिचक्षते प्रतिष्ठाच्छिन्नो हि भवतीत्यधिदैवतम् ॥ ५ ॥

तयोर्वा एतयोरित्यादेरयमर्थः । यतः पुरुषार्चिषोर्मण्डलमेव प्रतिष्ठा । अतो मण्डलरूपं महदुक्थं न परस्मै शंसेत् एतां प्रतिष्ठां नेत्छिनदै नेदिति परिभवे । न छिन्द्यामिति स्वप्रतिष्ठाया अन्याधानत्वे स्वयमप्रतिष्ठितो भवतीत्यर्थः । तथा च बहुधा बृहदुक्थस्य परस्मै शंसननिषेध ऐतरेयकोपनिषदि समाम्नायते—"तस्मादेव विद्वान्न परस्मा अग्निचिद्रूपान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेदि"ति । यतः परस्मै बृहदुक्थशंसनं निषिध्यते अतः उक्थशंसं भूयिष्ठं परिचक्षते, परस्मै शंसितारं होतारं लोके बहु निन्दन्ति यतः प्रतिष्ठा छिन्नो भवतीति मण्डलार्चिःपुरुषाणां बृहदुक्थमहाव्रताग्निद्वारेण ऋग्यजुःसामरूपत्वेनोपासनाच्च बृहदुक्थादीनां तादृङ्मण्डलाद्यात्मनोपासनमित्यधिदैवतमर्थम् । उक्थइत्युपसंहरति—इत्यधिदैवतमिति ॥ ५ ॥

अथाधियज्ञं यदेतन्मण्डलन्तपत्ययꣳ स
रुक्मोऽथ यदेतदर्चिर्दीप्यतऽइदन्तत् पुष्करपर्णमापो ह्येता ऽआपऽः पुष्करपर्णमथ यऽ
एषऽएतस्मिन्मण्डले पुरुषोऽयमेव स योऽयꣳ
हिरण्मयऽः पुरुषस्तदेतदेवैतत्त्रयꣳ
संस्कृत्येहोपधत्ते तद्यज्ञस्यैवानुसꣳस्थामूर्ध्वमुत्क्रामति तदेतमभ्येति यऽएष तपति
तस्मादग्निचिन्नाद्रियेत परिहन्तुममुत्र ह्येष
तदा भवतीत्युऽ एवाधियज्ञम् ॥ ६ ॥

अधियज्ञं वक्तुं प्रतिजानीते—अथाधियज्ञमिति । अत्र रुक्मपुष्करपर्णहिरण्मयपुरुषाणां मण्डलार्चिःपुरुषात्मनोपासनमित्यधियज्ञवाक्यस्य तात्पर्यम् । अक्षरार्थस्तु—यन्मण्डलं तपति अयमत्रोपहितो रुक्मः । यदर्चिर्दीप्यते तत् रुक्मपुरुषयोरधस्तादुपहितं पुष्करपर्णम् । कथमर्चिषः पुष्करपर्णात्मत्वं तत्राह—आपो ह्येता आपः पुष्करपर्णमिति । अद्भ्य उत्पन्नत्वा-

त्रदात्मकमित्यर्थः । मण्डलमध्यवर्त्ती पुरुषएवात्रोपसंहितो हिरण्मयपुरुषः । एतदुक्थादित्रयं मण्डलाद्यात्मना संस्कृत्य भावयित्वा इहाग्नावुपधत्ते तदा यज्ञस्य संस्थां समाप्तिमनु ऊर्ध्वमुत्क्रामति यजमानो यदा तत्तदा एतन्मण्डलादिरूपेण त्रिविधमादित्यम् अप्येति प्राप्नोति । य एष तपति तत्र कंचिद्धर्ममाह-तस्मादग्निं नाद्रियेत परिहन्तुममुत्र ह्येष तदा भवतीति । यतोऽस्मिन्नग्निं चितवान्यत्रादित्यो भवति । अतोऽग्निं परिहन्तुं नाद्रियेत । परिहन्तुममुत्र ह्येष तदा भवतीति । यतोऽस्मिन्नग्निं चितवान्चितमग्निमिष्टकाविशिष्टं नाशयितुमादरं कुर्यात् । कुतः एषोऽग्निरमुत्र भवति । परलोके यजमानशरीरात्मनोत्पद्यते इति । यद्वा परिहन्तुं प्राप्तं स्पृष्टमित्यर्थः । चित्याग्निस्पर्शने दोषश्रवणात् । एवमधियज्ञमस्यार्थो व्याख्यातः ॥ ६ ॥

अथाऽध्यात्मं यदेतन्मण्डलन्तपति यश्चैष
रुक्मऽइदं तच्छुक्लमक्षन्नथ यदेतदर्चिर्दीप्यते
यच्चैतत्पुष्करपर्णमिदन्तत्कृष्णमक्षन्नथ यऽएषऽ
एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः
पुरुषोऽयमेव स योऽयन्दक्षिणेऽक्षन्पुरुषः ॥ ७ ॥

अथाध्यात्मं 'प्रदर्श्यते' इति शेषः । अत्रायं विशेषः । मण्डलादित्रयस्यायश्चिकरुक्मपुष्करपर्णहिरण्मयपुरुषत्रयस्य च दक्षिणाक्षिगतशुक्लकृष्णवर्णद्वयतदन्तर्वर्तिपुरुषेषु तादात्म्येनोपासनमिति । अक्षन्निति अक्षिशब्दस्यानङ् "सुपां सुलुगि"ति सप्तम्या लुक् । एवं मण्डलादित्रयस्य लोचनगतशुक्लादित्रयस्य च तादात्म्येन ध्यानमुक्तम् । पुरुषस्य च द्वे चक्षुषी तत्र यथा दक्षिणे तथा सव्यलोचनेऽपि पुरुषो दृश्यते । सोऽयमुक्तलक्षणदक्षिणाक्षिपुरुषस्य मिथुनत्वे सम्पद्यत इत्याह ॥ ७ ॥

सऽएषऽएवलोकम्पृणा तामेष सर्वोऽग्निरभिसम्पद्यते तस्यैतन्मिथुनं योऽयꣳ सव्येऽक्षन्पुरुषोऽर्द्धमुहैतदात्मनो यन्मिथुनं यदा वै
सह मिथुनेनाथ सर्व्वोऽथ कृत्स्नꣳ कृत्स्नतायै
तद्यत्ते द्वे भवतो द्वन्द्वꣳ हि मिथुनं प्रजननन्तस्माद्द्वे द्वे लोकम्पृणेऽउपधीयेते तस्मादु
द्वाभ्यान्द्वाभ्याश्रितिं प्रणयन्ति ॥ ८ ॥

सऽ एषऽ एव लोकम्पृणेति । सऽ एव सूर्य्यमण्डलगतपुरुष एव लोकम्पृणा इष्टका, लोकम्पृणेष्टकाया आदित्यात्मत्वम् अष्टमकाण्डावसाने प्रतिपादितं, तथाहि-अथ लोकम्पृणामुपदधात्यसौ वा आदित्यो लोकम्पृणाथ ह्येमान् लोकान् पूरयत्यमुमेवादित्यमुपदधाति तां सूर्यात्मकलोकम्पृणेष्टकामभिलक्ष्य सर्वोऽग्निः सम्पद्यते लोकम्पृणाभिः सर्वाग्निः कृत्स्नः संतर्प्यत इत्यर्थः । तस्य सूर्य्यपुरुषात्मकदक्षिणाक्षिपुरुषस्य सव्याक्षिगतः पुरुषो मिथुनं योषिदिति "एतन्मिथुनं हि आत्मनोऽर्द्धः अर्द्धभागः "अर्द्धो वा एष आत्मनो यत्पत्नी" ति तैत्तिरीयश्रुतेः । यतः अर्द्धं स सव्याक्षिपुरुषो नातिरिक्त इत्यर्थः । यदात्मापि मिथुनेन युक्तस्तदा सर्वः कृत्स्नः पूर्णः पुरुषद्वयं मिथुनात्मना स्तौति-यत् यदा ते द्वे भवतस्तदा कृत्स्नतायै पूर्णत्वाय, द्वे इति व्यत्ययेन नपुंसकलिङ्गत्वं यतः पुरुषयोर्द्वन्द्वं मिथुनं प्रजननं प्रजोत्पादकं ततः सूर्यात्मिके लोकम्पृणे द्वे द्वे उपधीयेते द्वयोर्दशसु वा मन्त्र इति लोकम्पृणोपधानप्रस्तावे सूत्रमष्टमकाण्डे लोकम्पृणाप्रस्तावे द्वन्द्वश उपधानमुक्तम् । अथ या द्वितीया मिथुनं तदर्द्धमु हैतदात्मनो यत् मिथुनं स यस्यां स्वयं प्रथमे उपदधाति ततो दशभिर्दशभिः संस्थापयतीति द्वित्वमेवान्यत्रापि दर्शयति । तस्माद्द्वाभ्यामिति । तस्मादेव द्वाभ्यां द्वाभ्यां यजुष्मतीलोकम्पृणाभ्यां चितिं प्रणयन्ति ॥ ८ ॥

सऽ एषऽएवेन्द्रो योऽयन्दक्षिणेऽक्षन्पुरुषोऽथे-
यमिन्द्राणी ताभ्यान्देवाऽएतां विधृतिम-
कुर्वन्नासिकान्तस्माज्जायायाऽअन्ते
नाश्नीयाद्वीर्य्यवान्हास्माज्जायते वीर्य्यवन्तमु-
ह सा जनयति यस्याऽ अन्ते नाश्नाति ॥ ९ ॥

यदुक्तमक्षिद्वयपुरुषद्वन्द्वं मिथुनमिति तदेव स्त्रीपुंलिङ्गेन्द्रेन्द्राणीशब्दाभ्यां विशदयति-सऽएषऽएवेन्द्र इति । दक्षिणाक्षिपुरुष इन्द्र उच्यते । सव्याक्षिपुरुष इन्द्राणीत्युच्यते । इन्द्रस्य स्त्री इन्द्राणी "इन्द्रवरुणभवे" त्यादिना ङीषानुकौ । ताभ्यां स्त्रीपुंसाभ्याम् इन्द्राणीन्द्राभ्याम् अर्थे एतां नासिकां विधृतिं व्यवधायकवस्त्रस्थानीययामकुर्वन्देवाः । यतः स्त्रीपुरुषयोर्मध्ये देवा विधृतिं कृतवन्तः । अतो जायाया अन्ते नाश्नीयात् । स्त्रियाः समीपे स्त्रियं पश्यन् भोजनं न कुर्यादित्यर्थः । स्त्रीसमीपभोजनाकरणस्य फलं दर्शयति-वीर्यवान्हास्मादिति । अस्मात् स्त्रीसमीपभोजनमकुर्वतो वीर्यवान् सुतो जायते । यस्याः समीपे न भुङ्क्ते । सा उ ह साऽपि वीर्यवन्तमुत्पादयति ॥ ९ ॥

तदेतद्देवव्रतꣳ राजन्यबन्धवो मनुष्याणामनुत्तमाङ्गो-
पायन्ति तस्मादु तेषु व्वीर्य्यवाञ्जायतेऽमृतवाको
व्वयसाꣳ सा क्षिप्रं श्येनञ्जनयति ॥ १० ॥

एतद्व्रतमनुतिष्ठतां वीर्यवत्पुत्रोत्पत्तिर्भवतीत्याह—तदेतद्देवव्रतं राजन्यबन्धव इति । यदुक्तं जायाया अन्ते नाश्नीयादिति तदेतद्देवव्रतं देवकल्पितं व्रतम् । एतन्मनुष्याणां मध्ये राजन्यबन्धवोऽनुत्तमां गोपायन्ति । अत्यर्थरहस्यत्वेन कुर्वन्ति । तस्मात् उ तस्मादेव । तेषु राजन्यबन्धुषु वीर्यवान् पुत्रो जायते वयसां पक्षिणां मध्ये अमृतवाकी नामकपक्षिजातिरेतद्व्रतं गोपायति । अतः सा क्षिप्रं शीघ्रगामिनं श्येनं श्येननामानं पक्षिणं जनयति ॥ १० ॥

तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा
मिथुनस्यान्तङ्गच्छतोऽथ हैतत्पुरुषस्स्वपिति तद्यथा
हैवेदं मानुषस्य मिथुनस्यान्तं गत्वा संविद्ऽइव भवत्येवꣳ
हैवैतदसंव्विद्ऽइव भवति दैवꣳ ह्येतन्मिथुनं
परमो ह्येषऽ आनन्दः ॥ ११ ॥

अथेन्द्रेन्द्राणीनाम्नोः स्त्रीपुरुषयोः संगमस्य स्थानं तल्लक्षणानि चाह—तौ हृदयस्याकाशमित्यादिना । तौ स्त्रीपुरुषौ हृदयाकाशं दहरं प्रत्येव प्राप्य मिथुनी भवतः । हृदयं मिथुनीकर्म्मसंभोगं कुरुत इत्यर्थः । तौ यदा मिथुनकर्मणोऽन्तमवसानं गच्छतस्तदानीमेव पुरुषो जीवात्मा स्वपिति यथा निश्चितम् इदमेव किं लोके मानुषस्य मिथुनस्यान्तं गत्वा असंविदम् अजानन्निव पुरुषो भवति । एवं तदा तयोर्मिथुनभावे पुरुषोऽसंविदइव भवति विदेरिगुपधलक्षणः कः प्रत्ययः । न संवेत्तीत्यसंविदः । हि यतः एतन्मिथुनम् इन्द्रेन्द्राणीद्वन्द्वं दैवं देवनिर्मितम् अतस्तयोर्मिथुनभावे परम आनन्दो भवति ॥ ११ ॥

तस्मादेवँव्वित्स्वप्य्याल्लोक्यꣳ हैतेऽएव
तद्देवते मिथुनेन प्रियेण धाम्ना समर्द्धयति
तस्मादु ह स्वपन्तन्धुरेव न बोधयेन्नेदेते
देवते मिथुनीभवन्त्यौ हिनसानीति तस्मादु
हैतत्सुषुपुषः श्लेष्मणमिव मुखं भवत्येतेऽएव
तद्देवते रेतः सिञ्चतस्तस्माद्रेतसऽइदꣳ

सर्वꣳ सम्भवति यदिदङ्किञ्च ॥ १२ ॥

तस्मादिति । तस्माद्धेतोः । एवंवित् इन्द्रेन्द्राण्योः स्वापे मिथुनकर्मणा यस्यानन्दो भवतीति जानन् स्वप्यात् शयीत । एतच्छयनं लोक्यं स्वर्ल्लोकप्रापकं, ह यतः एवं जानतः एते एव देवते इन्द्रेन्द्राण्यौ समर्द्धयति । केन ? मिथुनेन प्रियेण धाम्ना मिथुनकर्मणा परमानन्दयुक्तौ करोति। अत्र कश्चिद्धर्ममाह–तस्मादुह स्वपन्तं धुरेवेति । यतः स्त्रीपुरुषयोर्मिथुनेन पुरुषः स्वपिति तस्मादेव स्वपन्तं स्वापं कुर्वन्तं धुरे पीडायै एव न बोधयेत् न प्रबुद्धं कुर्यात् । धूर्वतेर्हिंसार्थात् क्विपि राल्लोपे रूपम् । अव एवार्थं । यद्वा धुराइव वेगेनेव न प्रबोधयेत् । इव एवार्थे । अत्याहितकार्ये शनैः प्रबोधयेदित्यर्थः । तत्र कारणं–नेदेते देवते इति । यदि सहसा प्रबोधस्तर्हि एते देवते इन्द्रेन्द्राण्यौ मिथुनोभवन्त्यौ न इत् नैव हिंसानि । हिंसेर्लोटि उत्तमैकवचने रूपम्, हिनसानीति मनीषया सुप्तस्य सहसा प्रबोधनं न कार्यम् । तयोरिदानीं मिथुनीभावस्य लक्षणमाह–तस्मादु हैतत्सुषुपुष इति । तस्मात्तयोर्मिथुनभावेन पुरुषस्य भावः । स्वपेःकृदन्तस्य रूपं तस्मात्सुषुपुषः सुप्तवतो जनस्य मुखं श्लेष्मणं श्लेष्मायुक्तमिव भवति । श्लेष्मशब्दान्मत्वर्थे"लोमादी"त्यादिना पामादित्वान्नप्रत्ययः । कुतो मुखस्य श्लेष्मयुक्तता तत्राह–एते एव तद्देवते रेतः सिञ्चत इति । तयोर्देवतयो रेतःसेकात्सुप्तमुखं श्लेष्मयुक्तं तदाकारमिव भवतीत्यर्थः । तस्माद्रेतसः सकाशात् इदं सर्वं विश्वं सम्भवति उत्पद्यते । यदिदं किञ्च । यत्किञ्चित्प्राणिजातम् ॥ १२ ॥

सऽएषऽएव मृत्युऽः यऽएषऽएतस्मिन्म-
ण्डले पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषस्तस्य
हैतस्य हृदये पादावतिहस्तौ तौ हैतदाच्छिद्यो-
त्क्रामति स यदोत्क्रामत्यथ हैतत्पुरुषो म्रियते
तस्मादुहैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥

एवं प्रासङ्गिकं परिसमाप्य मण्डलस्थपुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य मृत्युरूपत्वमाह–स एष एव मृत्युरिति । य एष एतस्मिन्मण्डले पुरुषो यश्च दक्षिणनेत्रे पुरुषः स एष मृत्युरेव । तस्यैतस्य दक्षिणाक्षिपुरुषस्य पादौ हृदये अतिहस्तौ व्यामौ कीलकीलितौ भवतः । यदा स पुरुषः उत्क्रामति–गच्छति तदा तौ पादावाच्छिद्य बलादादायोत्क्रामति । स यदोत्क्रामति पुरुषशरीरात्तदाऽयमेव पुरुषो म्रियते तस्मादाच्छेद्यस्य शरीरस्य हृदयस्थौ पादावाच्छिद्य गतस्तस्मादिमं प्रेतमित्याहुः । प्रपूर्वादितेः क्तप्रत्यये रूपं प्रेत इति ॥ १३ ॥

एषऽउऽएव प्राणः एष ह्रीमा(ः सर्वा(ः
प्रजा(ः प्राणयति तस्यैते प्राणाः स्वा(ः स यदा
स्वपित्यथैनमेते प्राणाः स्वा ऽअपियन्ति
तस्मात्स्वाप्ययः स्वाप्ययो ह वैतꣳस्वप्न
ऽइत्याचक्षते परोक्षं परोक्षकामा हि देवाः ॥ १४ ॥

ननु कथमक्षिपुरुषनिर्गमे पुरुषस्य मरणमनेकप्रमाणं प्रस्तुत्याम्नातं तस्मिन्नुत्क्रान्ते–इत्यादिना ॥ प्राणनिर्गमनानन्तरमेव शरीरपात इत्याशङ्क्य तस्यैवाक्षिपुरुषस्य प्राणात्मतामाह एष एव प्राण इति। एषोऽक्षिपुरुष एव प्राणः। निर्वचनमाह-हि यतः एष इमाः प्रजाः सर्वाः प्रणयति लोकान्तरं प्रापयति तस्मादेष एव प्राणः तस्याक्षिपुरुषस्य प्राणरूपस्य एते प्राणापानादयः पञ्चप्राणाः स्वाः ज्ञातयः प्राणत्वेन समानजातीया इत्यर्थः। सोऽक्षिपुरुषो यदा स्वपिति निलीयते तदा एते स्वाः प्राणा एव अपियन्ति आप्नुवन्ति मनुलीयत इत्यर्थः। स्वानामप्यय इति स्वाप्ययं स्वप्न इत्याचक्षते परोक्षेण। यतो हि परोक्षकामा देवाः ॥१४॥

सऽ एतैऽः सुप्तो न कस्य चन व्वेद, न मनसा
सङ्कल्पयति, न वाचान्नस्य रसं व्विजानाति,
न प्राणेन गन्धं व्विजानाति, न चक्षुषा
पश्यति न श्रोत्रेण शृणोत्येतꣳ ह्येते तदा-
पीता भवन्ति सऽएषऽएकऽः सन्प्रजासु बहुधा
व्याविष्टस्तस्मादेका सती लोकम्पृणा सर्व्वमग्नि-
मनुविभवत्यथ यदेक ऽएव तस्मादेका ॥ १५ ॥

तस्मिन् सर्वेषां प्राणानामप्ययं विशदयति–स ऽएतैरिति। स पुरुष एतैः प्राणैः सह सुप्तः सन् कस्य चन–कस्यापि न वेद न कञ्चन जानाति। सामान्योक्तं विवृणोति–न मनसेति। सङ्कल्पो नामाध्यवसायः। वाचा रसनयाऽन्नस्य रसं न विजानाति, न प्राणेन–नासिकया(१)गन्धं, चक्षुषा न पश्यति, श्रोत्रेण न शृणोति। हि यतः एते मनआदयस्तदा एतं पुरुषमपीताः प्राप्ता भवन्ति। वस्तुतस्तु एकस्यैवाक्षिपुरुषस्य नानाप्रजास्वावेशाद्बहुत्वमित्याह-स एष एकः सन् प्रजासु बहुधा व्याविष्टः प्रविष्टः। तस्माल्लोकम्पृणा सूर्यपुरुषात्मिका वस्तुतो जात्या एकापि सती सर्वमग्नि-

(१) विजानातीति पूर्वेणान्वयितव्यम्।

मनुभवति व्याप्नोति अथ एकएव पुरुषस्तस्मादेका लोकम्पृणा ॥ १५ ॥

तदाहुः एको मृत्युर्बहवा३ इत्येकश्च बहु-
वश्चेति ह ब्रूयाद्यदहासावमुत्र तेनैकोऽथयदिह
प्रजासु बहुधा व्याविष्टस्तेनो बहवः ॥ १६ ॥

एवं मण्डलस्य पुरुषात्मनोपासनीयस्य दक्षिणाक्षिपुरुषस्य च मृत्यु-रूपत्वं प्राणरूपत्वं चोक्तं, तत्र जन्तोरेकत्वं बहुत्वं चेति प्रश्नोत्तराभ्या-माह-तदाहुरेको मृत्युरिति । एको मृत्युर्बहवश्च, बहवा इत्यत्र विचारार्थं प्लुतिः । एकश्च बहवश्चेति वदेत् । अहेति स्फुटत्वे । असौ अमुत्र लोके आदित्यमण्डलमध्यवर्ती पुरुष एकः । इह भूलोके प्रजासु मनुष्यपश्वादिषु व्याविष्टस्तेन अतआवेशादेव बहवो मृत्यवः ॥ १६ ॥

तदाहुरन्तिके मृत्युर्दूरा३इत्यन्तिके च दूरे
चेति ह ब्रूयाद्यदहायमिहाध्यात्मन्तेना-
न्तिकेऽथ यदसावमुत्र तेनो दूरे ॥ १७ ॥

तदाहुरन्तिक इति । समीपदूरवर्त्तित्ववाक्यमपि एवं व्याख्येयं यत् इहाध्यात्ममयमक्षिपुरुषस्तेनान्तिके समीपवर्ती, यत् अमुत्र द्युलोकेऽसौ मण्डलस्थः पुरुषस्तेन उ दूरवर्तीति ॥ १७ ॥

तदेष श्लोको भवति ॥ अन्नेभात्यपश्रितो
रसानाᳪं संक्षरेऽमृतऽइति । यदेतन्मण्डल-
न्तपति तदन्नमथ यऽएषऽएतस्मिन्मण्डले
पुरुषः सोत्ता सऽएतस्मिन्नन्नेऽपश्रितो
भातीत्यधिदेवतम् ॥ १८ ॥

अथ मृत्योरन्तिकत्वे मन्त्रं संवादपूर्वकमाह तदेष श्लोकोभवतीति । "अन्ने भात्यपश्रितो रसानां संक्षरेऽमृत"इत्येतावान् मन्त्रः । तमेव श्लोक-मधिदेवाध्यात्मपरत्वेन व्याचष्टे-यदेतन्मण्डलं तपतीति । यदेतज्जगत्प्रका-शकं ज्योतिर्मण्डलन्तदन्नं तन्मध्यवर्ती पुरुषो रसानां संक्षरे रसक्षरणवति अन्ने मण्डले अपश्रितः स्थितः । सोऽमृतो मरणधर्मरहितः पुरुषो भाति । दीप्यते इत्यक्षिरेवमर्थः ॥ १८ ॥

अथाध्यात्ममिदमेव शरीरमन्नमथ योऽयन्द-
क्षिणेऽक्षन्पुरुषः सोत्ता सऽएतस्मिन्नन्ने-
पश्रितो भाति ॥ १९ ॥

अर्थोति। अध्यात्मं तु इदमेव शरीरमन्नं दक्षिणाक्षिपुरुष एवाद्य। तथा चान्ने शरीरेऽपश्रितोऽमृताऽक्षिपुरुषोऽत्ता भाति प्रकाशत इति ॥१९॥

तमेतमग्निरित्यध्वर्यव उपासते यजुरित्येष

हीदर्ठ० सर्व्वँ युनक्ति सामेतिच्छन्दोगा

ऽएतस्मिन्हीदर्ठ० सर्व्वर्ठ० समानमुक्थमिति

बह्वृचाऽएष हीदर्ठ० सर्व्वमुत्थापयति

यातुरिति यातुविदऽएतेन हीदर्ठ० सर्व्वँ

य्यतँ विषमिति सर्पा(ः, सर्पऽइति सर्पविद,

ऽऊर्गिति देवा, रयिरिति मनुष्या, मायेत्यसुरा(ः,

स्वधेति पितरो, देवजनऽइति देवजनविदो,

रूपमिति गन्धर्व्वा, गन्धऽइत्यप्सरसस्तं यथा-

यथोपासते तदेव भवति तद्धैनान्भूत्वावति

तस्मादेनमेवँ विित्सर्व्वैरेवैतैरुपासीत सर्व्वर्ठ०

हैतद्भवति सर्व्वर्ठ० हैनमेतद् भूत्वावति ॥ २० ॥

एवमधिदैवमध्यात्मं च यः पुरुषः परमात्मा ध्येयत्वेनोक्तस्तस्य प्रशंसार्थं नानारूपैरुपासनं दर्शयति–तमेतमिति। यः पुरुषः उक्तः स परमात्मेति सर्वत्र व्याख्येयः। अतएवैतरेये एकमेवाध्यात्ममधिदैवं चैकं परमात्मानं प्रस्तुत्य समाम्नातम्। 'एतं ह्येते बह्वृचा महदुक्थमीमांसन्तराग्नावध्वर्यव एतं महाव्रते छन्दोगाः तमस्यामन्तं दिव्ये तं वायवेतमाकाश' इति प्रक्रम्य "सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत" इति। तत्राध्वर्यवो याजुषा एतं पुरुषमग्निरिष्टकाचयनेन निष्पादितोऽग्निरित्युपासते। यजुरिति च यजुःशब्दस्य परमात्मपरतां दर्शयति "एष हीदं सर्वं युनक्ती"ति। एषः पुरुष इदं सर्वं जगत् युनक्ति सर्वत्र स्वयं गत इति। अनेन सर्वव्यापकत्वमुक्तं छन्दोगाः सामवेदिनः सामेत्युपासते। सामशब्दस्य परमात्मपरतां निर्वक्ति "एतस्मिन्हीद"मिति। एतस्मिन्परमात्मनि कारणे इदं सर्व कार्यजातं समानं, समानमिति सामशब्दनिष्पत्तिः। बह्व्य ऋचो येषां ते बह्वृचा ऋग्वेदिन इत्युपासते। एष इदं सर्वमुत्थापयति जनयतीति उक्थशब्देन परमात्मोच्यते इत्यर्थः। उत्पूर्वात्तिष्ठतेः कप्रत्यये तकारस्य ककारश्छान्दस इति उक्थशब्दव्युत्पत्तिः। यातुविदो यातुधाना यातुरित्युपासते। एतेन इदं सर्वं यतं नियतं स्वस्वस्थानमनतिलङ्घ्य

स्थापितं वर्त्तत इति । यातुशब्दः पुरुषवाचकः सर्पाः । विषमित्युपासते स्वोपजीव्यत्वाद्विषस्यो पासनम् एवमुत्तरत्र । सर्पविदः अहि(१)तुण्डिकाः । ऊर्ग् दुर्गमं, रयिर्धनं, मायाऽन्तर्द्धानादिका, स्वधा पितृभ्योदेयमन्नं, देवजनविदः किन्नराः । स्वधादेवजन इति, रूपं गानादिकौशलं' गन्धः स्रगादिभोगः, सर्वं स्वोपजीव्यत्वे सति पुरुषमेवोपासते इति तात्पर्यसंग्रहेणाह-यथा यथोपासते तदेव भवतीति । तं परमात्मानं यथा येन रूपेण उत येन प्रकारेण वा उपासते स तदेवैतत्स्वरूपो भवतीति ! यदुक्तं पूर्वमुपास्यरूपं तं भूत्वा एतानुपासकानवति । तस्मादेवं वित्पुरुषः सर्वरूपो भूत्वा जगदवतीति जानतः एतैः सर्वैः पूर्वोक्तैरूपैरग्न्यादिकैरेनं पुरुषमुपासीत स पुरुषः सर्वमेतदग्न्यादिकं भवति सर्वमेतद्भूत्वा एनमुपासकमवति ॥ २० ॥

सऽएष त्रीष्टकोऽग्निर्ऋगेका, यजुरेका सामैका,
तद्यांकाञ्चात्रर्चोपदधाति रुक्मऽएव तस्या
ऽआयतनमथ यां यजुषा पुरुषऽएव तस्याऽ
आयतनमथ याᳬं साम्ना पुष्करपर्णमेव
तस्या आयतनमेवन्त्रीष्टकः ॥ २१ ॥

यदुक्तं पूर्वस्मिन् ब्राह्मणे एतस्याग्नेर्वास्मिन् ब्राह्मणे एतस्याग्नेर्वागेवोपनिषदिति प्रक्रम्य सा वा एषा वाक्त्रेधा विहिता ऋचो यजूᳬंषि सामानि, तेनाग्निस्त्रेधा विहितस्तेन हि त्रयेण चीयत इति । तत्र सूर्यमण्डलार्चिःपुरुषरूपत्वमेव ऋचः । अर्चिःसामानि पुरुषो यजूंषीति। अथैषामधियज्ञमेवमुक्तं " यदेतन्मण्डलं तपत्ययᳬं स रुक्मोऽथ यदेतदर्चिर्दीप्यत इदं तत्पुष्करपर्णमथ यऽएषऽएतस्मिन्मण्डले पुरुषोऽयमेव स योऽयं हिरण्मयः पुरुष इति । तत्सर्वं पर्यालोच्याह-सएषत्रीष्टकोऽग्निरिति । एष चित्याग्निस्त्रीष्टकः त्रिसंख्याकेष्टकः । ता एवेष्टका दर्शयति-ऋगेका, यजुरेका, सामैकेति । तद्यां काञ्चात्रर्चोपदधातीत्यादेरयमर्थः । अत्राग्निपरकामिष्टकामृचा ऋङ्मन्त्रेणोपदधाति सा ऋगिष्टका, साध्यसाधनयोरभेदोपचारादेवमुक्तं, तस्य रुक्म एवायतनम् ऋगात्मकं मण्डलमेवाधियज्ञे रुक्म इत्युक्तं, यां-यामिष्टकां यजुर्मन्त्रेणोपदध्यात्सा यजुरिष्टका तस्याः पुरुष एवायतनं मण्डलाधिष्ठातुः पुरुषस्याधियज्ञं हिरण्मयपुरुषत्वमुक्तम् । अथ यामिष्टकां साम्नोपदध्यात्सा सामेष्टका तस्याः पुष्करपर्णमे-

(१) " व्यालग्राह्यहितुण्डिकः" इत्यमरः ।

वायतनं सामात्मकार्चिषोऽधियज्ञपुष्करपर्णात्मत्वमुक्तम्। एवमृगादिभेदेन त्रीष्टकोऽग्न्याख्योयज्ञः ॥ २१ ॥

ते वाऽएतेऽउभेऽएष च रुक्मऽएतच्च पुष्करपर्णमेतं
पुरुषमपीतऽउभे ऋक्सामे यजुरपीतऽएवम्वेकेष्टक(ः ॥ २२ ॥

एकेष्टकत्वं सम्पादयितुमाह—ते वा एते उभे इति । एष रुक्म एतत्पुष्करपर्णंत्वम् । एते उभे एतं पुरुषमपीतः प्राप्नुतस्तदाधारे भवत इत्यर्थः । ऋक्सामे उभे यजुः अपीतः यजुरधीने स्तः। एवं उ एवमेवैकेष्टकः रुक्मपुष्करपर्णयोः पुरुषाधारत्वे ऋक्सामयोश्च यजुरधीनत्वं तस्मादेकेष्टकोऽग्निरित्यर्थः ॥ २२ ॥

सऽएषऽएव मृत्युर्यऽएषऽएतस्मिन्मण्डले
पुरुषो यश्चायन्दक्षिणेऽक्षन्पुरुषꣳ सऽएष
ऽएवँविद आत्मा भवति स यदैवंविदस्मा-
ल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवति सोऽमृतो
भवति मृत्युर्ह्यस्यात्मा भवति ॥ २३ ॥

स एषऽ एव मृत्युरित्यादिना वेदितुः फलवर्णनं य एतस्मिन्मण्डले पुरुषो यश्च दक्षिणनेत्रे स एष मृत्युः स च एवंविदो नरस्यात्मा भवति । स एवंविदस्माल्लोकात्प्रैति म्रियते य एतमेवात्मानमभिसम्भवति प्राप्नोति । अमृतश्च भवति । हि यतो मृत्युरस्यात्मा भवति स एषोऽग्निर्यजुरात्मकोऽधियज्ञम् । अधिदैवं मण्डलमध्यवर्ती अध्यात्मं दक्षिणाक्षिवर्ती पुरुषो मृत्युरूपः । तमात्मत्वेन विद्वानस्माल्लोकात्प्रयन्नेवाऽमृतो भवतीत्यर्थः ॥२३॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीये
शतपथब्राह्मणे दशमकाण्डे अग्निरहस्ये तृतीयप्रपाठके
चतुर्थब्राह्मणस्य भाष्यं समाप्तम् ॥



इदानीं याज्ञवल्कीयबृहदारण्यककाण्डप्रवर्त्तकगुरुशिष्यपरम्पराकथनाय वंशप्रतिपादकं कण्डिकैकादशकं समारभ्यते । तत्र प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुरिति ।

अथ वꣳशः समानमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रो, माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यꣳ कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणो वात्स्याद्वात्स्यꣳ शाण्डिल्याच्छाण्डिल्यः कुश्रेꣳ कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरꣳ कावषेयꣳ प्रजापतेꣳ प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमꣳ ॥ १ ॥

अथ वꣳशस्तदिदँव्वयꣳ शौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्यः सांकृत्याच्च भारद्वाजाच्च भारद्वाज ऽऔदवाहेश्च शाण्डिल्याच्च शाण्डिल्यो बैजवापाच्च गौतमाच्च गौतमो बैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेयः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायनः शौनकाच्चात्रेयाच्च रैभ्याच्च रैभ्यः पौतिमाष्यायणाच्च कौण्डिन्न्यायनाच्च कौण्डिन्यायनꣳ कौण्डिन्यात्कौण्डिन्यꣳ कौण्डिन्यात्कौण्डिन्यꣳ कौण्डिन्याच्चाग्निवेश्याच्च ॥ २ ॥

आग्निवेश्यꣳ सैतवात्सैतवꣳ पाराशर्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो बैजवापायनाद्बैजवापायनः कौशिकायनेꣳ कौशिकायनिर्घृतकौशिकाद्घृतकौशिकꣳ पाराशर्य्यायणात्पाराशर्य्यायणꣳ पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज ऽआत्रेयात् ॥ ३ ॥

आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमोगौतमाद्गौतमो वात्स्याद्वात्स्यꣳ शाण्डिल्याच्छाण्डिल्यꣳ कैशोर्य्यात्काप्यात्कैशोर्य्यꣳ काप्यꣳ कुमारहा-

रितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रव(ः पथः सौभरात्पन्था(ः सौभरो यास्यादाङ्गिरसऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच ऽआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्यो(ः प्राध्वंसनान्मृत्यु(ः प्राध्वंसन(ः प्रध्वंसनात्प्रध्वंसन ऽएकर्षेरेकर्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टि(ः सनारो(ः सनारुः सनातनात्सनातन(ः सनगात्सनग(ः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नम(ः ॥ ४ ॥

अथवंशस्तदिदं वयंशौर्पणाय्याच्छौर्पणाय्यो गौतमाद्गौतमो वात्स्याद्वात्स्यो वात्स्याच्च पाराशर्य्याच्च पाराशर्य्य(ः सांकृत्याच्च भारद्वाजाच्च भारद्वाजऽऔदवाहेश्च शाण्डिल्याच्च शाडिल्यो बैजवापाच्च गौतमाच्च गौतमा बैजवापायनाच्च वैष्टपुरेयाच्च वैष्टपुरेय(ः शाण्डिल्याच्च रौहिणायनाच्च रौहिणायन(ः शौनकाच्च जैवन्तायनाच्च रैभ्याच्च रैभ्य(ः पौतिमाष्यायणाच्च कौण्डिन्यायनाच्च कौण्डिन्यायन(ः कौण्डिन्याभ्यां कौण्डिन्या ऽऔर्णवाभेभ्यऽऔर्णवाभा(ः कौण्डिन्यात्कौण्डिन्य(ः कौण्डिन्यात्कौण्डिन्य(ः कौण्डिन्याच्चाग्निवेश्याच्च ॥ ५ ॥

आग्निवेश्य(ः सैतवात् सैतव(ः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजो बलाकाकौशिकाद्बलाकाकौशिकः काषायणात्काषायण(ः सौकरायणात्सौकरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनि(ः सायकायनात्सायकायन(ः कौशिकायने(ः कौशिकायनिर्घृतकौशिकाद्घृतकौशिकः पाराशर्य्यायणात्पाराशर्य्यायण(ः पाराशर्य्यात्पाराशर्य्यो जातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्चासुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ ६ ॥

आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्य(ः शाण्डिल्याच्छाण्डिल्य(ः कैशोर्य्यात्काप्यात्कैशोर्य्य(ः काप्य(ः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रव(ः पथ(ः सौभरात्पन्था(ः सौभरोऽयास्यादाङ्गिरसादयास्यऽआङ्गिरसऽआभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीचऽआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्यो(ः प्राध्वꣳसनान्मृत्यो(ः प्राध्वꣳसनात्प्रध्वꣳसनऽएकर्षेऽरेकार्षिर्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टि(ः सनारो(ः सनारु(ः सनातनात्सनातन(ः सनगात्सनग(ः परमेष्ठिन(ः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नम(ः ॥ ७ ॥

अथ वꣳशस्तदिदं वयं भारद्वाजीपुत्राद् भारद्वाजीपुत्रो वात्सीमाण्डवीपुत्राद्वात्सीमाण्डवीपुत्र(ः पाराशरीपुत्रात्पाराशरीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौण्डिनीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो गार्गीपुत्राद्गार्गीपुत्रो बाडेयीपुत्राद्बाडेयीपुत्रो मौषिकीपुत्रान्मौषिकीपुत्रो हारिकर्णीपुत्राद्धारिकर्णीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्र(ः पैङ्गीपुत्रात्पैङ्गीपुत्र(ः शौनकीपुत्राच्छौनकीपुत्र(ः ॥ ८ ॥

काश्यपीबालाक्यामाठरीपुत्रात्काश्यपीबालाक्यामाठरीपुत्र(ः कौत्सीपुत्रात्कौत्सीपुत्रो बौधीपुत्राद्बौधीपुत्र(ः शालङ्कायनीपुत्राच्छालङ्कायनीपुत्रो वार्षगणीपुत्राद्वार्षगणीपुत्रो गौतमीपुत्राद्गौतमीपुत्रऽआत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो वात्सीपुत्राद्वात्सीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्र(ः पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रऽ आर्त्तभागीपुत्रादार्त्तभागीपुत्र(ः शौङ्गीपुत्राच्छौङ्गीपुत्र(ः साङ्कृतीपुत्रात्साङ्कृतीपुत्र(ः ॥ ९ ॥

आलम्बीपुत्रादालम्बीपुत्रऽ आलम्बायनीपुत्रादालम्बायनीपुत्रो

जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रꣳ शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रꣳ क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रो वैदभृतीपुत्राद्वैदभृतीपुत्रो भालुकीपुत्राद्भालुकीपुत्रꣳ प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रꣳ साञ्जीवीपुत्रात्साञ्जीवीपुत्रꣳ कार्शकेयीपुत्रात्कार्शकेयीपुत्रः ॥१०॥

प्राश्नीपुत्रादासुरिवासिनꣳ प्राश्नीपुत्र ऽआसुरायणादासुरायण ऽआसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य ऽउद्दालकादुद्दालकोऽरुणादरुण ऽउपवेशेरुपवेशिꣳ कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवाजिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितꣳ कश्यपꣳ शिल्पात्कश्यपाच्छिल्पꣳ कश्यपꣳ कश्यपान्नैध्रुवेꣳ कश्यपो नैध्रुविर्वाचो वागम्भिण्या ऽअम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ११ ॥

वंशोक्ता ऋषयस्तृप्यन्ताम् ।

श्रीवेदपुरुषार्पणमस्तु

आदित्येन सूर्येण प्रोक्तत्वादादित्यानि । वाजिशाखावच्छिन्नानां यजुषां सूर्येणोपदिष्टत्वं याज्ञवल्क्येन प्राप्तत्वं च पुराणेषु प्रसिद्धम् । तथा आदित्यात्मत्वादादित्यानीति निरूपितोऽप्यर्थः(१) । आदित्यो हि वेदात्मा हिरण्यगर्भः प्रसिद्धः । तत एव हिरण्यगर्भः प्रसिद्धः । तत एव हिरण्यगर्भात्सम्प्रदायोक्ततदादिकान्सर्वानेव प्रतिपारम्पर्येणागतोऽयं सम्प्रदाय इति युक्तं यजुषामादित्यत्वम् । कथम्भूतानि यजूंषि शुक्लानि शुद्धानि । यद्वा ब्राह्मणेनामिश्रितमन्त्रात्मकानि इति ॥

समाप्तश्चायं ग्रन्थः ।

(१) एषव्याख्योपसंहारग्रन्थ उदक्षरः प्रतिभाति पुनरुक्तबहुलश्च । अतोऽयम्महतां लेखकृतियथावस्थित एव स्थापितोऽत्रमयेतिविदाङ्कुर्वन्तु विद्वन्तः ॥

# श्रीमल्लिकार्जुनसुप्रभातम्

( स्तोत्र-प्रपत्ति-मङ्गळाशासनसहितम् )







श्रीशैलदेवस्थानेन

प्रकाशितम

१९६१

# श्रीमल्लिकार्जुनसुप्रभातम्

( स्तोत्र-प्रपत्ति-मङ्गलाशासनसहितम् )



श्रीशैलदेवस्थानेन

प्रकाशितम्

१९६१

# दो बातें

भारत में--विशिष्टतया आन्ध्र प्रदेश में ही दो देवता स्वरूप पर्वत, जिनके नाम श्रीशैलम् तथा श्रीगिरि अथवा तिरुमलै हैं, विराजमान हैं। श्रीकार को तामिल भाषा में 'तिरु' बोलते हैं, इसलिए श्रीगिरि तिरुमलै के नाम से प्रसिद्ध हुआ। प्राचीन काल से तिरुपति के दैनंदिन-कैंकर्य में "सुप्रभात" को अत्यन्त महत्त्व प्राप्त है। यह सुप्रभात केवल तिरुपति क्षेत्र का ही अनादिकाल से विशिष्ट लक्षण बना रहा है। सभी भक्तों का अनुभव है कि यह सुप्रभातसंकीर्तन अत्यन्त श्रवणानन्ददायक है; और इसकी मुद्रा दिलों पर टिका रहता है, इस से हृदय सुप्रसन्न हो जाता है, तथा इष्टकार्य सिद्धि भी होती है।

हमारी भावना हुई कि त्रिलिंग देश के सर्वश्रेष्ट श्रीशैल महाक्षेत्र में श्री भ्रमरांबा मल्लिकार्जुन स्वामी के सान्निध्य में भी सुप्रभातस्तुति होना समुचित होगा। तदनुसार श्री हेवलंबी संवत्सर के महाशिवरात्री के दिन से सुप्रभात स्तुति का प्रारंभ हुआ, और वह अब तक बिना किसी रोकटोक के जारी रही है, यह परमेश्वर का संकल्पबल है।

हम ने विज्ञ विद्वानों की राय लेकर श्री वेदव्यासजी कृत स्कान्दपुराण के श्रीशैलखण्ड से, और श्रीशंकर भगवत्पाद कृत

शिवानन्दलहरी आदि ग्रन्थों से कुछ स्तोत्र-श्लोक संकलित करके यह सुप्रभातस्तुति छपवा रहे हैं। प्रतिदिन प्रातःकाल में यह सुप्रभात स्तुति, प्रपत्ति और मंगलाशासन मन्दिर में पढ़े जा रहे हैं।

हर्ष की बात है कि आन्ध्र सरकार के अधिनेता तथा जनता श्रीशैल क्षेत्र की अभिवृद्धि के लिए जीर्णालयोद्धरण निधि का प्रबन्ध करके आन्ध्रपत्रिकाधिपतियों के सहयोग से निधि जमा करने के कृषि में संलग्न हैं। हिन्दू देवस्व तथा धर्मस्व विभाग के मन्त्री जी, तथा कमीशनर श्री पैडि लक्ष्मय्या जी यह किताब पढ़ कर प्रसन्न हुए हैं, और उन्होंने इसे छाप कर सस्ते दाम में वितरण करने की अनुमति दी। भक्त जनता से पार्थना की जाती है कि बच्चे से लेकर बूढे तक हरेक इस किताब को खरीदे और ध्यान से पढे। इस से देवस्थान को प्रोत्साह मिलेगा और साथ ही साथ भक्तों को श्रीशैलेश की कृपा प्राप्त होगी।

श्रीशैलदेवस्थानम्
११ जुलाई १९६१

**पी० सीतारामय्या**
संचालक

श्रीरस्तु

श्रीभ्रमरांबामल्लिकार्जुनस्वामिने नमः

# श्रीमल्लिकार्जुनसुप्रभातम्

प्रातस्स्मरामि गणनाथमनाथबन्धुं
सिन्दूरपूरपरिशोभितगण्डयुग्मम्
उद्दण्डविघ्नपरिखण्डनचण्डदण्ड-
माखण्डलादिसुरनायकबृन्दवन्द्यम् ॥ १

कलाभ्यां चूडालङ्कृत-
शशिकलाभ्यां निजतपः-
फलाभ्यां भक्तेषु
प्रकटितफलाभ्यां भवतु मे
शिवाभ्यामस्तोक-
त्रिभुवनशिवाभ्यां हृदि पुन
र्भवाभ्यामानन्द-
स्फुरदनुभवाभ्यां नतिरियम् ॥ २

नमस्ते नमस्ते महादेव शम्भो
नमस्ते नमस्ते दयापूर्णसिन्धो
नमस्ते नमस्ते प्रसन्नात्मबन्धो
नमस्ते नमस्ते नमस्ते महेश ॥ ३

शश्वच्छ्रीगिरिमूर्धनि त्रिजगतां
रक्षाकृतिं लक्षितां
साक्षदक्षतसत्कटाक्षसरणि-
श्रीमत्सुधावर्षिणीम्
सोमार्धाङ्कितमस्तकां प्रणमतां
निस्सीमसंपत्प्रदां
सुश्लोकां भ्रमराम्बिकां स्मितमुखीं
शम्भोः सखीं त्वां नुमः ॥ ४

मातः प्रसीद सदया भव भव्यशीले
लीलालवाकलितदैत्यकुलापहारे
श्रीचक्रराजनिलये श्रुतिगीतकीर्ते
श्रीशैलनाथदयिते तव सुप्रभातम् ॥ ५

शंम्भो सुरेन्द्रनुत शंकर शूलपाणे
चन्द्रावतंस शिव शर्व पिनाकपाणे
गङ्गाधर क्रतुपते गरुडध्वजाप्त
श्रीमल्लिकार्जुनविभो तव सुप्रभातम् ॥ ६

विश्वेश विश्वजनसेवित विश्वमूर्ते
विश्वम्भर त्रिपुरभेदन विश्वयोने
फालाक्ष भव्यगुण भोगिविभूषणेश
श्रीमल्लिकार्जुनविभो तव सुप्रभातम् ॥ ७

कल्याणरूप करुणाकर कालकण्ठ
कल्पद्रुमप्रसवपूरितकामदायिन्
दुर्नीतिदैत्यदलनोद्यत देवदेव
श्रीमल्लिकार्जुनविभो तव सुप्रभातम् ॥ ८

गौरीमनोहर गणेश्वरसेविताङ्घ्रे
गन्धर्वयक्षसुरकिन्नरगीतकीर्ते
गण्डावलम्बिफणिकुण्डलमण्डितास्य
श्रीमल्लिकार्जुनविभो तव सुप्रभातम् ॥ ९

नागेन्द्रभूषण निरीहित निर्विकार
निर्माय निश्चल निरर्गल नागभेदिन्
नारायणीप्रिय नतेष्टद निर्मलात्मन्
श्रीपर्वताधिप विभो तव सुप्रभातम् ॥ १०

सृष्टं त्वयैव जगदेतदशेषमीश
रक्षाविधिश्च विधिगोचर तावकीनः
संहारशक्तिरपि शंकर किंकरी ते
श्रीशैलशेखरविभो तव सुप्रभातम् ॥ ११

एकस्त्वमेव बहुधा भव भासि लोके
निश्शङ्कधीर्वृषभकेतन मल्लिनाथ
श्रीभ्रामरीप्रिय सुखाश्रय लोकनाथ
श्रीशैलशेखरविभो तव सुप्रभातम् ॥ १२

पातालगाङ्गजलमज्जननिर्मलाङ्गाः
भस्मत्रिपुण्ड्रसमलंकृतफालभागाः
गायन्ति देवमुनिभक्तजना भवन्तं
श्रीमल्लिकार्जुनविभो तव सुप्रभातम् ॥ १३

सारस्वताम्बुयुतभोगवतीश्रिताया:
ब्रह्मेशविष्णुगिरिचुम्बितकृष्णवेण्या:
सोपानमार्गमधिरुह्य भजन्ति भक्ता:
श्रीमल्लिकार्जुनविभो तव सुप्रभातम् ॥ १४

श्रीमल्लिकार्जुनमहेश्वरसुप्रभात-
स्तोत्रं पठन्ति भुवि ये मनुजा: प्रभाते
ते सर्वसौख्यमनुभूय परानवाप्यं
श्रीशाम्भवं पदमवाप्य मुदं लभन्ते ॥ १५

श्रीमल्लिकार्जुनसुप्रभातं समाप्तम्



नमश्शिवाभ्यां नवयौवनाभ्यां
परस्पराश्लिष्टवपुर्धराभ्याम्
नगेन्द्रकन्या वृषकेतनाभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ १६

नमश्शिवाभ्यां वृषवाहनाभ्यां
विरिञ्चिविष्णिवन्द्रसुपूजिताभ्याम्
विभूतिपाटीरविलेपनाभ्यां
नमो नमः शंकरपार्वतीभ्याम् ॥ १७

अनघं जनकं जगतां प्रथमं
वरदं करशूलधरं सुलभम्
करुणाम्बुनिधिं कलुषापहरं
प्रणमामि महेश्वर मेकमहम् ॥ १८

अमलं कमलोद्भवगीतगुणं
शमदं समदासुरनाशकरम्

रमणीयरुचिं कमनीयतनुं
नम साम्बशिवं नतपापहरम् ॥ १९

शिवं शंकरं बन्धुरं सुन्दरेशं
नटेशं गणेशं गिरीशं महेशम्
दिनेशेन्दुनेत्रं सुगात्रं मृडानी-
पतिं श्रीगिरीशं हृदा भावयामि ॥ २०

भृङ्गीच्छानटनोत्कटः करिमद-
ग्राही स्फुरन्माधवा-
ह्लादो नादयुतो महासितवपुः
पञ्चेषुणा चादृतः
सत्पक्षः सुमनोवनेषु स पुनः
साक्षान्मदीये मनो-
राजीवे भ्रमराधिपो विहरतां
श्रीशैलवासी विभुः ॥ २१

सोमोत्तंसः सुरपरिषदामेष जीवातुरीशः
पाशच्छेत्ता पदयुगजुषां फुल्लमल्लीनिकाशः

ध्येयो देवः प्रकटितवधूरूपवामात्मभागः
श्रीशैलाग्रे कलितवसतिर्विश्वरक्षाधुरीणः ॥ २२

एणं पाणौ शिरसि तरुणोल्लासमेणाङ्कखण्डं
पार्श्वे वामे वपुषि तरुणीं दक्षु कारुण्यलीलाम्
भूतिं फाले स्मितमपि मुखे गाङ्गमम्भः कपर्दे
बिभ्रत्प्रेम्णा भुवनमखिलं श्रीगिरीशः स पायात् ॥२३

श्रीशैले स्वर्णशृङ्गे मणिगणरचिते
कल्पवृक्षालिशीते
स्फीते सौवर्णरत्नस्फुरितनवगृहे
दिव्यपीठे शुभार्हे
आसीनः सोमचूडः सकरुणनयनः
साङ्गनः स्मेरवक्त्रः
शम्भुः श्रीभ्रामरीशः प्रकटितविभवो
देवतासार्वभौमः ॥ २४

या योगिबृन्दहृदयाम्बुजराजहंसी
मन्दस्मितस्तुतमुखी मधुकैटभघ्नी

विघ्नान्धकारपटभेदपटीयसी सा
मूर्तिः करोतु कुतुकं भ्रमराम्बिकायाः ॥ २५

कस्तूरीतिलकाञ्चितेन्दुविलस-
त्प्रोद्भासिफालस्थलीं
कर्पूरद्रवमिश्रचूर्णखपुरा-
मोदोल्लसद्वीटिकाम्
लोलापाङ्गतरङ्गितैरधिकृपा-
सारैर्नतानन्दिनीं
श्रीशैलस्थलवासिनीं भगवतीं
श्रीमातरं भावये ॥ २६

राजन्मत्तमरालमन्दगमनां
राजीवपत्रेक्षणां
राजीवप्रभवादिदेवमकुटै
राजत्पदाम्भोरुहाम्
राजीवायतपत्रमण्डितकुचां
राजाधिराजेश्वरीं

श्रीशैलस्थलवासिनीं भगवतीं
श्रीमातरं भावये ॥ २७

श्रीनाथादृतपालितत्रिभुवनां
श्रीचक्रसंचारिणीं
गानासक्तमनोज्ञयौवनलस-
द्गन्धर्वकन्यादृतां
दीनानामतिवेलभाग्यजननीं
दिव्याम्बरालङ्कृतां
श्रीशैलस्थलवासिनीं भगवतीं
श्रीमातरं भावये ॥ २८

उभौ दर्वीकुम्भौ मणिकनकसंभावितगुणौ
दधाना पाणिभ्याममृतरसमृष्टान्नकलितौ
कलाढ्या कल्याणी कलितसदना श्रीगिरिशिर-
स्यसौ भ्रामर्यम्बा रचयतु मदिष्टार्थविभवम् ॥ २९

श्रीमल्लिकार्जुनस्तोत्रं समाप्तम्

जय जय जय शम्भो
जम्भभित्पूर्वदेव-
प्रणतपदसरोजद्वन्द्व
निर्द्वन्द्वबन्धो
जय जय जय जन्म-
स्थेमसंहारकार
प्रणवसगुणमूर्ते
पालयास्मान् प्रपन्नान् ॥ ३०

वधूमुखं वल्गदपाङ्गरेख-
मखण्डितानन्दकरप्रसादम्
विलोकयन् विस्फुरदात्मभावः
स मे गतिः श्रीगिरिसार्वभौमः ॥ ३१

कुरङ्गपाणिः करुणावलोकः
सुरोत्तमश्चन्द्रकलावतंसः

वधूसहायः सकलेष्टदाता
भवत्वसौ श्रीगिरिभाग्यराशिः ॥ ३२

सन्ध्यारम्भविजृम्भितं श्रुतिशिर-
स्थानान्तराधिष्ठितं
सप्रेमभ्रमराभिराममसकृत्-
सद्वासनाशोभितम्
भोगीन्द्राभरणं समस्तसुमनः-
पूज्यं गुणाविष्कृतं
सेवे श्रीगिरिमल्लिकार्जुनमहा-
लिङ्गं शिवालिङ्गितम् ॥ ३३

या मूलं सचराचरस्य जगतः
पुंसः पुराणी सखी
व्यक्तात्मा परिपालनाय जगता-
मासावतारावलिः
दुष्टध्वंससदिष्टदानविधये
नानासनाध्यासिनी

श्रीशैलाग्रनिवासिनी भवतु मे
श्रेयस्करी भ्रामरी ॥ ३४

यत्तेजःपरमाणुरेतदखिलं
नानास्फुरन्नामभिः
भूतं भावि भवच्चराचरजग-
द्भाते बहिश्चान्तरे
सा साक्षाद्भ्रमराम्बिका शिवसखी
श्रीशैलवासोत्सुका
दिश्यादाश्रितलोककल्पलतिका
श्रेयांसि भूयांति नः ॥ ३५

शरणं तरुणेन्दुशेखरः
शरणं मे गिरिराजकन्यका
शरणं पुनरेव तावुभौ
शरणं नान्यदुपैमि दैवतम् ॥ ३६

श्रीमल्लिकार्जुनप्रपत्तिः समाप्ता

# श्रीमल्लिकार्जुनमङ्गलाशासनम्

उमाकान्ताय कान्ताय
कामितार्थप्रदायिने
श्रीगिरीशाय देवाय
मल्लिनाथाय मङ्गलम् ॥ ३७

सर्वमङ्गलरूपाय
श्रीनगेन्द्रनिवासिने
गङ्गाधराय नाथाय
श्रीगिरीशाय मङ्गलम् ॥ ३८

सत्यानन्दस्वरूपाय
नित्यानन्दविधायिने
स्तुत्याय श्रुतिगम्याय
श्रीगिरीशाय मङ्गलम् ॥ ३९

मुक्तिप्रदाय मुख्याय
भक्तानुग्रहकारिणे

सुन्दरेशाय सौम्याय
श्रीगिरीशाय मङ्गलम् ॥ ४०

श्रीशैलं शिखरेश्वरं गणपतिं
श्रीहाटकेशं पुनः
सारङ्गेश्वरबिन्दुतीर्थममलं
घण्टार्कसिद्धेश्वरम्
गंगां श्री भ्रमराम्बिकां गिरिसुता-
मारामवीरेश्वरं
शङ्खं चक्रवराहतीर्थमनिशं
श्रीशैलनाथं भजे ॥ ४१

श्रीमल्लिकार्जुनमङ्गलाशासनं समाप्तम्



